आजीर्णे रसशेषात् रसशेषाजीर्णम् । दिवास्व-
पेन जीर्यात् दिनपाकि । यत्तच्च प्राकृतमिति ।
"तत्रामे गुरुतोत्क्लेद शोथो गण्डाविकूटग । उ-
द्गारश्च यथाभुक्तमविदग्ध प्रवर्त्तते ॥ विष्टब्धे शूल
माध्मान विविधा वातवेदना । मलवाताप्रवृत्तिश्च
स्तम्भो मोहाङ्गपीडनम् ॥ विदग्धे भ्रमतृण्मूर्च्छा पि-
त्ताच्च विविधा रुजः । उद्गारश्च सधूमाम्ल स्वेदो
दाहश्च जायते ॥ रसशेषेऽन्नविद्वेष हृदयाशुद्धि
गौरवे । मूर्च्छा प्रलापो वमथु प्रसेक सदन भ्र-
म । उपद्रवा भवन्त्येते मरण चाप्यजीर्णत ॥"
मा नि । पथ्य यथा—श्लैष्मिके वमन पूर्व्व पैत्तिके
मृदुरेचन । वातिके स्वेदनञ्चाथ यथावस्थ हितञ्च
यत् ॥ नानाप्रकारो व्यायामो दीपनानि लघूनि
च । बहुकालसमुत्पन्ना सूक्ष्मा लोहितशालय ॥
विलेपी लाजमण्डश्च मण्डो मुद्गरस सुरा । एणो व
र्त्तो शशो लाव सूद्रमत्स्याश्च सन्नश ॥ शालिञ्च
शाकं वेत्राग्र बालूक ग्रलमूलक । लशुन ब्रह्म-
चाण्ड नवीनकदलीफलम् ॥ शोभाञ्जन पटोलञ्च
वार्त्ताकु नलदम्बु च । कर्कोटकं कारवल्ल वार्त्तञ्च
महार्द्रकम्॥मारणौ भेषघ्न चाङ्गेरौ सुनिषण्णकं ।
धात्रीफल नागरङ्ग दाडिम यवपर्पटा ॥ अम्लवेत
सजम्बीरमातुलुङ्गानि मात्रक । नवनीत घृत तक्र
सौवीरकतुषोदके ॥ धान्याम्ल कटुतैलञ्च रामठ ल-
वणार्द्रक । यमानी मरिच मेथी धान्यक जीरक
दधि ॥ ताम्बूल तप्तसलिल कटुतिक्तौ रसावपि ।
मन्दाग्नावप्यजीर्णेऽपि पथ्यमेतत्सुखं भवेत् ॥ अ-
पथ्यमाह । विरेचनानि विण्मूत्र वायुवेगविधारण ।
अतिरिक्ताध्यशन आगरी विषमाशनम् रक्तस्रुति
शमीधान्य मत्स्य मांसमुपोदिका । जलपान पिष्ट
कञ्च आम्लव सन्नमालुकम् ॥ कूर्च्चिका मारटं चीरं
किलाटञ्च प्रसानकं । तालास्थि शस्तं तद्वाल खेदन
दुष्टवारि च ॥ विरुद्धासात्म्यपानान्न विष्टम्भीनि गु-
रूणि च । अग्निमान्द्येऽप्यजीर्णे च सर्व्वाणि परिव
र्जयेत् ॥

**अग्निमुखम्** । क्ली । कुसुम्भपुष्पे । कुङ्कुमे ।

**अग्निमुख** । पु । चित्रकवृक्षे । চিতেগাছ ।
भल्लातकवृक्षे । ভেলা গাছ । वि ।

**अग्निमुखचूर्णम्** । अग्निमान्द्ये हितम् । हिङ्गु
१ भ वचा २ भ पिप्पली ३ भ शुण्ठी ४ भ यमा
नी ५ भ हरीतकी ६ भ चित्रक ७ भ कुष्ठ ८
भ । एतद्भागमिति । प्रयोगः । अजीर्णे । भैष ।
सा कौ । अयम् स्वल्प इत्युक्त उदरे । सा.कौ रस र ।

**अग्निमुखताम्रः** । पु । रसोऽयमम्लपित्ताधि-
कारे । "गन्धकेनाचमात्रेण मृततुल्येन निर्म्मिता ।
कज्जली या तथा लिप्य ताम्रपत्रन्तु तत्समम् ॥
अर्द्धनलवरसे सार्द्धे पक्वोदुम्बरपल्लवे । आच्छाद्य
कृष्णलवणैरूर्ध्वेऽप्यपि च मृण्मये । अम्लसूपागत
भार्त तस्मिद्ध भवयेन्नर । शाणार्कं रक्तिकाद्वया
मासमात्र प्रयोगत । अम्लपित्त चय शूल ज्वरपित्त
सुदारुणम् । सप्तरात्रप्रयोगेण शरीर निर्म्मल
भवेत ॥ रस र. । पञ्चलवणैरिति प्रयोगा ।

**अग्निमुखमण्डूरम्** । क्ली । शोथाधिकारे ।
मण्डूरस्य १२ प गोमूत्रस्य १२श । प्रक्षेपार्थे—पञ्च
कोल देवदारु मस्तक त्रिकटु त्रिफला विडङ्गञ्च ।
प्रत्येक चूर्णं १ प । मात्रा १तो । अनु तक्रम् । भैष ।

**अग्निमुखरसः** । पु । रसोऽय शूलरोगोपश-
मन । अत्र पारदगन्धकौ समौ पारदार्द्धे मृतता-
म्रम्, एकत्र शाकपत्ररसे (সেগুন) चौरिणीर
सैश्च दिनैक मर्द्दयित्वा लघुपुटेन पचेत् । अनुपा
यमान्यादिचूर्णसुखोदकेन पेयम् । रस र । द्वितीयो
ऽपि शूलाधिकारे । अयञ्च रसरत्नाकरधृतेन प्राय
तुल्य एव । अत्र बलि गन्ध । गगनम् अभ्रं, अर्क
ताम्रं । वेतसाम्लम् अम्लवेतसं । सवरमिति विष
त्वया सहितम् । भुजगवल्ली पर्णं । सलिल बालकं
(বালা) । कनक धुस्तूर । पटुगण पञ्चलवणा
नि । वज्री स्नुही । मुष्टि घण्टापाटलायां कटी
वा । रसा स २८२ योग । रसरत्नाकरधृते द्वि
तीये । मुण्डितिका मुण्डोरी । महाराष्ट्री मत्स्याक्षि
वामुनहाटी ।

**अग्निमुखलवणम्** । क्ली । अग्निमान्द्ये ।
अत्र—चित्रकमूल त्रिफला, दन्तीमूल त्रिवृन्मूल
कुष्ठम् । एषा प्रत्येक चूर्णं समं, सर्व्वसमं सैन्धवं
एकत्र स्नुहीक्षीरे सभाव्य तत्काण्डमध्ये दत्त्वा
पङ्केनालिप्य गुदावग्नौ विपचेत् । भैष ।

**अग्निमुखलौह** । पुं, क्ली । अर्शसि हित ।
त्रिवृन्मूलादीना ८ पलम् । वारि द्रोणमितं (१६
श )पादावशिष्ट क्वाथ कर्त्तव्य । अथ लौहपात्रे
२४प घृतमथीकृत्य तत्र लौहस्य १२प दत्त्वा क्वा
थेन तद्द पचेत् । घनीभूते चवनार्द्ध विडङ्गचूर्ण

३प त्रिकटुचूर्णस्य प्रत्येक २प त्रिफलाचूर्णस्य च ४प शिलाजतो १प मधुन २४प शर्करायाः २४प मिश्रयेत्। रसेन्द्र चि। चक्रमते त्रिफला दीनां प्रत्येक पलाष्टक ६४श जले पक्का पादशिष्ट क्वाथो विधेय। अत्र अजभण्टा भूम्यामलकी। ज टेति पाठे मूलकम्। अथ विडङ्गस्य पलत्रय व्योषस्य च प्रत्येक षट् तोलक कल्कीकृत्य तत्, तथा स्वर्णमाक्षिकेण मन शिलया विकङ्कतेन वा जारित लौहचूर्ण ११प घृतश्च २४प तस्मिन् क्वाथे दत्त्वा एकत्र पाच्यम्। घनीभूते शीतले च शर्करायाः मधुनश्च शरावत्रय मिश्रयेत्। घृतेन पे यम्। च द भग्न चि.। अग्निलौह पश्य।

**अग्निमुखी** । स्त्री। भल्लातक्याम्। ভেলা। मी खचतुष्क। रत्ना। च मू ४अ मेदनीये। लाङ्गलि कायाम्, ईशलाङ्गुलिया। मी खचतुष्क भा पू १भ अने व। कण्टे। काँचड़ा। रा नि व ४। भा पू ह व। गुडूच्याम्।

**अग्निरजा** / **अग्निरज्जु** । पु। इन्द्रगोपकीटे। আষাঢে পোকা। ह च ४। An insect of scarlet color

**अग्निरस** । पु। राजयक्ष्मणि हित। अन्यत्र चयकासे हित। तयो प्रथम —वज्रहाटकसूता ना भक्षैक द्विचिपट क्रमात्। त्रिकण्टकारसैर्भाव्य दिनान्ते तद्विचूर्णयेत्। गुञ्जामात्र प्रयोक्तव्य सज्वरे राजयक्ष्मणि। कुष्ठीमूलस्य जम्बीरद्रवे स्वादनुपा नकम। खादेत् विनिष्कम्। हीरकस्य १भ स्वर्णस्य २भ रसस्य ३भ गन्धकस्य च ६भ। द्वि तीय —शुद्धसूत द्विधा गन्धं कुर्यात्खल्वेन कज्जलीं। तयो सम तीक्ष्णचूर्णं मर्द्दयेत् कतकद्रवे। द्वियामान्ते कृत गोलं ताम्रपात्र विनिक्षिपेत्। आच्छाद्य रण्डपत्रैश्च यामार्द्धेऽत्युष्णता भवेत्। धान्यराशौ न्य सेत् पश्चात् दिवयामान्ते समुद्धरेत्। सपेष्य गालय द्वस्त्रे सत्यो वारितरं भवेत्। त्रिकटु त्रिफला चैला जातीफललवङ्गकम्। एषाच नवभागानां सम पूर्व रसो भवेत्। संचूर्ण्यालोडयेत् चौद्रैभक्ष्य निष्क द्वयम्। चयमग्निरसो नाम्ना चयकासनिकृन्त न। इन्द्रवारुणिकामूल भक्षकृष्णतिलै सह। भ चयेत् चयकासार्तौ निष्कमात्र प्रमाणयं। पारदस्य १भ गन्धकस्य २भ। द्वयो सम तीक्ष्णलौहचूर्णं निर्मलीफलरसेन कन्यारसेन वा. मर्द्दयेत् अनय गोनकल्का एरण्डपत्रैराच्छाद्य ताम्रपात्रे निवेश्य च धान्यराशौ प्रहरद्वयं अष्टरात्र वा न्यसेत्। पश्चौ द्रूल गोलित जलवद्भवेत्। त्रिकट्वादिचूर्णे मिलित पूर्वचूर्णसम (नवद्रव्यसकस्भ) ग्राह्यम्। रस र। भावप्रकाशे कतकद्रवे —कन्याद्रवे। तथा दि यामान्त —अष्टरात्रात् नवभागैर्निमितं। भा पाठ।

**अग्निरुहा** । स्त्री। मासरोहिण्याम्। रा नि. व १२।

**अग्निरोहिणी** । स्त्री। मासरोहिण्याम्। गॉ° मनोहिणी। वा उ ३१अ। तन्नामकक्षुद्ररोगवि शेषे। सा त्रिदोषजा। पित्तोल्वणैर्मले ज्वरवत्° मासदारणा कक्षाप्रदेशेषु येऽग्निसदृशा स्फोटा जायन्ते साऽग्निरोहिणीत्युच्यते। "सर्वे पित्तोल्वणैः स्फोटा ज्वरिणी मांसदारणा। कक्षाभागेषु जायन्ते येऽग्न्याभा साऽग्निरोहिणी। पञ्चाहात्सप्तरात्राद्वा पक्षाद्वा हन्ति जीवितं"मिति॥ एतस्य चिकित्सितं वा उ ३२अ मन्यम्।

**अग्निलौह:** । पु। अग्निमुखापरनामकोऽयमौषधोऽयं रस। यथा—'त्रिवृच्चित्रकनिर्गुण्डीस्नुहीमुण्डिति काञ्भ्का। प्रत्येकशोऽष्टपलिका जलद्रोणे विपा चयेत्॥ पलत्रय विडङ्गस्य व्योषं कर्षत्रय पृथक्। त्रिफलाया पल पञ्च शिलाजतुपलं न्यसेत्॥ दि व्यौषधिहतस्यापि वैकङ्कतहतस्य वा। पलद्वादशक देय रुक्मलौहस्य चूर्णितम्॥ घृताचतुर्विंशतिभि र्मधुशर्करयोरपि। घनीभूते च शीते च दापयेद वतारिते। एतदग्निमुख नाम दुर्नामान्तकर. प र॥ मुण्डितिका मुण्डीरी। अजभण्टा भूम्या मलकी।' 'जितपतीतं' इत्येतापि माधव्यपाठः।' क्वाथ पादावशिष्ट। पाकावतारणकाले प्रचे पाय्यं विडङ्गादीनां चूर्णम्। त्रिफलाया मिलिता पञ्चपलानि। शिलाजतु १प (शिवागुडिकोक्तरीत्या साधितम्)। दिव्यौषधि स्वर्णमाक्षिक मन शिला। वैकङ्कती वनपालङ्क। रुक्मलौहं वचपाण्ड्वादि त त्र रसायनोक्तरीत्या जारणपुटनादिना सूक्ष्मचूर्णितं। घृतात् चतुर्विंशतिपलानि मधुशर्करयोरपि प्रत्येकं चतुर्विंशति। तत्पूते लौहं दत्त्वा पश्चात् शर्करा सहित क्वाथ दत्त्वा पाक कार्य। अवतारणसमये विडङ्गादिचूर्णप्रक्षेप। शीते पर्युषित च मधु देय। रस र.अर्श चि।

**अग्निवल्ल.** । पु। भल्लातकवृक्षे। ভেলাগাছ।

मद व १। चित्रकक्षुपे। চিতে গাছ। [त्रौषधी।

**अग्निवती** । स्त्री। आगिया इति लोकप्रसि

**अग्निवर्द्धकः (नः)** 1 त्रि। अग्न्युद्दीपके, मरिचादौ। आग्नेयद्रव्यमात्रे। अग्निवृद्धिकर। राज।

**अग्निवलवृद्धिः** । स्त्री। जठरानलस्य वृद्धौ। च.द अर्श चि।

**अग्निवल्लभः** । पुं। Resin, सर्जयौनिर्यास विशेषे। राल। धूना। हे च। रा नि व ८१२। मद व.३। See सर्ज।

**अग्निवल्ली** । स्त्री। लताविशेषे। र सा सं अभिन्यासज्व स्वच्छन्दनायकरसे।

**अग्निवाहः (हुः)** । पुं। धूमे। हे च ४का।

**अग्निविकारः** । पु। तन्नामकरोगभेदे। स चतुर्भेद। शार्ङ्ग पू ७ष। See अग्नि।

**अग्निविवर्द्धनः** । त्रि। यमान्यादौ।

**अग्निविसर्पः** । पु। See अग्निवीसर्प।

**अग्निवीजम्** । क्ली। सुवर्णे। त्रिका।

**अग्निवीजः** । पु। अग्निमन्थे।

**अग्निवीर्य्यम्** । क्ली। स्वर्णे। रा नि व ३।

**अग्निवीसर्पः** । पु।(Pain from a boil) विसर्पभेदे—यत्र सर्व्वाङ्ग दीप्ताङ्गाराकीर्णमिव भवति, शरीरे च य य देश प्रति चलति स स देश शान्ताङ्गारवदसितो नीलो रक्तो वा भवति। तथा झटिति अग्निदग्ध इव स्फोटैराचितो भवति। चलत्वाच्चाशु सम्माना निद्रानाशश्च भवति। लक्षण—वातपित्तज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः। अस्थिभेदाग्निसदनतमकारोचकैर्युतः। करोति सर्व्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत्। य य देश विसर्पश्च विसर्पति भवेत्स स। शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते। अग्निदग्धइव स्फोटैः शीघ्रगत्वाद्द्रुतश्च स। मर्म्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः। व्यथेताङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत्। हिक्काञ्च स गतोऽवस्थामीदृशीं लभते न ना। क्वचिच्छमारतिग्रस्तो भूमिशय्यासनादिषु। चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम्। दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते। मा.नि.१२ष.।

**अग्निवृद्धिः** । स्त्री। अग्निदीप्तौ। क्षुधावृद्धि।

**अग्निशिखम्** । क्ली। सुवर्णे। रा नि व.१३। Safflower (Carthamus tinctorius) कुसुम्भपुष्पे। কুসুমফুল। Saffron (Crocus sativus) कुङ्कुमे। भा.पू.२भ.। मद व २।

**अग्निशिखः** । पु। कुङ्कुमवृक्षे। কুঙ্কুমগাছ। रा.नि व १२। लाङ्गलिकावृक्षे। বিষলাঙ্গলিয়া গাছ। रत्ना। कुसुम्भवृक्षे। কুসুম গাছ। श र.। पूतिकरञ्जे। नाटा। शरणे। ওল গাছ। प मु।

**अग्निशिखा** । स्त्री। (Gloriosa superba) लाङ्गलिकौषधौ। বিষলাঙ্গলিয়া। हि करिहारी। भा पू १भ गु व।

**अग्निशेखरम्** । क्ली पु। कुङ्कुमे। रा नि. व १२। कुसुम्भपुष्पे। लाङ्गलीवृक्षे। विशल्यानाम शाकभट्टे। [२८ष।

**अग्निष्टोमः** । पु। सोमलतायाम्। सु चि

**अग्निसंस्कारः** । पु। अग्निदाहकर्म्मणि।

**अग्निसंस्पर्शा** । स्त्री। पर्पटीनाम सुगन्धद्रव्ये। सा च उत्तरदेशे प्रसिद्धा। भा पू १भ क व.।

**अग्निसन्दीपनः** । त्रि। अग्निवर्द्धके। क्षुधावर्द्धक। Increasing appetite

**अग्निसन्दीपनरसः** । पु। अग्निमान्द्ये रस। यथा—पञ्चकोल मरिच, पञ्चलवण, यवक्षार, टङ्कण, सर्जिक्षार, जीरक, कृष्णजीरक, यमानी, वचा, मधुरिका, हिङ्गु, चित्रक, जातीफल, कुष्ठ, जातीकोष, त्रिजातक, तिन्तिडीलभस्म अपामार्गभस्म, विष, गन्धक, पारद, अभ्र, लौह, रङ्ग, लवङ्ग, हरीतकी चैतेषां प्रत्येकमेकैको भाग अम्लवेतसस्य १भ शङ्खभस्मनश्च ४भ। भैष।

**अग्निसम्भवः** । पु। (Wild saffron) अरण्यकुसुम्भवृक्षे। বনকুসুম। रा नि व ४। अग्निजारवृक्षे। रा नि व ६।

**अग्निसहायः** । पु। वन्यपारावते। घूघु। म कोकिला पक्षी। रा नि व १९। वायौ।

**अग्निसादः** । पु। अग्निमान्द्ये। मन्दाग्नि। सा को ज्व चि। [अर्श चि।

**अग्निसाध्यः** । त्रि। अग्निदाहसाध्ये। च द.

**अग्निसारम्** । क्ली। (A sort of collyr-

um.) रसाञ्जने। रा नि व १३।

**अग्निसारा** । स्त्री। फलशून्यशाखायाम्। रा नि व २। मञ्जर्याम्।

**अग्निसुन्दररसः** । पुं। अजीर्णाधिकारे रसः। यथा—टङ्कणं भागमेकञ्च मरिचञ्च द्विभागिकम्। आर्द्रकस्य रसेनैव भावना चात्र दीयते ॥ अनु लवङ्गम्। मधोगा.।

**अग्निसेवनम्** । क्ली। अग्निसेवायाम्। আগুন পোওয়ান। गुणा.—शीतवातस्तम्भकफवेपघ्नं रक्तपित्तकरम् आमाभिष्यन्दपाचनञ्च। मद १३व.।

**अग्निहानिः** । पुं। अग्निमान्द्ये। वा नि १२अ।

**अग्न्या** । स्त्री। तित्तिरपक्षिणि। गवि। इला.।

**अग्न्याशयः** । पुं। पक्वाशये। পাকাশয়।

**अग्रम्** । क्ली। पलपरिमाणे। "परिमाणे पलस्य च"। मे रद्विकं। इत्यादयो।

**अग्रकाण्डः** । पुं। काण्डाग्रे।

**अग्रजः** । पुं। काकविशेषे। भासपक्षिणि।

**अग्रजङ्घा** । स्त्री। The fore part of the leg. जङ्घाग्रभागे। हे.च। [जङ्घा।

**अग्रधान्यम्** । क्ली। धान्यविशेषे। जनार। वा-

**अग्रपर्णी** । स्त्री। A plant cowhage गुकशिम्ब्याम्। আলাকুশী। प मु। See आत्मगुप्ता।

**अग्रपाणिः** । पुं। हस्ताग्रे।

**अग्रपुष्पः** । पुं। वेतसवृक्षे। বেতগাছ। प मु।

**अग्रमांसम्** । क्ली। The heart. हृदये। बुक्कायाम्। हृदयान्तर्गतमांसवृद्धिरूपरोगविशेषे। অগ্রমাস। सु शा।

**अग्रलोध्यः** । पुं। चिञ्चोटकक्षुपे। চেঁচ্‌কো, চিকোড়মূল। गुणा:—गुरुपाक,शीतलः, अजीर्णकरश्च। राज। [०।

**अग्रलोहिता** । स्त्री। चिल्लीशाके। रा नि व

**अग्रबीजः** । पुं। बीजाग्रप्रभवे। यथा कुरुण्टादिः। हे च। A viviparous plant as the Gomphrena globosa &c.

**अग्रबीहिः** । स्त्री। मद्यानिकायाम्। मद्याग्रदान। रमा।

**अग्रहायणः** । पुं। मार्गशीर्षमासे। অগ্‌হান মাস। [गौडे। म च।

**अग्रिमा** । स्त्री। लवलीवृक्षे। লোণা গাছ इति

**अग्रुः** । स्त्री। अङ्गुली। আঙুল।

**अग्रा** । स्त्री। त्रिफलायाम्।

**अघनम्** । क्ली। दमनि। दहे। इला।

**अघविषः** । पुं। सर्पे।

**अघोरनृसिंहरसः** । पुं। सान्निपातिकज्वरे रसः। See घोरनृसिंहरस।

**अङ्कः** । पुं। शरीरावयवे। কোল। रा नि. व १८। वा चि ७अ। चिह्ने, रेखायाम्। पापे। दु.खे। मे कद्विकम्। [प मु।

**अङ्कनः** । पुं। अङ्कोटवृक्षे। আঁকোড় গাছ।

**अङ्कपादम्** । क्ली। खार्गेपादवयवविशेषे। वा. सू १८अ।

**अङ्कपाली** । स्त्री। धात्र्याम्। धात्री। वेदिकाख्यगन्धद्रव्यविशेषे। "धात्रीवेदिकयोरपि।" मे. लचतुष्क। आलिङ्गने। मे.।

**अङ्कलेख्यः** । पु। चिञ्चोटवृक्षे। চেঁচ্‌কোমূল।

**अङ्कलोद्यः** । पुं। चिञ्चोटकक्षुपे। চেঁচ্‌কো। See अग्रलोध्य.।

**अङ्कुरः** । पुं। प्ररोहे। পোক। वा उ ३९अ। जले। रुधिरे। लोम्नि। मुकुले। फले। सर्वत्र मे रत्रिकं। अभिनवोद्भिदि। मे।

**अङ्कुशः** । पुं। सृणौ। ডাঙশ। इला।

**अङ्कूरः** । पुं। अङ्कुरे। हे च ४का।

**अङ्कोटः(ठः)** । पुं। अङ्कोटवृक्षे। रमा। (सु नि व ३६)। भा पू १भ गु व।

**अङ्कोटकः** । पुं। (Alangium Hexapetalum) स्वनामख्यातवृक्षे। আঁকোড় গাছ, ধলা আঁকৈড়। हिं ढेरा। भा। रा नि व ८। अस्य गुणा:—कटु', तीक्ष्ण', स्निग्ध, उष्ण', तुवर', लघुः रेचन., क्रमिशूलामशोफग्रहविषघ्नश्च। तत्फलगुणा:—शीतलं, स्वादु, श्लेष्मघ्नं, वृष्यं, गुरु, बल्यं, विरेचनं, वातपित्तदाहक्षयास्रजित्। मद व १। विषभूतादिदोषघ्नम् वातकफहरः ग्रहिकृच। रा

; नि व. ८ । च द च.सा चि ।

अङ्कोठवटकः । पुं । रक्तातिसारे देय वटके । यथा—पलमङ्कोठमूलस्य पाठा दार्व्वीच तत् स माम् । पिष्टा तण्डुलतोयेन वटकानक्षसम्मितान् ॥ छायाशुष्कांश्च तान् कुर्य्यात् तैकैक तण्डुलाम्बुना । पेषयित्वा प्रदद्यात्त पानाय ॥ भा म ख ।

अङ्कोलः । पु । अङ्कोटवृक्षे । আঁকোড়গাছ। रवा. । भा म.ख १म अतिसा चि.। "अङ्कोलमूल कल्क ।" वा.उ ३८अ ।

अङ्कोलकः । पु । अङ्कोटवृक्षे । কাঁক্‌রোল। ওকড়া इति च र.सा स ।

अङ्कोलफलसङ्काशः । पु। फलविशेषे । পেস্তা इति लोके ।

अङ्कोलतैलम् । क्ली । तन्नामकफलवीजतैले । আঁকোড়বীজের তৈল। यथा —"अङ्कोलतैल वातघ्नमभ्यङ्गात्सयुतापह । कफनाशकर मोक्त पूर्व्वैर्वैद्यैर्महर्षिभि ॥" वै नि घ ।

अङ्कोलः । पु । देवदारुणि । रा नि व २३। वा उ ३८अ. । [मद व १ ।

अङ्कोल्लक. । पुं। अङ्कोटवृक्षे । আঁকোড়গাছ।

अङ्कोल्लसारः । पु । मालवप्रसिद्ध स्थावरविष प्रभेदे । A kind of poison दे.च.४का.।

अङ्गम् । क्ली । बोले । সুগন্ধ বোল । रा नि व ६ । शरीरे । शरीरावयवे । रा नि व १८ । उपस र्जनभूते । दे.च नानार्थ । [वा.नि १२अ ।

अङ्गगौरवम् । क्ली शरीरगुरुत्वे । গা ভার ।

अङ्गग्रहः । पु । अङ्गवेदनायाम् । গা ব্যথা। । वा नि १६अ ।

अङ्गग्लानिः । स्त्री । Langour. देहजाड्ये । শরীরের জড়তা। वा चि २२अ ।

अङ्गघातः । पु । अङ्गाघाते । গায়েলাগা । Bodily pain

अङ्गचय. । पु। गुदवृषणयोर्मध्यभागे । वै नि घ ।

अङ्गचेष्टा । स्त्री । अङ्गचालने । অঙ্গচালনা। वा नि.१५अ ।

अङ्गजम् । क्ली । रक्ते । मदे । कौलचिक ।

अङ्गजः । पु। केशे ।रोगे मांसधातौ मदे ।वि।

अङ्गज्वरः । पुं । राजयक्ष्मणि । যক্ষ্মা রোগ ।

अङ्गतापः । पु । शरीरोष्णतायाम् । গায়ের তাপ ।

अङ्गदरणम् । क्ली । पित्तजन्यपीडायाम् ।

अङ्गदाह. । पु । गात्रदाहे । গা জ্বালা।

अङ्गना । स्त्री। नार्य्याम् नलिका। प्रियङ्गौ। भा।

अङ्गनाप्रियः । पु । अशोकतरौ । र.मा. । दुमोत्पले । ওলট্ কম্বল । प स. ।

अङ्गनाप्रिया । स्त्री । प्रियङ्गुनामगन्धद्रव्ये । भा पू.१म क.व ।

अङ्गपाकता । स्त्री । पित्तजज्वररोगे । গায়ে ফোঁড়ার ন্যায় গাত্র বেদনা।

अङ्गपीडा । स्त्री । वायुजज्वररोगे । গা ব্যথা।

अङ्गपूजितः । पु । अश्वतरे । मद व ११।

अङ्गप्रसारणम् । क्ली । कायविस्तारे । গা হাত মেলান। वा नि ४अ ।

अङ्गवल्ली । स्त्री । चिवली । वड ।

अङ्गभङ्ग. । पु । शरीरस्य भङ्गे । গা ভাঙ্গা। वा उ.२अ ।गुदवृषणयोर्मध्यभागे । रोगे । वायुरोगे।

अङ्गभेदः । पु। वायुरोगे । वायुजन्य গাত্রভঙ্গ।

अङ्गमर्द्दः । पु । गात्रवेदनायाम् । वा सू ४अ ।

अङ्गमर्द्दनम् । क्ली। गात्रपीडने। গা কুটনো।

अङ्गमेजयत्वम् । क्ली।अङ्गकम्पने। গা কাঁপা।

अङ्गरक्तः । पु । कम्पिल्लके । কমলা গুঁড়ি । अम । [मादि । গাত্ররঞ্জন দ্রব্য।

अङ्गरागः । पु । अङ्गलेपनद्रव्ये । यथा—कुङ्कु

अङ्गरुहम् । क्ली । रोमणि । লোম।

अङ्गरुहा । स्त्री । लोम्नि । केशे । চুন।

अङ्गलाघवम् । क्ली । कायलघुत्वे । গা হাল্কা। वा उ १८अ।

अङ्गलेपः । पु । चन्दनादिद्रव्ये ।

अङ्गलोद्यः । पु । Ginger (Amomum zinziber) आर्द्रके । আদা। चिर्भोटवृक्षे ।

**अङ्गव'** । पु । शुष्कफले । शुक्रफल । श च ।

**अङ्गवस्त्रोत्था** । स्त्री ।श्वेतवमाभ्यामूर्णवान ।

**अङ्गविक्षति.** । पु। Apoplexy. अपस्मार रोगे । रा नि व २० । [गि । भा ।

**अङ्गविभ्रम..** । पु । कायग्रंथिन्यरूपवायुजरो

**अङ्गविक्षेपः** । पु । अङ्गहारे । अङ्गचालने । वा ज २थ ।

**अङ्गशूलम्** । क्ली । गात्रतोदे । गां शूलन ।

**अङ्गशोथः** । पु । कायशोफे । गात्र फोला ।

**अङ्गशोष.** । पु । वायुजरोगे । (वा ज १थ ।

**अङ्गशोषणम्** । क्ली । अङ्गस्य शुष्कतायाम् ।

**अङ्गसङ्गम्** । क्ली । मैथुने । [१२ थ ।

**अङ्गसदनम्** । क्ली । शरीरावसादे । वा नि

**अङ्गसादः** । पु । अवसादे । हारा ।

**अङ्गसुन्दरः** । पु। दद्रुघ्नवृक्षे । दादमर्दन । अम ।

**अङ्गसुप्तिः** । स्त्री । कायस्पर्शाज्ञतायाम् । शरीरस्वापे । गात्रेर असाडता । [रत्ना ।

**अङ्गसेन.** । पु । अगस्तिद्रुमे । वाकस गाछ ।

**अङ्गहर्षः** । पु । रोमाञ्चे । वा नि २ थ. ।

**अङ्गहारः** । पु । अङ्गचालने ।

**अङ्गहीन.** । त्रि । विकलाङ्गे, काणादौ ।

**अङ्गार** । पु । निर्धूमाग्निपिण्डे । आङ्गार । "अंशुत काष्ठसम्भूतोऽङ्गार.।" वा मू ६थ चक्ष । अङ्गारपूर्णपात्रे । हिमा । कुरुण्टकवृक्षे । झाँटीविशेष । पीतवर्ण अम्लान वृक्ष । रत्ना ।

**अङ्गारकः** । पु । Yellow or white amaranth कुरण्टके । झाँटीजाति । अङ्गारे । आङ्गार । भेकपत्रवृक्ष । भृङ्गराजे । भीमराज । रा.नि व ४ । भा पू १भ गु व ।

**अङ्गारकतैलम्** । क्ली । स्वनामख्यातविषमज्वरघ्नतैलविशेषे । यथा—मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी । बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी । आरनालाढकेनैव तैलप्रस्थं विपाचयेत् । तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम् ॥ इति र स र । पाकप्रकार.—तिलतैलं ४ श मू र्वादि ४१ श । काञ्जिकं १६श । प्रथम काञ्जिकेन पक्वा पश्चात् कल्कद्रव्यच पक्वा समापयेत् । च द । इन्द्रवारुणी = राखाल शशामूल । अन्यत् प्रयोगे हितम् । मूर्च्छिततिलतैल ४ श वबरी = वावुई तुलसी १२॥ श वारि ६४ श पादशिष्टक्वाथेन वर्ब र्यादीनां १श कल्केन सम पाच्यम् । च द,ज्वरचि । प्रोष्ठिका = मत्स्यिका । [नि व १२ ।

**अङ्गारकमणिः** । पु । Coral प्रवाले । रा.

**अङ्गारककर्कटी** । स्त्री । रोटिकायाम् । रुटी । अगाकडी रोटी लिटी इति हिन्दी । यथा—शुष्क गोधूमचूर्णन्तु साम्बु गाढं विमर्दयेत् । विधाय वटकाकारं निर्धूमेऽग्नौ शनै पचेत् ॥ अङ्गारकर्कटी ज्ञेया बृंहणी शुक्रला लघु । दीपनी कफकृद्बल्या पीनसश्वासकासजित् ॥ वैद्य नि । भा ।

**अङ्गारकुष्ठका** । स्त्री । हितावल्याम् ।

**अङ्गारधूप.** । पु । अङ्गारेण यो धूप हिन्दी प्रसिद्ध । वा चि ८ थ ।

**अङ्गारपरिपाचितम्** । क्ली । (Roasted food) शूलादिपक्वमांसे । त्रि । अङ्गारपक्वे ।

**अङ्गारपर्णी** । स्त्री भार्ग्यां।वामनहाटी।र.सा स ।

**अङ्गार(क)पुष्प.** । पु । (Ingua) जीवपुत्र द्रुमे । इङ्गुदी । जियापुता इति लोके । श र. ।

**अङ्गारपूरिका** । स्त्री । रोटके । रुटी ।

**अङ्गारमञ्जरी** / **अङ्गारमञ्जी** स्त्री। A species of Bonduc or Bonducella. करञ्जविशेषे । श र. । महाकरञ्जे । डहर करञ्ज । रा नि व ८ ।

**अङ्गारमणिः** । पु प्रवाले ।

**अङ्गारवर्णी** । स्त्री । भार्ग्याम् । वामनहाटी ।

**अङ्गारवल्लरी** । स्त्री । (Oviedo verticillata) करञ्जविशेषे । नाटाकरञ्ज इति भाषा ।

**अङ्गारवल्ली** । स्त्री । महाकरञ्जे,रक्तकरञ्जे च । भार्ग्याम् । वा मू १५ थ । सुरसादि । भा पू १भ । गुञ्जायाम् । कूँच । भा पू धनेव । कटुकरञ्जे । करघरञ्जाम् । रक्तगुञ्जायाम् । भा पू १भ गु व ।

**अङ्गारवृक्षः** । पु । इङ्गुदीवृक्षे । भा पू १भ. वटा. । रत्ना । पुत्रजीवया इति च ।

**अङ्गारवेणु.** । पु । रक्तवर्णवंशविशेषे ।

**अङ्गारशकटी** । स्त्री । सुमग्राम् । চুলো ।

**अङ्गारा** । स्त्री । हिताबल्याम् । इङ्गुदीवृचे । प सु. । ভিয়াপুতা ।

**अङ्गारिका** । स्त्री । The stalk of the sugarcane. इक्षुकाण्डे। আকগাছ । (Butea frondosa) किंशककोरके । পলাশকলি । मे काचतुष्कं।

**अङ्गारितम्** । क्ली । The early blossom of किंशुक । पलाशकलिकोद्गमे । ছারা।

**अङ्गारिता** । स्त्री । लतामात्रे । सुमग्राम् । मे, तचतुष्कं ।

**अङ्गिरः** । पुं । तित्तिरपक्षिणि ।

**अङ्गुणः** । पुं । वार्त्ताकौ । বেগুন । श.र. ।

**अङ्गुरिः(री)** । स्त्री । अङ्गुल्यां । पाणिपादाङ्गुल्याम्। হাত পায়ের আঙুল। श.टी. ।

**अङ्गुलः** } पुं, स्त्री । The thumb. करपा-
**अङ्गुलिः** } दशाखायां । আঙুল। गजकर्णिका ग्रचे। হাতিশুঁড়ে। करिशुण्डायभागे। हे.च. । वृद्धाङ्गुष्ठे। च । रा.नि.व.१८ । अथाङ्गुष्ठप्रदेशिन्यौ मध्यमानामिका तथा । कनिष्ठा चेति पञ्च स्युः क्रमेणाङ्गुलयः स्मृताः ॥ रा नि.व.१८ ।

**अङ्गुलिकण्टकः** । पुं । नखे ।

**अङ्गुलित्राणकम्** । क्ली । तन्नामकयन्त्रे । আঙুটী । वा.म २१४. ।

**अङ्गुलिपञ्चकम्** । क्ली । कराङ्गुलिपञ्चकं—यथा, अङ्गुष्ठतर्जनीमध्यमानामिकाकनिष्ठम् ।

**अङ्गुलिपर्व्व** । क्ली । अङ्गुलिग्रन्थौ ।

**अङ्गुलिफला** । स्त्री । श्वेतनिष्पावे । रा.नि. ।

**अङ्गुलिमानम्** । क्ली । अङ्गुल्या योजनपर्य्यन्तमाने । ८ यवैः—१अङ्गुलिः । २४ अङ्गुलिभिः—१ हस्तः । ४ हस्तैः—१ दण्डः । २००० दण्डैः—१ क्रोशः । ४ क्रोशैः—१ योजनम् । इति । [का. ।

**अङ्गुलिमोटनम्** । अङ्गुलिमर्द्दनशब्दे । चि-

**अङ्गुलिसंज्ञा** । स्त्री । यथाय्यां । যাউ । [१८ ।

**अङ्गुलिसम्भूतः** । पुं । नखे । नथ । रा.नि.व

[illegible]ी । स्त्री । गजकर्णिकायाम् । मे सचिकं ।

**अङ्गुषः** । पुं । नकुले । নেউল । बाणे । जीव ।

**अङ्गुष्ठः** । पुं । वृद्धाङ्गुली । বুড়ো আঙুল । रा नि व १८ । [म्लालजी ।

**अङ्घ्रालजी** । स्त्री । अम्लालजीरोगे । See अ-

**अङ्घ्रिः** । पुं । द्रुममूले । रा.नि.व.१ । अम. । पादे । रा नि.व १८ ।

**अङ्घ्रिग्रन्थिकम्** । क्ली । पिप्पलीमूले ।

**अङ्घ्रिजिह्विकः** । पुं । दमनकवृचे ।

**अङ्घ्रिनामकः(नामन्)** । पुं। दमनकवृचे । वृचमूले । रा.नि.व.२ । अम. ।

**अङ्घ्रिपः** । पुं । वृचे । रा.नि व.१ । हला ।

**अङ्घ्रिपर्णिका** } स्त्री । पृश्निपर्ण्याम् । চাকু-
**अङ्घ्रिपर्णी** } লিয়া। भा.पू.१.गु.व. ।

**अङ्घ्रिबला** । स्त्री । पृश्निपर्ण्याम् ।

**अङ्घ्रिवल्लि.(का)** } स्त्री । पृश्निपर्ण्याम् । চা-
**अङ्घ्रिवल्ली** } কুলিয়া। श.टी.र. ।

**अङ्घ्रिपः** । पुं । तन्नामकतालुरोगे। See अधुषः

**अङ्घ्रिसन्धिः** । पुं । पादगुल्फे । [हे.च. ।

**अङ्घ्रिस्कन्धः** । पुं। गुल्फे । পায়ের গোড়ালি।

**अङ्घ्रुरः** । पुं । पादगुल्फे ।

**अचरणा** । स्त्री । योनिव्यापद्विशेषे, यत्र योनिः प्रथममेव मैथुनाद्विरता बीजं न गृह्णाति । एवमतिचरणापि योनिरतिमैथुनात् न बीजं गृह्णाति । मैथुनात् पूर्व्वमेव रजोनिःसारणात् च चरणातिचरणयोः वीर्य्यं नावस्थितं भवतीति केचित् । लक्षणम्--मैथुनेऽचरणा पूर्व्वं पुरुषादति रिच्यते । बहुशयातिचरणा तयोर्बीजं न विन्दति । मा.नि. ।

**अचलत्विट्** । पुं । कोकिले । श.च. ।

**अचिकित्स्यः** । त्रि । चिकित्सितुमशक्ये ।

**अचिकुरः** । पुं । खालित्ये । টাক্ ।

**अचिन्त्यजः** । पुं । पारदे । रा.नि.व. १२ ।

**अचिन्त्यशक्तिरसः** । पुं । रसोऽयं मवज्वरे व्यवस्थेयः । अस्य मात्रा रक्तिद्वयम् । अनुपान

धान्यपिप्पलीक्वाथ'। रसोऽयं बहुसुपाया वालुका यन्त्रेण लघुपुटे पाच्य.। अत्र पारदादिस्वर्णपर्य्यन्तानामेकैको भाग, लौहस्यार्द्धो भाग., लौहार्द्धं वैक्रान्त। द्रव्यसमुदायं भृङ्गराजरसेन समर्द्य पर्पटीवत् पचेत्। ततो भावनाद्रव्याणां प्रत्येक भावनात्रितयं दत्त्वा पचेत्। रस. गन्धक. प्र. २ मा. कज्जली कार्य्या। अथ भृङ्गराज केशराज निर्गुण्डी (निशिन्द।), मण्डूकी (थूलकुडि), श्रीमसुन्दरक. (गिमा),अपराजितामूलं, शालिञ्च:, कालमारिष (काँटानटे),मूर्वावर्त्तश्चेति द्रव्याणि। एषां प्र.रस ४ मा. तेन मिश्रयित्वा पश्चात् स्वर्णमाक्षिक १मा. मरिचचूर्णं १ मा. दत्त्वा च गुञ्जाभा वटी कार्य्या। भैष ज्व चि.।

**अचिन्त्यात्मा** । पुं। परमात्मनि।

**अचिरपल्लव:** । पुं। सप्तपर्णवृक्षे। प मु.।

**अचेतन:** । त्रि। जडे। सेन्द्रियं चेतनद्रव्यं निरिन्द्रियमचेतनम्। च.।

**अचैतन्य:** । त्रि। चैतन्यरहिते। [कम्।

**अच्छ:** । पुं। गुन्द्रे। भल्लूके। स्फटिके। मे कहि

**अच्छभल्ल(लुक.)** । पु। भल्लूके। ভালুক। रा.नि व.१९। रत्ना.।

**अच्छर्दिका** । स्त्री। वान्ती। रा.नि.व.२०।

**अच्छल:** । पुं। तिलकल्के।

**अच्छिन्नपत्र:** । पुं। शाखोटवृक्षे। শেওড়া গাছ। युक्तपत्रवृक्षमात्रे।

**अच्छुक:** । पुं। तन्नामकरञ्जनपुष्पवृक्षे। আঁচ ফুলেরগাছ। तिनिशवृक्षे। प मु। [उदुम्बरवृक्षे।

**अच्युतावास:**। पुं। अश्वत्थवृक्षे। रा नि व ११।

**अज:** । पु। छागे। भा पू.। स्वर्णमाक्षिके। हे च.। तन्नामकौषधिविशेषे, अजमश्रीतिख्याते। अजनामकौषधिरजमश्रीति विज्ञायते। च चि १४।

**अजकर्ण:** } **अजकर्णक:** } पुं। छागकर्णवत्पत्रशालतरुविशेषे। असन इति र.मा.। शाल सर्ज इति रत्ना। पीतशाल इति च भाषा प्रसिद्ध। আসনা, পিয়াশাল। हि आसन्। गुणा —कटुतिक्तकषाय: उष्णवीर्य्य. कफपाण्डुकर्णरोगप्रमेहकुष्ठविषव्रणघ्नश्च। भा पू १मा.वटा.व। सर्जवृक्षे।

रा.नि.व.९। महासर्जतरौ शालभेद एव। सु.सू. अ ३८,५गण ड।

**अजका** । स्त्री। अजागलस्तने। छागपुरीषे। तन्नामकक्रष्णगतशोणितजनेत्ररोगविशेषे। आता सपिच्छिलास्रस्रुदातार्म्रपिटिकातिरुक्। अजाविट् सदृशोच्छ्रायकाष्ण्र्यावज्र्याह्वजाजका। वा.उ.१०अ।

**अजकाजातम्** । क्ली। नेत्रतारकगतरोगविशेषे। तथाच व्यथा, रक्तता, पूयस्रावश्च नेत्रयोर्भवति। लक्षण —अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्र। विदह्य कृष्ण प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत्। मा.नि.।

**अजकेशी** । स्त्री। नीलीवृक्षे। वै निघ.।

**अजगन्धा** } **अजगन्धिका** } स्त्री। वनयमान्याम्। चैत्रयमान्या। भम।रत्ना। वनयमानी। (Ocymum gratissimum,) गुणा —कटु तीक्ष्णा रुच्या हृद्या अग्निवर्द्धनी दृष्टिह्रासकरी लघु'शुक्रवातकफघ्नी च। मद.व.१। वनतुलस्या। वनतुलसी। हि बबरी, बबइ। तिलीणि। मद। मं रानतुलस, तिलवण। रा.नि व.४। गुणा:—लघु: रुच्या हृद्या वातकफघ्नी च। मद व १। वनयमान्यां। च.द.वि.ज्व.। “नीलिनीमजगन्धाञ्च।” फोफान्दी, वनयमानीति। च सू.४अ. च.सू.२शिरो. वि.। वा चि.१५अ। उ.२१अ.।

**अजगन्धिनी** । स्त्री। मेषशृङ्गाम्। গাড়ল শিঙে। र.मा.।

**अजगर:** । पु। (Boa constrictor.) सर्पविशेषे। मद १२।१०६। बिलेशयमृगविशेषे। अथ मर्मसि हित'। सु सू.४६प.।

**अजगल्लिका** } **अजगल्ली** } स्त्री। बर्बरीवृक्षे। বাবুই তুলসী। भा.पु.१भ.पु। क्षुद्ररोगान्तर्गतबालरोगविशेषे। स च कफवातजन्या भवतीति। वा.उ.३१अ.। स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा। पिटिका, कफवाताभ्यां बालानामजगल्लिका। मा.नि,क्षुद्ररो.।

**अजघोष:** । पुं। त्रयोदशविधसन्निपातज्वरान्तर्गतसन्निपातज्वरे। लक्षण —छगलकसमानगन्ध. स्कन्धरुजाक्षामास्नरहगभरभु:। अजघोषसन्निपाताद्दातामाप. पुमान् भवति। भा.म १भ.।

**अजटा** । स्त्री(Flacourtia cataphracta,)

भूम्यामलक्याम्। भुँई आमला। रसे.चि.अर्श:-अग्निमुख-लौहे।

**अजड़ा** । स्त्री । भूम्यामलक्याम् । कपिकच्छ्वाम् । आलाकुशी, भुँईआमला । भा.पू.गु.व । कुमरिचे । लक्ष्मविच । अचि ।

**अजड़ाफलम्** । क्ली। शूकशिम्बीफले । आलाकुशी फल । च.चि.२अ. वृष्यचौरे ।

**अजप्या** । स्त्री । A plant, (Yellow jasmin.) स्वर्णयूथिकायाम् । छागसमूहे ।

**अजदण्डी** । ब्रह्मदण्डीवृक्षे ।

**अजनामकम्** । क्ली । माचिके । हे.च. ।

**अजन्तजग्धः** । त्रि । अकीटभक्षिते । च.द. अ.सा.चि.कुटजपुटपाके. । [भा पू.१भ.फ.व ।

**अजप्रिया** । स्त्री । वदरीवृक्षे । कुल गाछ ।

**अजबला** । स्त्री । कृष्णतुलस्याम्। कालतुलसी।

**अजभक्षः** । पुं । वर्बुरीवृक्षे । बाबुई, बावर । रा नि । (क्ष) क्षुद्रदुरालभायां । रा नि व ४ ।

**अजमलः** । पुं । गोधूमे । गम् । प.मु. ।

**अजमांसम्** । क्ली । छागमांसे। See छागमांसम् । वा.सू.६अ ।

**अजमोदः** । पुं । दीप्यके । वा.सू २५अ. वत्सकादिच । "कटुङ्गफलाजमोद. ।"

**अजमोदाख्या** । स्त्री । वनयमान्या । चैत्रयमान्या। रवा । वृहज्जशनादिचूर्णे। यमान्यां। रा नि.।

**अजमोदा(दिका)** । स्त्री। (Pimpinella Involucrata, Ligusticum ajwaen, Syn Apium involucratum) स्वनामख्यातपण्यद्रव्ये । रान्धुनी । हि अजमद । अजमोदा इति महाराष्ट्रकर्णाटयो. प्रसिद्धा। तैं वामं । गुणा.—कटुरुष्णा रुक्षा कफवातघ्नी रुच्या शूलाध्मानारोचकजठरनाशिनी च । रा नि व.६ । कटु: तीक्ष्णा दीपनी वातकफघ्नी उष्णा विदाहिनी हृद्या वृष्या बलमन्दा लघु नेत्ररोगकृमिच्छर्दिहिक्कावस्तिरुजापहा च । मद.व.२। कटु:, तीक्ष्णा, आग्नेया, वातकफघ्नी, उष्णा, विदाहिनी, शुक्रवर्द्धनी, बल्या, लघु, नेत्ररोगकृमिवमिहिक्कावस्तिशूलघ्नी च । भा. १भ ह व । सि यो.अग्निमान्द्य चि. । "त्रिकटुक अजमोदा ।" यत्र चि एलादिमन्थे । तथा ग्रहणी चि.चित्रक गुडे । च सू ४अ ४५दश । वनयमान्यां। यमान्याम् । सु सू.३८अ.पि.व.। ङ । च ग्रहणी चि चित्रकाद्यगुडिकायां । महाषट्पलकघृते। ग्रहणी कल्याणगुडे ।

**अजमोदाद्यवटकः** । पुं । आमवाते हित । अत्र यमान्यादिचूर्णं प्रत्येकं १ पलं, शुण्ठ्या. १० पलानि, वृद्धदारकस्य १० पलानि, हरीतक्या. ५ पलानि, सर्वचूर्णसमं गुडं दत्त्वा एकत्र विमिश्रयेत् । च द भा वा चि ।

**अजम्भः** । पुं । भेके । श.र. ।

**अजया** । स्त्री । विजयायाम् । भङ्गा सिद्धिरिति भाषा । रा नि । [रद्दिते।

**अजरम्** । क्ली। स्वर्णे। रा नि व.१३। त्रि.। जरारहिते।

**अजरकम्** । क्ली । अजीर्णे । सि.यो.कास चि. द्वन्द. । च द पाण्डुचि योगराजे ।

**अजरा** । स्त्री । गृहगोधिकायां । टिकटिकि । जीर्णफञ्जीलतायां । वृद्धदारके । रा.नि.व.७ । घृतकुमार्याम्। घृतकुमारी। रा नि.व ५। आलकुशायाम्। आलाकुशी । भा पू.१भ.गु.व।

**अजलम्बनम्** । क्ली । यामुनस्रोतोऽञ्जने । श. च. । Antimony.

**अजलोमा(मी)** । पुं । शूकशिम्ब्याम्। आलाकुशी । र.मा.। Cowach. See आत्मगुप्ता । महौषधिविशेषे । See औषधि: ।

**अजवल्ली** । स्त्री । मेषशृङ्ग्याम् । মেড়াশিঙে ।

**अजशृङ्गिका / अजशृङ्गी** } स्त्री । A plant, described as a milky and thorny plant with a front crooked figure like a ram's horn. भा.पू.१भ गु.व १७१ । মেড়াশিঙে, গাড়লশিঙী, ছাগলবেঁটে इति वङ्गभाषा । तिलपाकगणीय स्वनामख्यातवृक्षे । मे मिढसिंग । कं उरियमर । रा.नि.व ८ । छागलविषाणिका उष्ट्रमारणी मेढशृङ्गीति । सु.सू ३८अ. । गुणा:—कटु: तिक्ता कफार्श:शूलशोथघ्नी चक्षुष्या श्वासहृद्रोगविषकासकुष्ठघ्नी च । एतत्फलं तिक्तं कटूष्णं कफवातघ्नं जठरानलदीपिकम् हृद्यं रुच्यं लवणरसं च-क्षुरसञ्च । रा.नि.व.८ । वातघ्ना पाके रुक्षा पित्त-

प्रबद्दीमनेवएलघ्नी । मद.व.१ । भा.पू.१भ गु व । कर्कटशृङ्गे, स च पुनर्जीवसदृशक्षुद्रविशेषः। सु.मू. ३७ अ.। भा.४भ.रैवतीयहचि.। मेषशृङ्गां, कर्कटशृङ्गां वा। सु.मू ३८भ.वल्लीपञ्चके। वा.चि.८भ। "अजशृङ्गी जटाकल्कम्।" भा पू.२भ.भने.व.।

**अजर्ग्या:** । स्त्री । फटिकारिकायाम् । मा नि ।

**अजहा** । स्त्री ।(Corpopogon pruriens.) शूकशिम्ब्याम्। आलाकुशी । च टी.।

**अजक्षीरम्** । क्ली । छागदुग्धे । वा.उ.१६भ.। See छागदुग्धं ।

**अजक्षीरनामः** । पुं । माक्षीटवृक्षे । आओड़ा गाछ । रा.नि.व ६ ।

**अजा** । स्त्री । छाग्याम् । तन्नामकमहौषधिविशेषे । सु.चि ३०भ । See सोमौषधिः ।

**अजागरः** । पुं । A plant (Eclipta or verbesina prostrata.) भृङ्गराजवृक्षे। भीमराज । श.र.। महासर्पे ।

**अजाघृतम्** । क्ली । छागीघृते । गुणाः—अजाघृतञ्च चक्षुष्यं दीपनं बलवर्द्धनं । द्रव्यं पाके कटु प्रोक्तं कासश्वासक्षयापहम् । कफार्शोराजयक्ष्मायानाशनं परमं मतम् ॥ वै निघ. । [व.६ ।

**अजाजिकः(का)** । पुं । पीतजीरके । रा.नि.

**अजाजी(जिः)** । स्त्री। (Cuminum cyminum )Cumin seed. जीरके। कालाजीरा। हि जीरा,कालाजीरा। स्थूलजीरके । बड़जीरे। रा.नि व.६। च.द.मधदभ्रौ चि.हृद्भुके। काकोदुम्बरिकायाम्। यज्ञडुमुर। श्वेतजीरके। भा.पू १भ ह व। च द.संग्रहणी चि,भायामकाञ्जिके। र. सा.सं माषिक्षारसी। कृष्णजीरके। सि यो.दिवाचामिस्वरे रुद्द । "अजाजी गुडसंयुक्ता विषमज्वरनाशिनी।"

**अजातकम्** । क्ली। छागीतक्रे । गुणाः—अजातक्रं लघु स्निग्धं दाहगुल्मार्शनाशनं । त्रिदोषश्वयथुपाण्डुरोगहरं परम् । वै निघ. ।

**अजातदन्तः** । त्रि । मासषट्कातीतेऽपि यस्य शिशोर्दन्तोद्गमो न भवति ।

**अजादनी** । स्त्री । A small species of prickly night-shade. क्षुद्रदुरालभायाम्। रा नि व ४ ।

**अजादुग्धम्** । क्ली । । छागदुग्धे ।

**अजानयः** } पुं । A horse of good **अजानेयः** } breed. उत्तमाश्वे । जयदत्तः ।

**अजान्त्री** । स्त्री । A potherb (Convolvulus argenteus.) नीलवृक्षायाम् । नीलबोना, छागलबेंटे । रत्ना. । गुणाः—कटुरसा, कासघ्नी, बीजदा, गर्भजननी च । रा नि.व. ३ । इड्डदारके । रा.नि.व.१ ।

**अजापक्षम्** । क्ली । पक्षघृतविशेषे ।

**अजापञ्चकम्** । क्ली । यक्ष्मरोगे घृतम् । छागघृतं ४श्र छागविष्ठारसः४श्र छागीदुग्धं ४श्र छागदधि ४श्र छागमूत्रं ४श्र. प्रक्षेपः यवक्षारः ८ पलं यथाविधि पाच्यम् । च.द यक्ष्म चि.। भैष ।

**अजापयः** । क्ली । छागदुग्धे । वा उ.१३भ. ।

**अजाप्रिया** । स्त्री । वदरीवृक्षे । भा फ.व.।

**अजामांसम्** । क्ली । छागमांसे । गुणाः—लघु स्निग्धं किञ्चिच्छीतं रुचिप्रदं मधुरं पुष्टिकृत् बल्यं वातपित्तघ्नं । वै.निघ ।

**अजामूत्रम्** । क्ली । छागीमूत्रे । गुणाः—कटु उष्णं रूक्ष नाडीविषघ्नं श्लीहोदरकफश्वासगुल्मशोफहरं लघु च । रा.नि व.१५ । वा.उ २४भ. ।

**अजामेदः** । क्ली । छागवसायाम् । वा चि,१भ. ।

**अजाविट्** । स्त्री। छागविष्ठायाम्। वा.उ.१०भ.

**अजाह्वा** । स्त्री । आत्मगुप्तायाम् । आलाकुशी । च टी.भ. । See अजहा ।

**अजाद्धी** । स्त्री। काकोदुम्बरिकायाम् । दाड़ुडुमुर । भं काला उम्बर । रा.नि व.११ ।

**अजाक्षीरम्** । क्ली । छागीदुग्धे ।

**अजिततैलम्** । क्ली । भेदरोगे हित तैलम्। तिलतैलं,चर्मभ्रष्टरसकं,शतावरी शरावकम् । चामलकीरस ४श्र दुग्धं ४श्र । कल्कार्थं यष्टिमधु पलमितम्। च द मेदरोग चि। अकाल्योऽपि भवेत् भेदः यः साध्यः कैरपि दृश्यैः। भेदपातविधौ यत्र प्रमाणं नैरितं क्वचित् । भेदस्य कुडवं तत्र दधेरक्तस्य पिन तु । इति प.व ।

गन्धद्रये उत्तरदेशे प्रसिद्धे । भा.पू.१भ.क.व. ।

**अञ्जनगुड़िका** । स्त्री । विसूचिकायामौषध विशेषे । गुडपुष्परसः, अपामार्गबीज, अपराजिता मूलं, हरिद्रा, त्रिकटु च । अञ्जनं कर्त्तव्यम् । च. द अग्निमान्द्यचि. ।

**अञ्जनत्रयम्(त्रितयम्)** । क्ली । कालाञ्जन सौतोऽञ्जन रसाञ्जनेषु । "कालाञ्जनसमायुक्तं सौतोऽञ्जनरसाञ्जने ।" रा नि व २२ ।

**अञ्जननामिका** । स्त्री । वर्त्मगतनेत्ररोगभेदे । आञ्जनी, आञ्जनाई । अत्र वर्त्मसन्धौ रक्तेन ताम्रा मुद्गप्रमाणा पिडका भवति।वा.उ.८.१४श्र। "दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा । मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका ॥" मा.नि।

**अञ्जनभैरवः** । पुं । सान्निपातिकज्वरे रसः। अत्र एकांशमिति प्रत्येकमेकांशम् । तीक्ष्णं तीक्ष्णलौहम् । र.सा.स सान्निपा ज्व । अथाञ्जनं विधिः ।

**अञ्जनयुग्मम्** । क्ली । सौतोऽञ्जने रसाञ्जने च । वा सू. प्रियङ्ग्वादि: ।

**अञ्जनरसः** । पुं । सान्निपातिकज्वरे भस्म् । तत्र द्वैशः पारदः । मरिचचूर्णं समम् । र.सा.स ज्व चि.। अन्यः सान्निपातिकज्वरदाहे। तत्र वाह्निकं हिङ्गु । रसकं स्फटिकारी ।

**अञ्जनविधिः** । पुं । नेत्रप्रसाधनभेदे । यथा, "अथ सम्यक्दोषस्य प्राप्तमञ्जनमाचरेत् । अञ्जनं क्रियते येन तद्द्रव्यं चाञ्जनं मतम् ॥ रसो वटी तथा चूर्णमिति त्रिविधमञ्जनम् । यथापूर्वं बलं तेषु स्नेहमाहुर्मनीषिणः ॥ तत्प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणं तथा । स्नेहनचे"ति । तेषु,लिखनं क्षारतीक्ष्णाम्लरसैरञ्जनं नेत्रवर्त्मादिदोषहरम् । रोपणं सकेद कषायं तिक्तं दृष्टिबलवर्द्धनञ्च ॥ मधुरं स्नेहमल्लं स्नेहनं नेत्रस्नेहनार्थम् । भा।

**अञ्जनादिगणः** । पुं । चन्दनफलिनीमांसीपद्मोत्पलरसाञ्जनमधुकनागाह्वरूपो वर्गः । स च विषाभर्दाहपित्तघ्नः । वा सू.१५श्र. । सौवीराञ्जनं, रसाञ्जनं, नागकेसरपुष्पं,प्रियङ्गुः, नीलोत्पलं, वीरणमूलं, नलिनं, मधुकं, पुन्नागञ्चेति । सु.सू.३८श्र।

**अञ्जनाधिका** } स्त्री । कृष्णकार्पासतुपे । See
**अञ्जनिका** } कालाञ्जनी । वाग्भटाम् आञ्जनाई । अञ्जनी लेपकारिणी । हारा.। हे.च.४ का. । क्षुद्रमूषिकायाम् ।

**अञ्जनाम्भः** । क्ली । अञ्जनजले । Liquid collyrium.

**अञ्जनिकः** । पुं । गन्धरासायाम् । [नि.व.४ ।

**अञ्जनी** । स्त्री । कटुकायाम् । कालाञ्जन्यां । रा.

**अञ्जलिः** । पुं । प्रसृतिद्वये, ३२तो. प प्र १ख.। कुडवमाने । रत्ना.नानार्थः । भा.उ.वाजी । करसम्पुटे । मै लभिकम् ।

**अञ्जलिका** । स्त्री । लज्जालुकायाम् । क्षुद्रमूषिकायाम् । जटा. ।

**अञ्जलिकारिका** । स्त्री । (Mimosa natans ) लज्जालुकायाम् । रा नि.व.५ । भा.पू.गु.व.।(Lycopodium imbricatum.) वराहक्रान्तायाम् । ववाक्रान्ता ।

**अञ्जलिनी** । स्त्री । लज्जालुकायाम् ।

**अञ्जीरः** । पुं । (Ficus carica,Psidium pomiferum.) स्वनामख्यातवृक्षे । बड़ पेयारा गाछ । हिं अंजीर । फलगुणाः—शीतलं, स्वादु, गुरु, रक्तपित्तवातघ्न । मद.व.६ ।

**अटरुषः** । पुं । (Justicia adhatoda.) वासकवृक्षे । र.सा.स.मूत्रिकारिरसे, कन्दर्पसारतैले च । वा.चि २५. । See वासकः ।

**अटरूषः** } पुं । वासकवृक्षे । र.सा. । च.द. रक्तपित्तचि ।
**अटरूषकः** }

**अटवी** । स्त्री । अरण्ये । [इति रत्ना ।

**अटवीलता** । स्त्री । कुष्माण्डवृक्षे । कुम्हाड़्या

**अटिः** । पुं । शरारिपक्षिणि । हला. ।

**अट्टम्** । क्ली । अन्ने । मे टवर्गे ।

**अट्टनम्** । क्ली । चक्रभेदे । त्रिका. ।

**अट्टहासः(कः)** । पुं । (Jasminum multiflorum.) कुन्दपुष्पवृक्षे । कुँद फुलेर गाछ । रा नि व.१० ।

**अड्डनः** । पुं । गोधूमे ।

**अड्डुः** । पुं । लकुचवृक्षे ।

**अणुः** । पुं । सूक्ष्मधान्ये । चणब्रीहिविशेषे स्यात् । मेदिनिक । चीनधान्ये । [६२अ ।

**अणुज्योतिः** । क्ली । स्त्रीकट्टी । वा शा ५अ

**अणुतैलम्** । क्ली । केशगतरोगे तैलविशेष । वा.सू २०अ उ.२२अ । [नि व ४ ।

**अणुमुष्टिः** । पु । विषमुष्टी, महानिम्बे । रा

**अणुरेवती** । स्त्री।(Croton polyandrum ) दन्तीवृचे । प सु । रा नि.व ६ ।

**अणुव्रीहिः** । पु । सूक्ष्मधान्ये । रा नि व १६ ।

**अण्डम्** । पुं,क्ली । मुष्के । रा नि व १८ । डिम्बे । डिम्,आण्डा । गुणा —कटु स्वादु रुचिकर शुक्रकर वातश्लेष्महरश्च गन्धमार्जाराण्डे । थाटोनी ।वै निघ.२भ.वा व्या विषगर्भतैलेऽमृगनाभी वीर्य्ये।वि.।

**अण्डकः** । पुं । अण्डकोषे । हे च ।

**अण्डकोटरपुष्पा** । स्त्री । अजान्त्राम् । नी लबुझा इति लोके । रत्ना ।

**अण्डकोषः** । पुं । कुष्कौ । वृषणे । अण्ड-कोष । रा नि व.१८ । अण्डकोषलक्षणं —रेत शुक्रसमावहं कोषगर्भे,वसिवते। रेत स्रावाण्डयुगल यथ्याभं चाण्डवर्तुलं । भूणस्योदरवेष्टन्या पश्चा उदरगह्वरे । तिष्ठेत्साकुम्पर्शनाद्भूमि कोषमायाति तद्द्वयम्। दक्षिणमात् स्थूलतर वामाण्ड निम्नलम्बि च । वाम रैतसिकं सूत्रं यतो दीर्घतरं परम् । च मर्मपरिसंस्थानसवन्धेन निर्मितं । कोषो रैतसिके सूत्रे भवेऽण्डयुगल तथा । तनोराभ्यन्तरो रक्त म ज्ञोचनगुणान्वित । तनोर्वाह्ययममयी लोमभि कतिभिवृत । तनोस्तिरश्चरध्यामरेकया भिद्यत द्विधा । तद्गर्भयमध्यान्तं पुंसोऽण्डयुगल भवेत् । उ दराद्रेतस सूत्रे पश्चाद्गमाण्डयो । नियत सम नुमायेत धराह्मायादिर्निर्मिते ॥ चविरिति कश्चित्।

**अण्डकोषकः** । पु । अण्डकोषे । श र. ।

**अण्डगः** ।पुं। गोधूमे ।

**अण्डगजः** । पु । चक्रमर्द्दवृचे । रा नि व ४ ।

**अण्डजः** । पु । मत्स्ये । पक्षिणि । भा पू १भ ।

**अण्डजा** ।स्त्री । सरटे । वि । सर्पे । मत्स्ये । पक्षिणि । मे जत्रिकं । कस्तूरी । वा च्मा ।

**अण्डपर्णः** । पु । महापत्री । चवि.।

**अण्डपेशी** । स्त्री । कोषे । मुष्के । हे च ।

**अण्डस्कन्दः** । पु । अण्डेषु स्कन्द इव,अण्डस्य रोगविशेषे । तल्लक्षण यथा —प्रकोपान्मारुतादीनां कारणे पूर्व्वचोदिते । अण्डस्कन्दस्तुरङ्गाणा जायते बहुसञ्ज्ञक ॥ तस्य रूप चिकित्साच भेदश्चैव समासत: । प्रवक्ष्यामि यथायोग वाजिनां हितकाम्यया। वृषणौ दूषयेद्वायु श्लेष्मणा यस्य संयुत । तस्य सु षाश्वल्येकौ रोगी वाताण्डसञ्ज्ञक. ॥ यदण्ड कम्प तेऽश्वस्य तेन पादेन खञ्जति । सम्यक्पृष्ठस्य तस्याञ्च वेदना मुष्कयोर्भवेत् ॥ शूनता मुष्कयोश्चैव रक्तता कृष्णतापि वा । भवेत् पित्तेन दुष्टेन पिड़कानाञ्च सम्भव ॥ शूनौ पक्वौ तुरङ्गस्य मुष्कौ यस्य सवेदनौ । त्रिकस्तम्भेन युक्तस्य तस्य पूताण्डमादिशेत् ॥ स्पर्श न कठिनौ रूक्षौ रूपतश्चैव यौ मृदू । वृषणौ यस्य वाहस्य स स्रुताण्ड प्रकीर्तित ॥ तस्मिन् सर्व्वा प्रयोक्तव्या क्रिया पीताण्डबोधिता ॥ शूनौ तु क ठिनौ रूक्षौ वृषणौ मन्दवेदनौ । कुक्कुटूबस्य वाहस्य मूत्रकोशस्य शूयते ॥ श्लेष्माण्ड स तु विज्ञेय श्चोपा र्थो वेधयेच्छिरां । निर्द्दह्य कटुतैलेन चाड्गे स्वेद कारयेत् ॥ जयदत्त ५०अ ।

**अण्डहस्ती** । पु । चक्रमर्द्दवृचे । रा नि व ५ ।

**अण्डालुः** । पु । मत्स्ये । श च ।

**अण्डिका** । स्त्री । यवचतुष्टयपरिमाणे । च ।

**अण्डिनी** । स्त्री । सान्निपातिकयोनिरोगविशेषे । लक्षण —"अतिकायगृहीतायास्तरुण्या भण्डिनी भवेत् ।" सु चि ।

**अण्डीरः** । पु । पुरुषे । मे रत्रिकं ।

**अण्वस्थि** । क्ली मणिबन्धादिस्थे सूक्ष्मास्थि सु शा ।

**अणुली** । स्त्री । चङ्गुली । [इति च लोके । चवि ।

**अतन्द्रा** । स्त्री । काफि इति ख्याति फणी । 61

**अतरुणदाकः** ⎱ पुं । क्ष्ददारके । दिम
**अतरुणदारु (क)** ⎰ टाउड । हि विमारा ।
"अतरुणदारुदारापुरा।"भा म १म अश्विकाव्य वि.।

**अतलस्पृक्** । क्ली । जले । हे च श्रका ।

**अतसी** । स्त्री।(Linum Usitatissimum) Common flax चुमावृचे । क्षुमिना । हि तिसि । तें महस्पर्शियं । गुणा—मधुरा बल

कारिका कफवातवर्द्धनी, ईषत्पित्तघ्नी कुष्ठवातघ्नी च। रा नि व १६। शुक्रदृष्टिघ्नी स्निग्धा गुरु वाता सजित्। मद व १०।

**अतसीतैलम्** । क्ली। अतसीजाततैले। মসিনার তৈল। গুণা —মধুরং পিচ্ছিল বাতঘ্ন মদ গান্ধ কষায়ং কফহর কাসহরঞ্চ। रा नि व १५। आग्नेय स्निग्धोष्ण कफपित्तनुत् कटुपाकमचक्षुष्यं बल्य वातहरं गुरु। मलकृत् रसत स्वादु ग्राहि त्वग्दोषदृहनम्। वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे। अनुपानविधौ चापि प्रयोज्य वातशान्तये॥ भा पू तैलव।

**अतिकटुः** । त्रि। निम्बादिद्रव्ये।

**अतिकण्ट (क)** । पु। लघुगोक्षुरके। दुरालभायाम्। मद व १। [कन्दशाके। रा नि व ७।

**अतिकन्द (क)** । पु। हस्तिकन्दनामकन्दे

**अतिकृशः** । त्रि। अतिदुर्बले।

**अतिकेसरः** । पु। कुब्जकपुष्पवृक्षे। কোকণ দেশীয় পুষ্প বিশেষ। हि कूजा। रा नि व १०। भा पु पु व। कण्टकवल्याम्। কাঁটা সেউতি।

**अतिक्रान्तावेक्षणम्** । क्ली। यत्पूर्वमभिहित तत्। "यथा चिकित्सितेषु ब्रूयात् श्लोकस्थाने यदीरितमिति।" सु उ ६५अ।

**अतिगण्डः** । त्रि। वृहद्गण्डे। भै ज्वतुष्क।

**अतिगन्धः** । पु। A sort of Jasmine (Jasminum zambac) मुद्गरपुष्पवृक्षे। रा नि व १०। गन्धके। रा नि व १३। (Michelia champaca) चम्पकवृक्षे। रा नि व १०। भूतृणे। गन्धतृण। रा नि व ८। [भ्यकवृक्षे। रा नि व १०।

**अतिगन्धक** । पुं। हस्तिकर्णपलाशवृक्षे। च

**अतिगन्धा(लु)** । स्त्री। पुत्रदात्रीलतायाम्। रा नि व ४। [जिह्वापुत्रा। रा नि व ४।

**अतिगन्धिका** । स्त्री। पुत्रदात्रीलतायाम्।

**अतिगुहा** । स्त्री। (Uraria lagopodes) पृश्निपर्ण्याम्। ছোট চাকুলে। र.मा। शालपर्ण्याम्। मद व १। वा सू १५अ। 'सक्षौ गुहाम तिगुहाम्।'

**अतिघूर्णता** । स्त्री। अतिनिद्रा। भा म ४भ ममूरिकाणि। "तृष्णा दाहातिघूर्णता।"

**अतिचर** । पु। पक्षिभेदे।

**अतिचरणा** । स्त्री। तन्नामककफजयोनिरोगविशेषे। अतिव्यवायेन शोथयुक्ता योनिरतिचरणो च्यते। 'सैवातिचरणा शोफसयुक्तातिव्यवायत।" वा उ ३३अ। See अचरणा।

**अतिचरा(ला)** । स्त्री। पद्मचारिण्याम्। मद व ३। (Hibiscus mutabilis) स्थलपद्मिन्याम्। স্থলপদ্ম। रा नि व ५। भा पू १भ। See स्थल पद्मम्। भूतृणे।

**अतिच्छत्र** । पु। रक्तकोकिलाक्षे। তালমাখনা। वङ्ग कुলেখাড়া। प सु। रबा। छत्राकायाम्। Mushroom কাটছাতু পোয়ালছাতু। स्थूलतृणविशेषे।

**अतिच्छत्रक** । पु। भूतृणे। प सु। भूतृणे। गन्धतृण। रा नि व ८। तृणसाधारणे। तृणविशेषे। यस्य मूल पत्रे वा छत्राकार, कटुरसश्च। रा नि। सप्तपर्णवृक्षे।

**अतिच्छत्रा** } **अतिच्छत्रिका** } स्त्री शताह्वायाम्। शुल्फा। रा नि व ४। मद व १। वा उ ६अ। "अतिच्छत्रा पलङ्कषा।" सि यो उन्माद चि महापैशाचघृते। मधुरिकायाम्। মৌরী। च. चि १अ। छत्रवृक्षे। यस्य मूले पत्रे वा छत्राकार, कटुरसश्च। भूतृणे। रा नि। विषाणिकायाम्। वा सू २८अ। तन्नामकमहौषधौ। See औषधि।

**अतिजागर** । पु। नीलक्रौञ्चे। रा नि व १९।

**अतिजृम्भ** । पु। वायुरोगविशेषे। वै निघ।

**अतितपस्विनी** । स्त्री। गोरक्षमुण्ड्याम्। গোরক্ষ চাকুলিয়া। भा पू १भ गु व।

**अतितर्पणम्** । क्ली। अतितृप्ती। वा सू ८अ।

**अतितीव्रा** । स्त्री। गण्डदूर्वायाम्। रा नि व ८।

**अतितीक्ष्ण.** । त्रि। मरिचादौ। पुं। शोभाञ्जनवृक्षे। क्ली। अजमोदायाम्। [निघ।

**अतितृप्तिः** । पु। पित्तज्वररोगविशेषे। वै

**अतितिञ्जिनी** । स्त्री। तिन्तिड्याम्। তেঁতুল, তেঁতুলগাছ। मद व १।

**अतिदग्धम्** । क्ली। अतिदग्धरोग। अतिदग्धे

मामावलम्बन गात्रविश्लेष शिरास्नायुसम्ध्यस्थिव्या पादनमतिमात्र, ज्वरदाहपिपासामूर्च्छायोपद्रवा भवन्ति। व्रणश्चास्य चिरेण रोहति हृदय विवर्णो भवति। मुष्टस्याग्निप्रतपनं कार्यमुष्णं तथौषधम्। इत्यादि। सु.सू १२अ।

**अतिदाहः**। पु। अतिसन्तापे। वै निघ।

**अतिदीप्तिः**। स्त्री। श्वेतसुरसायाम्। শ্বেত বাবুই তুলসী। वै निघ। [व ६।

**अतिदीप्यः(कः)**। पुं। रक्तचित्रके। रा नि.

**अतिदुष्टः**। पु। गोक्षुरके। वै निघ।

**अतिदेशः**। पु। प्रकृतस्यानागतेन साधनम्। यथा—अनेनास्य वायुरूर्द्ध्वमुपतिष्ठते तेनोदावर्त्तं स्यादिति। सु उ ६५अ। [सु सू १५अ।

**अतिनिद्रता**। स्त्री। कफवृद्धिजन्यरोगविशेषे।

**अतिपक्वमांसम्**। क्ली। पाकाधिकसिद्धमांसे। गुणा—अतिपक्वन्तु यन्मांसं विरसं वातलं गुरु। वै निघ।

**अतिपक्वक्षीरम्**। क्ली। अतिप्रसघनदुग्धे। घनावृत दुग्ध। इदम् अतिगुरु। "भवेद्गरीयोऽतिपक्वम्।" वा टी हेमाद्री चारपाणि।

**अतिपत्रः(कः)**। पु। शाकतरौ। শেগুন গাছ। रा.नि व.९। उन्माद चि.महापैशाचघृते। हस्तिकन्दनाममहाकन्दे। रा.नि व ७।

**अतिपत्रा**। स्त्री। (Sida cordifolia) बलायाम्। বেলেড়া। हिं खरैंटी।

**अतिपातितम्**। क्ली। अस्थिभङ्गविशेषे। तेनास्थि नि शेषेण भिन्नं भवति। सु नि १५अ।

**अतिपिच्छः**। पु। श्वेतरक्तालुके। वै निघ.।

**अतिपिच्छला**। स्त्री। कुमार्य्याम्। घृतकुमारी। वै.निघ।

**अतिपिञ्जरः**
**अतिपीडकः** } पुं। दुष्टव्रणे। च।

**अतिबला**। स्त्री। (Sida rhombifolia.) पीतबलायाम्। पीतवर्ण বেলেড়া, পীতবাকুলি। हिं ककहिया। म पिटारिणी। गुणा—तिक्ता कटु वातघ्नी क्रिमिघ्नी दाहतृष्णाविषच्छर्दिक्लेदोपशमनी च। रा नि.व ४। शीतला मधुरा बलकान्तिकृत्। स्निग्धा ग्राहिणी वातरक्तरक्तपित्तक्षतघ्नी च। मद.व १। इत्थं महाबला कृच्छ्रं भवेद्वातानुलोमनी। हन्यादतिबला मेह पयसा सितया समम्॥ भा पू १भ गु व। सु सू.३८ संशमने। च सू.४अ। सु सू क्रिमिचि.। चि क.क.वल्ली स्त्रीरोगचि। वा.उ. ४०अ। श्वेतवाट्यालके। गोरक्षतण्डुलायां। গোরক্ষ চাকুলিয়া,কালিয়া ঝিটকী। विष्णु नारायणतैले। शतावरीयो सा.की। चि.क क वल्लीकेतक्यादितैले।

**अतिबलिका**
**अतिबली** } स्त्री। वाट्यालके। रा नि.व.४।

**अतिभारगः**। पुं। अश्वतरे। খচ্চর इति लोके।

**अतिभोजनम्**। क्ली। अतिमात्रया भोजने। गुणा.—आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम्। सु सू ४६अ कृतान्नव.।

**अतिमङ्गल्यः**। पु। (Aegle or cratoeva marmeloes) बिल्ववृक्षे। रा नि.व.११।

**अतिमञ्जुला**। स्त्री। कण्टकसेवतीवृक्षे। हिं सेवती गुलाब। গোলাপ, বক্ত গোলাপ। भा पू १भ पु व। मद व ३। See सेवती।

**अतिमण्डलः**। पुं। भूधामलक्षे। वै निघ.।

**अतिमन्थः(कः)**। पु। अग्निमन्थवृक्षे।

**अतिमुक्तः(कः)**
**अतिमुक्तका** } पु। Mountain eboney तिनिशवृक्षे। अम। तिन्दुकवृक्षे। তেন, গাব। नवमल्लिकाभेदे। मं सं राय विर। বায়বেল। (Goertnera racemosa.) माधवीलतायाम्। प सु। "अतिमुक्तकमिच्छन्ति वासन्ती माधवीलताम्।" इला ५४। अतिमुक्तमुनि सद्धे वासन्त्यां तिनिशेऽपि च। मे तचतुष्क। वा. उ १२अ। "तथातिमुक्तकैरण्ड।" भा.पु.१भ.। गुणा—कषाय शीतल श्रमघ्न पित्तदाहज्वरोन्मादहिक्काच्छर्दिघ्नश्च। रा नि व १०। See तिनिश। माधवी मधुरा शीता लघ्वी दोषत्रयापहा। भा पु १भ पु व। (क) हरिमन्थे। हारा।

**अतिमुक्ततैलम्**। क्ली। अतिमुक्तकबीजतैले। गुणा—वातपित्तघ्नं केश्यं श्लेष्मलं गुरु शीतलञ्च। वा टी हेमा। [व १०।

**अतिमुक्ता**। स्त्री। अतिमुक्तकायाम्। रा.नि.

**अतिमोदनी(दिनी)** । स्त्री । नवमल्लिकायां। रा.नि.व.१०।

**अतिमोदा** । स्त्री।(Jasmimum arboreum) नवमल्लिकायां। সেউতি। रा.नि.व.१०। गणिकारीवृक्षे स्वनाम्ना कोंकणदेशे ख्याते। गणिदि। रा.नि.व.१०।

**अतियवः** । पुं । निःशूकयवे । कृष्णवर्णे यवे । मद व १० । निःशूकोऽतियवः स्मृतः । यवादतियवो न्यूनः । भा.पू.१भ धान्यव. ।

**अतियुक्तः** । त्रि । वारंवार प्रयुक्ते । भा.म.ख. १भ ज्व सा. । "स्नेहाद्यैरतियुक्तैः ।" [१७भ.।

**अतियोगः** । पुं । अतिशयितप्रयोगे । वा.सू.

**अतिरक्तः** । पुं । हिङ्गुले । वै.निघ. ।

**अतिरक्ता** । स्त्री । जवापुष्पवृक्षे । वै.निघ ।

**अतिरसः** । पुं । पौण्ड्रके । श.मा. ।

**अतिरसा** । स्त्री । मूर्व्वायाम् । মুরগা। वै.निघ. २भ.अप.चि.पलङ्कषातैले । रास्नायाम् । मद.व. १। वल्लीयष्टिमधुनि । रा.नि.व.६ । शतमूल्याम् । च.सू.४ । [१२ । भा.पू.१भ. मद.व.१ ।

**अतिरुहा** । स्त्री । मांसरोहिण्याम् । रा.नि.व.

**अतिरूक्ष.** । त्रि । स्नेहशून्ये, कङ्गुकोद्रवादौ ।

**अतिरेचकः** । पुं । काकोल्याम् । কাঁকলা । वै.निघ. । [नि.व.२०।

**अतिरोगः** । पुं । क्षयरोगे । राजयक्ष्मणि । रा.

**अतिरोमशः** । पु । वन्य छागे । द्वारा. ।

**अतिरोमशा** । स्त्री। नीलबुह्नायाम् । छागल বেঁটে । प.मु. ।

**अतिलङ्घितम्** । क्ली । अत्युपवासे । तल्लक्षणं—पर्व्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च । क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः। मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि। देहाग्निबलनाशश्च लङ्घनेऽतिकृते भवेत् ॥ च.द. ।

**अतिलम्बी** । स्त्री । शताह्वायाम् । भा.पू.१भ. ।

**अतिलोहितगन्धः** । पुं । दमनकवृक्षे । দনা । प मु. ।

**अतिवर्त्तुलः** । पुं । (Sida rhombifolia) कलायविशेषे । মটর, বাটুলা, কড়াই । र.मा. ।

**अतिविदाही** । त्रि । राजसर्षपादौ ।

**अतिविद्धा** । स्त्री । दुष्टव्यधनविशेषे । प्रमाणातिरिक्तविद्धायाम् । सु.शा ८ ।

**अतिविषः(षा)** । स्त्री ।(Aconitum heterophyllum) स्वनामख्यातोपविषजातीयपण्यद्रव्ये। আতইচ্ । हिं आतइच । अतिविषा सर्व्वत्र भाषा । तैं अतिवसचेट्टु । अतिविषा शुक्लकृष्णारुणभेदात् त्रिधा रसवीर्य्यविपाकेषु तुल्या । गुणाः—कटूष्णा तिक्ता कफपित्तज्वरघ्नी आमातीसारकासघ्नी विषघ्नी छर्द्दिघ्नी च । रा.नि.व.६ । वा.सू.२५भ. वचादि । नागारातिविषाभयाः । च.द ज्व चि.पिप्पल्याद्यघृते । मदनपालस्तु श्यामकन्दोपविषयोश्चतुर्भेदानाह श्वेतरक्तकृष्णपीतत्वात् ते तासां यथा पूर्व्वं श्रेष्ठा गुणोत्तमा सर्व्वदोषहरा शोथघ्नी श्लेष्मकरीगघ्नी रसायनी च । मद.व.१। अतिविषाकटुकीप्रभृतीनामुष्णगोमयजलेन शुद्धिर्ज्ञातव्या । सा. कौ. । [वै.निघ. ।

**अतिवीजः** । पुं । वब्बूलकवृक्षे । বাবলাগাছ ।

**अतिबृहत्फलः** । पुं । पनसवृक्षे । কাঁটাল গাছ । भा.पू.१भ. ।

**अतिव्यथा** । स्त्री । अतिशयितयन्त्रणायाम् । पीडायाम् ।

**अतिव्यायामः** । पुं । व्यायामाधिक्ये । অধিক কুস্তি করা । अतिव्यायामो न पथ्यः । अतिव्यायामतः कासो ज्वरच्छर्दिः श्रमः क्लमः । तृष्णा क्षयः प्रतमकः रक्तपित्तञ्च जायते॥ भा पू १भ.।

**अतिशष्कुली** । स्त्री । तिलकृतरोटिकायाम् । गुणाः—रुच्या श्लेष्मपित्तास्रघ्नी गुरुः विष्टम्भिनी, न चक्षुष्या च । भा.पू कृतान्नव. । [मुग । र.मा ।

**अतिशारिवा** । स्त्री । अनन्तायाम् । অনন্ত-

**अतिशूकः** । पुं । यवे । যব । प मु. ।

**अतिशूकजः** । पुं। गोधूमे । গম । Wheat.

**अतिशृतक्षीरम्** । क्ली । अतिक्वथिते दुग्धे कम्भोऽन्यत् सञ्जाते । तद्गुणास्तु । शास्त्रैर्यन्मतं हितविचारतोऽशमित्वम् । तथा प्रततमं कार्यं गुरु वस्त्रतमं पयः । वा.सू ५ व.पर [illegible]

**अतिशोष.** । पु । चयरोगे । See चय ।

**अतिसय्या** स्त्री । वल्लीयष्टिमधुनि ।

**अतिसर्जनम्** । क्ली । वेधे । मे नपचक ।

**अतिसान्द्रः** । पु । राजमाषे । वाक्शाली वनपी । रवा । [लतायष्टिमधुनि ।

**अतिसाम्या** । स्त्री । कृष्णमुखगुञ्जावल्लाम् ।

**अतिसार** । पु । पर्पटके । मद व.१ । ‌ च्चि पापडा । उदरामयरोगविशेषे । See अतीसार ।

**अतिसारकी** । त्रि । अतिसाररोगिणि ।

**अतिसारघ्न.** । पु । चेत्रपर्पटके । क्षे~पाप ड़ा । वै निघ । [निघ ।

**अतिसारघ्नी** । स्त्री । अतिविदायाम् । वै

**अतिसारभेषजम्** । क्ली । सौषे । तद्रोग-निवारके औषध ।

**अतिसारवारणरसः** । पु । अतिसारे रस । अथ कृतकर्पूरं पक्वकर्पूरम् । खाखसीचीर अहिफेनम् । रसा स ।

**अतिसारस्या** । स्त्री । राखायाम् । वै निघ ।

**अतिसूक्ष्म** । त्रि । अतिशयसूक्ष्मे ।

**अतिसेवनम्** । क्ली । अधिकमात्रया सेवने ।

**अतिसौम्या** । स्त्री । वल्लीयष्टिमधुके । रा नि व ६ ।

**अतिसौरभ.** । पु । आमवृक्षे । भा पू फ व ।

**अतिस्कन्धा** । स्त्री । रक्तकुलथके । वै निघ ।

**अतिस्थूलवर्त्मा** । पु । दुष्टव्रणविशेषे । च ।

**अतिस्निग्ध.** । त्रि । अत्यन्तस्निग्धे । तस्य लक्षणम्—कफप्रसेक शिरसो गुरुतन्द्रियविभ्रम । रूक्षं तदतिस्निग्ध दृष्टे तत्र प्रदापयेत् ॥ वै निघ । नस्यचि । [निघ ।

**अतिस्रवा** । स्त्री । मयूरशिखायाम् । मूर्वा । वै

**अतिक्षिप्तसन्धिः** । पु । अस्थिरतिशयविक्षेपे । सन्धिच्युतं सदुद्धैरवस्थानं । तेन सन्ध्यस्थोरुभयोरेवातिकान्तता वेदना च । सु नि १५ च । See भग्न ।

**अतीसार.** । पु । Diarrhœa or dysentry अतीव सरति, प्रकृतिमतिक्रम्य गुदमार्गेण सरतीति अतीसार । खनामख्यातोदरामयरोग, बहुद्रवमलनिसरणरोगे । तस्य निदान गुरुभोजनादिकम् । तस्य निरुक्ति —रसादिद्रवधातूनामपि मन्दीकृत्य मलेन सह मिश्रिताना वायुना चाध प्रणुन्नानां अतिनिसरणादतीसार उच्यते । तस्य च पूर्व्वरूप —हृदय नाभिगुह्योदरादिस्थानेषु सूचीविद्धवद्वेदना, कायावसादवायुमलविबन्धतोदोदराध्मानापरिपाकादिक च । स षड्विध वातपित्तकफसन्निपातशोकापरिपाकजभेदाद्भवति । तत्र वातजे मलस्यारुणता फेणिलता रूक्षता पक्वता तथा गुदे सशब्दवेदनमल्पशो मुहुर्निं सरणञ्च लक्षण भवति । पित्तजे च मलस्य हरितपीतलोहितवर्णता तृष्णामूर्च्छादाहा, मलद्वारे ज्वाला चतञ्च लक्षणम् , कफजे च शुक्लगाढसकफामगन्धिशीतलमल । नि सरन्ति, रोगी च रोमाञ्चय भवति । सान्निपातिके च वातजादिलक्षणानि दृश्यन्त, प्रायशश्चात्र मला शूकरवसा मांसधावनवारिवद्भवन्ति । शोकजे च गुञ्जाफलवद्दृश्यशोणितं केवल मलमिश्रित मलरहितं वा सरति, तत्र मलसहित चेत् दुर्गन्धं मलरहितं चेन्निर्गन्धं भवति । आमातिसारे च नानावर्णं वारवारञ्चातिसार्य्यते, तथा तत्रोदरशूलमतीव जायते । अतीसारस्य चासाध्यलक्षणं—मलस्य कृष्णस्निग्धता, यकृत्खण्डवत् कृष्णरक्तवर्णता, घृततैलवसामज्जदधिदुग्धमांसधावनवारिसदृशता, कृष्णनीलवर्णता, ईषत्कृष्णरूक्षचिक्कणता, शिखिपुच्छवत् विविधवर्णचन्द्रकयुक्तता, घनशवगन्धिमस्तिष्काभता, सुगन्धपूतिगन्धबहुलता च, तथा तृष्णादाहान्धकारदर्शन, हिक्काश्वासपार्श्वशूलेन्द्रियचित्तमोहा गुह्यास्यन्तरवलिपाक प्रलापश्च, तथा गुदसंवरणाक्षमता बलमांसहीनता अतीवोदराध्मान शोथ, मलद्वारस्य पक्वतासत्त्वेऽपि गात्रस्य शीतलता उपद्रवाश्च । चिकित्सा स्वस्वपर्य्याये प्रदर्शनीया । अतीसारे नानाविधद्रवधातुनि सरणमन्यत्र केवलमेव कफनिःसरणमित्यतिसारप्रवाहिकयोर्भेद । इति माधवकरमतवादतीसारमाह । शार्ङ्गधरस्तु भयजमुक्त्वा सप्तविधमाह । तस्य सम्प्राप्ति सशम्पापां चातुरस्य कृशानु वर्च्चोमिश्रो मारुतेन प्रणुन्न । सोऽतीवातिसरत्येव यस्माद्व्याधि घोर तं त्वतीसारमाह । इमामभिप्रायुदरक्रिमितीदग्रावसादाभिसन्निरोधाश्च विष्टम्भ आध्मानमदाविपाको भविष्यत तस्य पूर्वरूपाणि । तस्य निदानम्—गुर्व्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतले । विरुद्धाध्यशनाजीर्णैरसात्म्यै

कटु शोथकफापहं । कास वातञ्च शोषञ्च ना शयदिति च स्मृत । वै निघ ।

**अपामार्गजटा** स्त्री। अपामार्गमूले । सि थी तृतीयकज्वर शीकण्ठ । 'अपामार्गजटाकोट्या ॥" च द सन्निपातज्व चि । एतद्बन्धन तृतीयकज्वरे हितम्। अपामार्गस्य मूलञ्च सम्यक्चालिता नन । बध्नीयाद्वामहस्तेन सर्व्वज्वरविमोचणम् ॥ वैद्यकम् ।

**अपामार्गतण्डुलः** । पु । अपामार्गबीजे । च मू ४अ । See अपामार्ग ।

**अपामार्गतैलम्** । क्ली । शिरोरोगे। अस्य पाठ —अपामार्गफलव्योपनिशाचवकरामठै ।सवि पक्वै मस्त मूत्रे तैल नस्य क्रमीन् जयेत् ॥ अत्र चवक —ঠেঁচেতা। तैलं ४ श. कल्क १ श । प्रयोगा । च द ।

**अपामार्गक्षारः** । पु । अष्टविधक्षारान्यतम क्षारे। एष गुल्मशूलघ्न । भा पू १भ ६ व. ।

**अपामार्गक्षारतैलम्** । क्ली । कर्णरोगे। तिलतैल ४श अपामार्गक्षार २श वारि १६श एकविंशतिवारान् परिस्राव्य क्षारवारि कुर्य्यात् । (मतान्तरे तु क्षारपरिमाण २८प वारि च १८श। कल्कद्रव्य शरावमित । च द भैषकर्ण रो चि । अपामार्गक्षारजले सरक्तसकल्केन साधित तिलज । अपहरति कर्णनाद बाधिर्य्यञ्चापि पूरणेन ॥ अ पामार्गक्षारस्य १६ श जलस्य २४ श एकविंशति वारान् परिस्राव्य तै १६ श तैलशोषभयात् जले नाल्पीयापामार्गक्षारकल्को देय, पिण्डीभूतात् क ल्कात् पृथग्भूत तैल ग्राह्यं न तु गालनीयम् । इति प्रयोगा ।

**अपालापमर्म्म** । क्ली । पृष्ठवंशमुभयतस्तयोर अंसफलके योरधोभागे । तथा तयोरेव च पृष्ठोरसोर्य्यं पार्श्वे, तयोरपरिभागयोरंसकूटयोरधोऽपालापाख्ये द्वे म र्म्मणीति ज्ञेयम् । वा भा ४अ. ।

**अपासनम्** । क्ली । मारणे । अम ।

**अपीनसः** । पुं। नासारोगविशेषे। "पीनसरोग"। लक्षण यथा—"आनह्यते यस्य विधूप्यते च प्रक्लिद्यते शुष्यति चापि नासा। न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत् तमपीनसेन। स तानिलश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्ग"मिति । सु. चि २२अ । तथा 'यो मस्तुलुङ्गाङ्गनपीतपक्व कफं स्रवेद्वाढमपीनस स ।'' च चि ।

**अपुच्छा** । स्त्री। शिंशपावृक्षे । श र. ।

**अपुष्टः** । त्रि । अपरिपक्वे । कचि ।

**अपुष्पः** । पु । उदुम्बरवृक्षे । यज्ञडुमुर गाछ ।

**अपुष्पफलदः** । पु । पनसवृक्षे । কাঁঠালগাছ। म फणस । रा नि व.११ । अपुष्पजातफलवृक्ष मात्रे । रा नि ।

**अपूपः** । पु । पिष्टके । हला । পুলি পিঠে। म घारगे । गोधूमसूक्ष्मपिष्ट गुडेन युक्त जलेन स मर्दितं । तद्वेल्यां वर्तुलनिभा घृते विपक्वा भवन्ति चापूपा । बल्या हृद्या रुचिदा गुरवो ह्यस्याय पुष्टिदा शीता । पित्तानिलशमनकरा मधुरा शीता । वै निघ. । পাঁউরুটী इति च केचिदाहु । गोधूमे । रा नि व १८ । [जटा ।

**अपूप्यः** । पु । गोधूमे । गोधूमचूर्णे । मयदा ।

**अपूरणी** । स्त्री । शाल्मलीवृक्षे । শিমুলগাছ। श.च । कार्पासवृक्षे ।

**अपेकः** । पु । दुरालभायाम् ।

**अपेतराक्षसी** । स्त्री। तुलसीक्षुपे । रा नि व १० । कृष्णतुलस्यां । কাল তুলসী । म काली तुलस । भा पू १भ गु.व वर्व्वर्यां । বাবুই । र मा ।

**अपोगण्ड.** । त्रि । वलिभे । विकलाङ्गे । पु । शिशौ । मे डचतुष्क । [ष टो ।

**अपोढिका** । स्त्री । पूतिकाशाके। পুঁই।

**अप्नम्(स)** । क्ली । जले ।

**अप्पित्तम्** । क्ली । चित्रकवृक्षे । अम. ।

**अप्रकाण्डः** । पुं । काण्डरहितवृक्षे, भिण्टिका दौ । अम. ।

**अप्रकृष्टः** । पुं । काके । श र । त्रि । अधमे ।

**अप्रतिकार्य्यः** । त्रि । दुश्चिकित्स्ये ।

**अप्रसवधर्म्मी** । त्रि । य पुरुष प्रसवधर्म्मी न भवति। "श्ववस्तु दुश्चारितमात्रकोऽगुणा अबीज प्रस्थोऽप्रसवधर्म्मिणो नपुंसकधर्म्मिकश्चेति ।'' सु. शा २अ । [मरुभूमि । ग्रिमभूमौ । रा नि व १ ।

**अप्रहतः** । त्रि । अप्रयुक्ते । জেশাত্র ভূমি । म

**अप्रिया ।** स्त्री । शृङ्गीमत्स्ये । শিঙী মাছ । बोदालिमत्स्ये । বোওয়াল মাছ ।

**अप्रेतराक्षसी ।** स्त्री । तुलसीवृक्षे । र मा ।

**अप्रोट ।** पु । भारद्वाजाख्यपक्षिणि । वै निघ ।

**अफल ।** पु । फलहीनवृक्षे । ঝাউ গাছ । म वाभवृक्ष हे च ४का । त्रि । यो न फलति । श च ।

**अफला ।** स्त्री । भूम्यामलक्याम् । काष्ठधात्रीवृक्ष । भा रा नि व ११ । लघुकारवल्लके । आमलकीवृक्ष । भा पू १भ । कुमार्य्याम् । घृतकुमारी । श च ।

**अफेनफलम ।** क्ली । अहिफेनफले । পোস্তার ঢেড়ি । भैष स्त्री रोग चि ।

**अफेलम् ।** क्ली । आफूके । আফি । म अफूकडरी । फा अफफून हि अफीम । आ लवनुल सख्वास । वै निघ । See अहिफेनम् ।

**अबरम् ।** क्ली । अन्तर्वंशे । मे रनिक ।

**अबल ।** पु । वरुणवृक्षे । श च ।

**अबालुक ।** पु । पानीयालुके । रा नि व ७ ।

**अबिला ।** स्त्री । मेष्याम् । ভেড়ী ।

**अब्ज ।** पु । निचुलवृक्षे । शङ्ख । धन्वन्तरौ । हिज्जलवृक्ष । सञ्चन मे जाहक ।

**अब्जम्** क्ली । पद्मे । पसु । रा नि व १०। See कमलम् ।

**अब्जकर्णिका ।** स्त्री । कमलवीजकोश । वै निघ ।

**अब्जकेशर ।** पु । पद्मकेशरे । च द ।

**अब्जभाग ।** पु । कमलकन्द । श च ।

**अब्जवीजभृत ।** पु । श्वेतकरवीरवृक्ष । वै निघ ।

**अब्जाक्षम् ।** क्ली । वालके । বালা । मं वाला । वै निघ । [रा नि व १०। पद्मसमूहे ।

**अब्जिनी ।** स्त्री । पद्मिन्याम् । পদ্মের ঝাড় ।

**अब्द ।** पु । मुस्तायाम् । सि यो ज्वर किरातादि । च "वालज्व चि । किरातादमृतोदीच्या ।" नागरमुस्तायाम् । নাগরমুতা । मं नागरमोथ । भद्रमुस्तायाम् । भ भद्रमोथ । मद १व । मघे । मेदिन्याम् । क्ली । अभ्रके । र मा ।

**अब्दनाद ।** पु । मेघनादक्षुपे । নটেনটে । स्त्री । शङ्खिन्याम्, भेक्याम् । म तान्दुलज । वै निघ ।

**अब्दसार. ।** पु । कर्पूरभेदे । रा.नि ।

**अब्धि ।** पु । समुद्रे । रत्ना ।

**अब्धिकफ ।** पु । समुद्रफेने । সমুদ্রের ফেনা । भा पू १भ ह व । गुणा —"रुचिकर लवनसुवरी लघु । चक्षुष्य शीतलश्चैव पटलादिरुजापहर । सरस विषदोषघ्न कण्ठशूलहर पर । कफघ्न कण्ठरोगघ्न पित्तञ्चैव विनाशयेत ॥" वै निघ ।

**अब्धिज. ।** पु । समुद्रफेने । रत्ना । (जौ) । अश्विनीकुमारौ ।

**अब्धिजा ।** स्त्री । सुरायाम् । हे च ।

**अब्धिडिण्डीर ।** पु । समुद्रफेने । वै निघ ।

**अब्धिफलम ।** क्ली । समुद्रजातफले । महाराष्ट्रादौ ख्याते औषधविशेषे । समुद्रफल इति लोके। गुणा —"फल समुद्रस्य कटूष्णकारि वातापहं भूतनिरोधकारि । त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि ।" रा नि ।

**अब्धिफेन ।** पुं । समुद्रफेने । रा नि ।

**अब्धिमण्डूकी ।** स्त्री। मुक्तास्फोटे शुक्तिकायाम् । झिनुक । मद व ४। मं मोतीसीप । हे च ४का ।

**अब्धिवृक्ष ।** पु । शाखिमूलवृक्ष । काकातोदालीति लोके ।

**अब्धिसार. ।** पु । रत्न । वै निघ ।

**अब्धिहिण्डीर ।** पु । समुद्रफेने । रा नि ।

**अभ्रम् ।** क्ली। अभ्रधातौ । मुस्तायाम् । रा नि

**अब्रह्मचर्य्यकम् ।** क्ली । मैथुने । त्रिका ।

**अभक्तच्छन्द ।** पु । अरोचकभेदे । यत्र नाग्रे भवेच्छ्रद्धा सोऽभक्तच्छन्द उच्यते । See अरोचक ।

**अभयम् ।** क्ली । उशीरे । वीरणमूले । বেণার মূল । रा नि व १२ । मद व २ । अम । भैष कुष्ठ चि कन्दर्पसारतैले ।

**अभयदा ।** स्त्री । भूम्यामलक्याम् । ভুঁই আমলা । म भूम आवली । वै निघ ।

**अभयनृसिंहरस ।** पु । रसोऽयं अतीसारग्रहणीगदयोर्हित । मात्रा १ गुञ्जा । अनुपान जीरकचूर्णं मधु च । द्रष्टव्य हिङ्गुलविकटुविष

जीरक टङ्गणरसगन्धकाभ्राणि प्रत्येकं समभागानि सर्वसममहिफेनम्। निम्बुकरसेन मर्द्दनं। भैष.।

**अभया** । स्त्री । (Terminalia chebula ; chebulic myrobalan) हरीतकीभेदे । प. मु। "पथ्याक्षा चाभया ज्ञेया।" रा.नि.व.११। इयं बाहुल्येन चम्पायां जायते। गुणः—चक्षुष्या। भा. पू.१भ.। अनुतापरनाशीति भवत्यः, वा.सू.१५अ. वचादिव.।"नागरातिविषाभयाः।" च.द.कफज्व. चि.आमलक्यादि.। "आमलक्यभया कृष्णा।" See हरीतकी। श्वेतनिर्गुण्ड्याम्। मञ्जिष्ठायाम्। जयन्त्याम्। जयायाम्। सिद्धि। मृणालि। काञ्चिके। काचन बुलहर्यां। रा.नि.व.१७।

**अभयाद्यमोदकः** । पुं। विरेचनाधिकारे। अत्र हरीतक्यादीनां चूर्णं प्रत्येकं पलमितं दत्त्वा ६ तोलकानि, शर्करा १२ पलानि, त्रिवृतायाश्च पल द्वयमेकत्र मधुना मोदकं कुर्य्यात्। च.द.विरेचना धिकारे।

**अभयाद्यावलेहः** । पु। अतिसारे अवलेहः। हा.चि.। ३स्थाने.३अ.।

**अभयारिष्टः** । पुं। अर्शोऽधिकारे रसः। अत्र हरीतकी १२।० श. द्राक्षा ६।०श. मधूकपुष्पं १० प. विडङ्गञ्च १० प. वारि २५६ श. शेषं ६४ श. गुड १२।० श.। गोक्षुरादीनां प्र. चूर्णं २प. प्रक्षेपः। भैष.।

**अभयालवणम्** । क्ली। औषधमिदं यकृत्प्लीहाधिकारे देयम्। पालिधा, पलाश, आकन्द, सिहु, आपाङ, वरुण, अग्निमन्थ, वासक, गोक्षुर, वृहती, कण्टकारी, भाटीकन्दा वा गन्धभादालि, हापरमाली, कुड़चि, पोसा, पुनर्नवा, एषां प्रति समूलपञ्चाङ्गं समभागं कुट्टयित्वा हण्डिकाभ्यन्तरे स्थापयित्वा च तिलनालाग्निना दहेत्। ततो भस्म १६प. जल ६४श. शेष. १६ श. क्षारतोयं ग्राह्य। गोमूत्र १६श. सैन्धव १६ प. हरीतकीचूर्णं ८प. सर्व्वमेकीकृत्य पूर्व्ववत् क्षारकल्पेन मन्दमितेन प क्तव्यं। पाकसिद्धौ घनीभूते च प्रक्षेपः—कृष्ण-जीरकं हिङ्गु त्रिकटु यमानी कुष्ठ शटी च, एषां प्रति २ तो.। धा.को.रस.र.। भैष.प्रयोगा.।

**अभयावटी** । स्त्री। गुल्माधिकारे। अत्र का अकर्षं कर्षं ... । हिना हरीतकी। र.सा स.। एषा वटी भैषज्यरत्नावल्यामुदरे दृष्टा।

**अभयाष्टकम्** । क्ली। अष्टहरीतकीभक्षणे। यथा—"द्वे पूर्व्वमद्यादशनादितो द्वे द्वे चापि भुक्ता तु तथा स्वपन्तु। अस्य प्रयोगादभयाष्टकस्य त्रिसप्तरात्रैश्च पुनर्युवा स्यात्॥"इत्यादि प्रयोगा.रसायन.।

**अभावः** । पुं। मरणे। असत्त्वे। मे.वत्रिकं।

**अभिघातः** । पुं। आघाते। शस्त्रमुष्टिलगुडादिभिर्हनने। भा.म.१भ.आगन्तु ज्वर लक्षणे।"अभिघाताभिषङ्गाभ्याम्।"

**अभिघातज्वरः** । पुं। आघातजन्यागन्तुकज्वरे। "अभिघाताभिचाराभ्याम्—आगन्तुर्जायते…।" मा.नि.ज्व.। अपिच—"तत्राभिघातजो वायुः प्रायो रक्तं प्रदूष्य च। सव्यथाशोफवैवर्ण्यं करोति सरुजं ज्वरमिति॥" च.। अत्र ज्वरे दोषा नारम्भकाः परन्तु पश्चादनुबन्धिनः स्युः।

**अभिघारः** । पुं। घृते। सं तूप। रा.नि.व.१५।

**अभिचारः** । पुं। मन्त्रादिना मारणादिप्रयोगे। मन्त्रादिद्वारा पीडायां वा। र.मा.। कृत्याद्युत्पादने वा। भा.म.१भ.आगन्तुज्व.। "अभिचाराभिशापतः।" यन्त्रमन्त्राद्यवपीडने। "अभिचाराभिशापोत्थे।" रत्ना.।श्येनादियागजसज्वरे। "अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते।"मा.नि.ज्व.।

**अभिज्ञः** । त्रि। कुशले। [शब्द.चै.।

**अभितापः** । पुं। सर्व्वाङ्गतापे। ज्वरज्वरे।

**अभिनवकामेश्वरः** । पुं। वाजीकरणमिदं भेषजम्। "तोलकैकं समादाय प्रत्यग्रगन्धकस्ततो। रक्तोत्पलदलाम्भोभिर्मर्द्दयेत् दिवसत्रयं। मर्दयित्वा पुनर्देयं गन्ध माषचतुष्टयम्। तस्यैव पत्रतोयेन पुनर्दत्त्वा च गन्धकम्। शङ्खियाचापि तोयेन दत्त्वा काचघटे दृढे। ततस्तु वालुकायन्त्रे पचेद्यामत्रयं ततः। कामकुम्भा समालभ्य सिद्धनतमतं परं॥" रतिकामप्रदं स्यादित्। रस.र.।

**अभिन्यासः (कः)** । पुं। सन्निपातज्वरविशेषे। तल्लक्षणम्—"यत्र प्रकुपिता दोषा उरःस्रोतोऽनुगामिनः। आमाभिरुद्धा यदि ते बुद्धीन्द्रियसमीरणाः। जनयन्ति महाघोरमभिन्यासं ज्वरं दृढम्॥ गुरौ देवे प्रमुग्धः स्यात् चेष्टा का-प्रिधोरुध। न च दृशिर्भवत मदतो ...

**अभुग्नः** । त्रि । अरोगिणि । [वज्रम् ।

**अभेद्यम्** । क्ली । हीरके । रा नि व १३ । See

**अभेषजम्** । क्ली । विपरीतौषधे । উল্টো ও ষুধ । तच्च द्विविधं बाधनं सानुबाधनञ्च । "अभेष जमिति ज्ञेयं विपरीतं यदौषधम् ।" च चि १अ ।

**अभोजनम्** । क्ली । उपवासे अनान्नभोजने वा উপোষ বা অমাত্র আহার । "अजीर्णे भोजनं येषां जीर्णे येषामभोजनम् । रात्रावभोजनं येषां तेषां नश्यन्ति धातवः ॥" सग्रह ।

**अभ्यक्तः** । पु । तिलकल्के ।

**अभ्यङ्गः** । पु । तैलादिमर्द्दने । আভ্যঙ্গ করে তেল মাখা । "मूर्ध्नि दत्तं यदा तैलं मवस्त्यभ्याङ्ग मङ्गतम् । स्रोतोभिस्तर्पयेद्गात्रं अभ्यङ्गः स उदा हृतः"। च द ज्व चि । गुणा —जलसिक्तस्य वर्द्धन्ते यथामूलेऽङ्कुरास्तरोः । तथा धातुविवृद्धिर्हि स्नेह सिक्तस्य जायते । शिरामुखै रोमकूपैर्धमनीभिश्च तर्पणम् । सुश्रु । स जरायमवातहा । दृष्टिप्रसाद पुष्ट्यायु स्वप्नसुत्वक्दार्ढ्यकृत् । वा.सू १अ. । स च शिरःश्रवणपादेषु विशेषेणानुशीलनीयः । र.मा. । अभ्यङ्गो वातरोगघ्नः धातुसाम्यं बलं सुखं । निद्रा वर्णमृदुत्वानि कुरुते दृष्टिपुष्टिकृत् । शिरोऽभ्यङ्ग शिरस्तृप्तिकेशदार्ढ्याधिपुष्टिकृत् । केशप्रसाधनं केश्यं रजोजन्तुमलापहा । मद व ३ । तैलेन शिरोमर्द्दने । भा । सदोषस्य व्रणस्य दोषोपशम नार्थं मार्द्दवार्थञ्च उपक्रमविशेषे । सु चि.१अ ।

**अभ्यञ्जनम्** । क्ली । तैले । हे च. । तैलमर्द्दने । रा नि व १५ ।

**अभ्यन्तः** । त्रि । आतुरे । अम ।

**अभ्यन्तरायामः** । पुं । तन्नामकधनुस्तम्भरोग विशेषे, अन्तरायामे । येन कुपितबलवान् वायु रङ्गुलिगुल्फोदरहृदयवक्षोगलादिकमभिप्रपद्य स्नायुमनू न्नाकर्षन् नामं आकलनं करोति । तत्र चाधि क्षमता तनुसन्ध्यादि च जायतानन्तरम्—"अङ्गुली गुल्फजठरहृद्वक्षोगलसंश्रितः । स्नायुप्रतानमनिलो यदाक्षिपति वेगवान् । विष्टब्धाक्षस्त्वधस्तनुर्भग्नपार्श्वं कफं वमन् । अभ्यन्तरं धनुरिव यदा नमति मान वः । तदाभ्यन्तरायामं कुरुते स महाबली ।" सु.नि.वा.व्या. ।

**अभ्यमितः** । त्रि । आतुरे । अम ।

**अभ्यवकर्षणम्** । क्ली । शल्याद्युत्पाटने । শেল তোলা, কাঁটা তোলা । अम. ।

**अभ्यवहरणम्** । क्ली । भोजने ।

**अभ्यवहारः** । पु । आहारे । रत्ना ।

**अभ्यान्तः** । त्रि । रोगिणि । अम ।

**अभ्याहारः** । पु । भक्षणे । स च भक्ष्यभोज्य लेह्यपेयभेदेन चतुर्विधः । सु ।

**अभ्यूषः** । पु । ईषत्पक्वशालायादौ । अम ।

**अभ्रम्** । क्ली । मुस्तायां । मेघे । रा नि व ६ । अभ्रकधातौ । रा नि व १३ ।

**अभ्रकम्** । क्ली । भद्रमुस्तायाम् । कर्पूरे । स्वर्णे । वेधे । Talc स्वनामख्यातधातौ । অভ্ভর । হি আভ্ । गुणा —गुरु हिमं बल्यं कुष्ठमेहवि दोषघ्नं । मद व ४ । अभ्रकं चतुर्विधं—श्वेत पीतलोहितनीलभेदात् भिन्नभिन्नक्रियायां प्रयु ज्यते । यथा—श्वेतं तारे, पीतरक्ते काञ्चने, नीलञ्च व्याधौ प्रयोज्यं यथोत्तरं गुणाढ्यञ्च । तेषु नीलाभ्रं दर्दुरनागपिनाकवज्रभेदेन चतुर्भेदम् । परीक्षा गु णाश्च यथा—अग्नौ क्षिप्तं दर्दुरं भेकरवं नागं फूत्कारं पिनाकं धनुःस्वनं वज्रन्तु न विकारं धत्ते । एषां सेवनेन गुल्मी व्रणी कुष्ठी च मेहरोगी भवति । रा नि व १३ । कुष्ठमर्दं पिनाकं स्यात् दर्दुरं मरणप्रदं । नागं देहगतं नित्यं व्याधिं कु र्य्याद्भगन्दरम् । रसे रसायने चैव योज्यं वज्राभ्रकं प्रिये । तस्माद्वज्राभ्रकं ग्राह्यम् । र.सा सं । अभ्र शोधनम्—१।वज्रपुष्परसेन पिष्टमभ्रकं वन्यगुरुच कन्दमध्ये निरुध्य गोमयभूमितले नाम स्थाप्यम् । २।त्रिफलाक्वाथगोमूत्रदुग्धकाञ्जिकेषु अभ्राणी पुनः पुनः क्षिप्त, ततं ततं क्षिप्तं शुद्धं भवति ।३।अभ्रं समवारं तप्त तप्त कदलीक्वाथे निक्षिप्तं शुद्धं भवति। र.सा सं ।४।अभ्रपत्राणि प्रदग्ध्य चूर्णयित्वा चूर्णयेत् दिनैकं तानि काञ्जिकपर्युषितानि काञ्जिकेन पुनः पिंषेत् । ततो माषकादिरसेन मर्दयित्वा च पुनः पुनर्भावयित्वा ... पुनः पुनः दहेत् यावत् निश्चन्द्रतां लभन्ते । इति विशुद्ध मर्द्द ... । भ प्र. । ... [illegible]

**अमध्यस्थधर्म्मिणी** । त्रि । या चेतनजडो-भयधर्म्ममध्यवर्त्तिनी न भवति । तथा: केवलं न उभयत्वात् पुरुषस्य च तथात्वात् । सु.शा १अ. ।

**अमर:** । पुं । अस्थिसंहारे । हाडभाङा । रत्ना.। वज्रीद्रुमे । सिजुगाछ.रचिकं । बद्धावे । अ र । पारदे। रा.नि.व.१३ । कुलिशि । क्ली । सुवर्णे । वै.निघ. ।

**अमरकणा** । स्त्री । गजपिप्पल्याम् । वै.निघ. २भ.पाण्डु चि भूनिम्बादित्रिपुटी । [व.४।

**अमरकण्टिका** । स्त्री । शतावर्य्याम् । रा नि.

**अमरकन्द:** । पुं । कन्दविशेषे । वै.निघ ।

**अमरकालिक:** । पुं । वृश्चिकाल्याम् । विछाती । भैष वा.व्या.सिंहमा गुग्गुली ।

**अमरकाष्ठम्** । क्ली । देवकाष्ठे । দেবদারু ।

**अमरकुसुमम्** । क्ली । लवङ्गे । वै.निघ.नवरी. नैलीकव चि.रसे ।

**अमरज:** । पुं । दुष्खदिरवृक्षे । गुयेबाबला । रा.नि. । देवदारुणि । नदीवटे । वै निघ.२भ. यक्ष्मादि: ज्व ।

**अमरतरु:** । पुं । देवदारौ । वै.निघ सा.ज्व. अर्कादि: । "किरातामरतरुसना ।"

**अमरदारु** । पुं,क्ली । तैलदेवदारुणि । रा.नि. व १२ । चि क क वल्ली-स्त्रीरी,चि. । तैलदेवदारु वृक्षे । मलयादेवदारु ।

**अमरद्रु:** । पुं । विट्खदिरवृक्षे । गुयेबाबला ।

**अमरपुष्पम्** । पुं, क्ली । पूगफले । कामवृक्षे । चाये । केतके । मे पदचक्रं ।

**अमरपुष्पक:** । पुं । कामवृक्षे । কেশে । प. सु. । काशभेदे । र.मा. ।

**अमरपुष्पिका** } स्त्री । चोरपुष्पीवृक्षे । চোর
**अमरपुष्पी** } काचकी, চোর খড়িকা । रमा । काशवृक्षे । [काचे ।

**अमर(ल) रत्नम्** । क्ली । स्फटिके । रा.नि. ।

**अमरवल्ली** । स्त्री । आकाशवल्ल्याम् । भं अम-रवेल । हिं अमरबेलि । আলোকলতা । मा. पु १म गु.व. । मद.व.१ । आकाशेतिस्थातलतायां । गुणा:—इयवल्ली वशकरी परं हया रसायनी । मूत्रकृच्छ्रविदलनकरी पुष्टिदा कार्य्यवारिणी । कीप-दंशिकरोगांश्च रक्तदोषं हरेदियम् ॥ वैद्यकम् ।

**अमरसर्षप:** । पुं । देवसर्षपे । राइ । वै.निघ.।

**अमरसुन्दरी** । स्त्री । ज्वराधिकारे रस: । पाठो यथा—त्रिकटु त्रिफला चैव ग्रन्थिकं रेणु-कामलम् । मातुलुङ्गं मृतं लौहं पारदो विषगन्ध-कम् । समभागमिदं चूर्णं तस्माच द्विगुणो गुड: । कोलप्रमाणां गुडिकां प्रातरुत्थाय सेवयेत् ॥ इत्या-दि । प्रयोगा. ।

**अमरा** । स्त्री । दूर्व्वायाम् । मे.रचिकं । गुडूच्यां। र.मा. । इन्द्रवारुणीलतायां । ब्राह्मीलशणी । रा. नि.व.२ । नीलदूर्व्वायां । स्थूलकन्यायाम् रा.नि. व.५ । नीलीवृक्षे । भैषज्यग्राम् । वृश्चिकाल्यां । विछाति गाछ । रा.नि व.६ । नदीवटे । रा नि व. ११ । जरायौ । मे.रचिकं । गर्भनाड्याम् । फूल । भैष.स्त्रीरो. । नाभिनालायाम् ।

**अमराह्वम्** । क्ली । देवदारुकाष्ठे । वा.सू.१५ एलादि अरुण । "स्प्रक्काव्याघ्रनखीऽमराह्वमगुरु: ।"

**अमरी** । स्त्री । नीलदूर्व्वायाम् । श्वेतनिर्गुण्ड्यां । मूर्व्वायाम् । मूर्वा । वै.निघ ।

**अमरुफलम्** । क्ली । उत्तरदेशप्रसिद्धफले । गुणा.—अमरोश्च फलं प्रोक्तं मलद्रवकरं मतम् । सरं दाह रक्तपित्तं कामलां मूत्रकृच्छ्रकम् । मूत्रा-श्मरीश्च हन्तीति ऋषिभि: परिकीर्त्तितम् । वै. निघ. । [ज्व.निर्गुण्डीधूपे ।

**अमरेन्द्रतरु:** । पुं । देवदारुवृक्षे । वै.निघ.२भ

**अमलम्** । क्ली । अभ्रके । मे.लचिकं । समुद्र फेने । र.मा. । कर्पूरे । वै.निघ २भ.चपला.चि. । रौप्यमाक्षिके । पित्ते । कतकवृक्षे । गन्धद्रव्यविशेषे।

**अमलदीप्ति:** । पुं । कर्पूरे । च द. ।

**अमलपत्री** । पुं । हंसे ।

**अमलमणि:** । पुं । स्फटिके । रा नि.व.१३ । कर्पूरमणी । कर्पूरगन्धमणिविशेष ।

**अमलरत्नम्** । क्ली । स्फटिके । रा.नि.व.१३ ।

**अमला** । स्त्री । महानील्याम् । বড় নীল । रा.नि.व.४। सेहुण्डभेदे । रा.नि.। भूम्यामलक्याम् । च.म.। नाभिनालायाम् । आमलक्याम् । ভূঁইআমলা ।

मयोगा च्छद्रोग चि.। [मृत्। भ ठीभ।

**अमलाज्झटा**। स्त्री। भूधात्र्याम्। भुँइ आ।

**अमसः**। पु। रोगे। उ।

**अमानस्यम्**। क्ली। पीडायाम्। दुःखे।

**अमिलातकम्**। क्ली। वेलाख्ये पुष्पे। इला।

**अमिलातका**। स्त्री। महाराजतरुणीपुष्पवृत्ते। ८वेल। रा नि व १०। [वै निघ।

**अमूला**। स्त्री। अग्निशिखावृत्ते। ईषलाङ्गुलिया।

**अमृणालम्**। क्ली। लामज्जके। श्वेतशीत। रा नि व १२। भा पु १ भ क व। मद व ३। उशीरे। ८वेणार मूल। रवा। रा नि व १२। च.द अर्श चि प्राणदागुडिका।

**अमृत**। पु। पारदे। रा नि व १३। वनमुद्गे। रा नि व १६। See मकुष्ठक। अचि २स्थान २अ। धन्वन्तरी। ना धन्वन्तरिर्देवयी। मे तत्रिक। वाराहीनाममहाकन्दशाके। शुयाव आलू। रा नि व ७। क्ली। पीयूषे। सलिले। रा नि व १४। घृते। मे रा नि व १५। वै निघ वा.व्या भुजङ्गीगुटी। "अमृत यज्ञशेषे स्यात् पीयूषे सलिले घृते" मे। विषमामान्ये। दुग्धे। रा नि व १५। अन्ने। हे च। औषधे। रा नि व २०। यज्ञेविषे। स्वर्णे। भक्ष्य द्रव्ये। हे च।

**अमृतकन्दा**। स्त्री। कन्दगुडूच्याम्। म कन्द गुलवेल। वै निघ। See कन्दगुडूची।

**अमृतकल्परस**। पु। अजीर्णाधिकारे रस। शुद्धौ पारदगन्धौ च समानौ कज्जलीकृतौ। तयो रर्द्धे विष शुद्ध तत्सम टङ्कण भवेत्। भृङ्गराजद्रवे भाव्य चिदिन यवत पुन॥ माषा सुद्गमाना। अन्न तत्सममिति विषसमम्। र सा स।

**अमृतगुडिका**। स्त्री। भैषज्यमिद अजीर्णे हितम्। कुर्याद्भस्मविषव्योषत्रिफलापारदैः समै। भृङ्गाम्बुमर्दितैर्मुद्गमाषामतवटीं शुभाम्॥ रसे चि।

**अमृतला**। स्त्री। हरीतक्याम्। वै निघ।

**अमृतमाशघृतम्**। क्ली। राजयक्ष्मणि प्रश सम्। "जीवकर्षभकौ मेदा जीवन्तीं भागरें शटीं। चतस्र पर्णिनीर्मेदे काकोल्यौ द्वे निदग्धिकाम्। पुनर्नवे द्वे मधुकमात्मगुप्तां शतावरीम्। ऋद्धि परुषक भार्गीं मृद्वीकां बृहतीं तथा। शृङ्गाटकमामलकीं पयस्यां पिप्पलीं बलाम्। बदराक्षोड वातादखर्जूराभिषुकाणि च। फलानि चैवमादीनि कल्कान् कुर्वीत कार्षिकान्। धात्रीफल विदारीक्षुछागमांसरसान् पय। दत्त्वा प्रस्थोन्मितान् भागान् घृतप्रस्थं विपाचयेत्। प्रस्तं मधुन शीतं शर्करार्द्धतुला तथा। पलार्द्धकं मरिचलवङ्गै लापत्रकेशरम्। विनीय चूर्णयेत्तस्माल्लिह्यान्मात्रां यथाबलम्। अमृतप्राश इत्येव नराणाममृतोपमम्। सुराघृतमयं पथ्य क्षीरमासरसाशिन। नष्टशुक्र क्षतक्षीणदुर्बलव्याधिपीडितान्। स्त्रीप्रसक्तान् कृशान् लान् स्वरहीनांश्च बृंहयेत्। कासहिक्काज्वरश्वास-दाहतृष्णास्रपित्तनुत् पुत्रदो वृद्धि दाहशूलच्छया पह॥" अस्य पाको यथा, मूर्च्छितगव्यघृत ४ श.। कल्काथद्रव्याणि प्रत्येकं कर्षमितान्येकत्र कल्कीकृत्य तै, धात्र्यादिरसै प्रत्येक प्रस्थमितैश्च घृतं यथाविधि पाच्यम्। पाकसिद्धौ छानयित्वा मधुन प्रस्थं शर्करायां ५० पलानि, मरिचस्य गुडत्वच एला या तेजपत्रस्य नागकेशरस्य च प्रत्येकं चूर्णमर्द्धपल (४तौ.) मिश्रणीयम्। कल्कद्रव्याणि यथा—जीव कर्षभकौ (अभावे गुडूची, वंशलोचना) क्षीरविदारी (भुँइकुमड़ा) महाबला वा जीवन्ती शृङ्गी शटी शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी मेदा (अभावे अश्वगन्धा) महामेदा (अभावे शारिवा) काकोली क्षीरकाकोली कण्टकारी बृहती रक्त पुनर्नवा श्वेतपुनर्नवा यष्टीमधु कपिकच्छु (आलाकुशी मूल) शतावरी ऋद्धि (अभावे बला ८वेलेडा) परुषकफल भार्गी मृद्वीका शृङ्गाटकं भूम्यामलकी शुक्लभूमिकुष्माण्ड पिप्पली वाट्यालक बदरफल अक्षोटफल वातादं (बादाम) खर्जूर अभिषुक (पेस्ता) च। एवंविधानि अन्यानि फलानि च। रसाय यथा—आमलकीरस भूमि कुष्माण्डरस इक्षुरस छागमांसरस, दुग्धच। प्र योगा. यक्ष्म चि। अन्यत् ध्वजभङ्गाधिकारे। व स्याय पाठ—"छागमांसं बलाश्चैव वाजिगन्धां तथैव च। जलद्रोणे विपक्तव्य कुर्यात् पादावशेषितं। घृतप्रस्थं पचत्तेन अजाक्षीरं चतुर्गुणं। मूर्च्छनार्थं प्रदातव्य कुङ्कुमच द्विकार्षिकं। बलामूलञ्च गोधूमं चाश्वगन्धा तथामता। गोक्षुरञ्च कसेरुञ्च त्रिकटुञ्च सधान्यकं। तालाङ्कुरञ्चैलफलञ्च कस्तूरीबीजका-

नरी। मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी। दार्व्वी प्रियङ्गुर्मञ्जिष्ठा नतं तालीशपत्रकं। एलापत्रं त्वचं नागं जातीकुसुमरेणुकं। सरलं जातिकोषञ्च सुक्षौमोत्पलसारिवे। मूलं विल्वस्य जीवन्ती चर्हिंष्ठी चडुम्बरम्। प्रत्येकं कर्षमात्रन्तु पेषयित्वा विनिक्षिपेत्। वस्त्रपूते सुशीते च सितां दद्याच्छरावकम्॥ भैष। द्वा अभि,२स्या ६४।

**अमृतप्राशावलेहः**। पुं। अयं राजयक्ष्माधिकारे उक्तः। तस्य पाठः—"क्षीरे धात्री च मञ्जिष्ठा क्षीरिणाञ्च तथा रसैः। पचेत्समैर्घृतप्रस्थ मधुरे. कर्षसम्मिते.। द्राक्षाद्विचन्दनोशीरैः शर्करोत्पलपद्मकैः। मधूककुसुमानन्ताकाश्मरीतृणसञ्ज्ञकैः। प्रस्थार्द्धं मधुनः शीते शर्करार्द्धतुलां तथा। पलार्द्धिकाश्च संचूर्ण्य त्वगेलापत्रकेशरान्। विनीय तत्र सलिलान्मात्रां नित्यं सुयन्त्रितः। अमृतप्राशमित्येतद्विख्यातं परिकीर्त्तितम्।" भा-म ख.२भ। क्षीरे काकोलीक्षीरकाकोल्यौ। क्षीरिणः वटाश्वत्थोदुम्बरप्लक्षपारीशाः तेषां त्वक्। इयं गुञ्ज्हणं क्षीरादीनां क्वाथैः द्राक्षादीनाञ्च कल्कैः पचेत्।

**अमृतफलम्**। क्लीं (*Nák. Pyrus communis*) The pear tree. लघुविल्वफलाकृती नाम्पातीति प्रसिद्धे काबुलदेशजफलविशेषे। पञ्जावे च नाक इति ख्याते। गुणाः—गुरु वातघ्नं स्वादुर्म्रं रुचिकृत् शुक्रकृच्च। मद व.६। अमृतस्य फलं धातुवर्द्धकं मधुरं गुरु। कषायाम्लं वातहरं त्रिदोषघ्नं च ग्रामकम्॥ वै-निघ.। लघु पथ्यं स्वादु त्रिदोषहरञ्च। इदञ्च सुहलदेशे प्रचुरं लभ्यते। भावमिश्रः। पुं। पारदे। रश्मिनामकौषधे। पटोल वृक्षे। रा.नि व.३। धात्रीवृक्षे। आमलागाछ। मद।

**अमृतफला**। स्त्री। द्राक्षायाम्। क्विम्मिग्। हिं किसमिस्। आमलक्याम्। रा.नि.व.११। लघुखर्जूरीवृक्षे। छोट खेजुरेर गाछ। द्रिता. द्राक्षायां। कोऽपि तनरा तनरीति च ख्याता।

**अमृतबन्धुः**। पुं। अश्वे। वै निघ।

**अमृतभल्लातकावलेहः**। पुं। कुष्ठाधिकारीयमिदम्। यथा भल्लातकफलचूर्ण(१श) त्रिसाहोमध्ये (६श.) क्षिपेत्। तत्पश्चात् गुडूच्याः (१श) चूर्णं तत्कल्कांस क्षिपेत्। हरीतक्याश्च चूर्णः (१श.) दुग्धं तावदर्द्ध (१६श.) दद्यात्। सिता प्रस्थमितां (२ श) दद्यात्प्रस्थार्द्धं (१ श) माक्षिकं क्षिपेत्। सर्व्वाण्येकत्र भाण्डे तु पचेन्मृद्वग्निना शनैः। सर्व्वद्रवे घनीभूते पावकादवतारयेत्। तत्र चैतानि चूर्णानि ब्रूमो विश्वविषामृताः। बाकुची चाथ दद्रुघ्नः पिचुमर्दौ हरीतकी। अक्षो धात्री च मञ्जिष्ठा मरिचं नागरं कणा। यमानी सैन्धवं मुस्तं त्वगेला नागकेशरम्। प्रपौण्डं पत्रकं बालमुशीरं चन्दनं तथा। गोक्षुरस्य च बीजानि कर्चूरी रक्तचन्दनं। पृथक् पलार्द्धमानानां (प्र.४तो।) चूर्णमेषामिह क्षिपेत्। पलमात्रमिदं प्रात समश्नीयाज्जलेन हि॥ विषा=अतिविषा, अमृता=गुडूची। बाकुची=सोमराजी। अक्षः=बिभीतकं। पत्रकं=तेजपत्रम्। बालं (वाला)। कर्चूरः शटी एकाङ्गी वा। भा म ४भ कुष्ठ-चि।

**अमृतभल्लातकी**। स्त्री। रसायनोऽयं योगः। रस र। अथ पक्वभल्लातकफलं, विदलमिष्टकाचूर्णघृष्टं प्रक्षालितञ्च शुष्कं कृत्वा पुनस्तद्विदलीकृत्य ६४ प. वारि ५१२ प शेषः १२८ प शीतले क्षीरं १२८प,तत्पादशेषे शीते च घृतं ३२प ततश्च सुद्रापाकेऽवतार्य्य,खण्डस्य १६प. मिश्रयित्वा दिनसप्तकं स्थापयेत्। भल्लातकानां पक्वानीकृतानां वृन्ताग्रतानाञ्च यदाद्रकं स्यात्। तदिष्टकाचूर्णकणैर्विघृष्य प्रक्षालयित्वा विसृजेत्प्रवाते। शुष्कं पुनस्तद्विदलीकृतञ्च ततः पचेदप्सु चतुर्गुणासु। तत्पादशेषं परिपूतशीतं क्षीरेण तुल्येन पुनः पचेत्तम्। तत्पादशेषं पुनरेव शीतं घृतेन तुल्येन पुनः पचेत्तम्। तदर्द्धया शर्करया विमिश्रं ततः खर्ज्जेमध्ये स्थितं विधाय। तत्सप्तरात्रादुपजातवीर्य्यं सुधामृतादप्यधिकत्वमेति। रस.र रसायन। सा स्त्री। भैष कुष्ठाधिकारे। अन्या च विविधाधिकारे—सुपक्वभल्लातकफलं विखण्डितं ८श. वारि ३२श. (अग्नि वैगुण्याभावात्) पादशेषः ८ श. क्वाथो ग्राह्यः। अथ दुग्धं ३२ श घृतञ्च शरावद्वय (४ श.) दत्त्वा तावत्पचेत् यावद्धनता न गच्छेत्। घनीभूते शर्करायाः १६ पलानि मिश्रयित्वा दिनसप्तकं स्थापयेत्। च द रसायने। पाठो यथा—सुपक्वभल्लातकफलानि सम्यक् द्विधा विदार्य्याढकमम्भितानि। विपाच्य तोयेन चतुर्द्दुणेन चतुर्थशेषे व्यवनीय तानि। पुनः पचेत् क्षीर चतुर्गुणेन घृताशकेन घनं यदा स्यात्। सिता घृताद्विगुणाः पट्टैः विमिश्र युक्ताम्बु दिनानि

सम इत्यादि। घृतावतुर्गुण चौर घृतस्य प्रस्थ इष्यते इति। च द.विविधाधिकारे।

**अमृतमञ्जरी**। स्त्री। गोरचदुग्धीक्षुपे। रा.नि.व ५। सामान्यज्वरे रसविशेष। "हिङ्गुल मरिच टङ्ग पिप्पली विषमेव च। जातीकोष सम सर्व्वं जम्बीराद्भिर्विमर्द्दयेत्॥" माषा २ वा ३ गुञ्जा। अत्र जातीकोषं (जयित्री)। अन्या कासाधिकारे,पाठ तुल्य एव। र.सा स।

**अमृतमण्डुरः**। पु। परिणामशूले देय। पाठ — मण्डुरस्य पलान्यष्टौ शतावर्य्यारसलया। चीराज्य दधि प्रत्येक पिष्टा चतु पल पचेत्।' इत्यादि लौह.८प शतावर्य्यादीना प्रत्येक चतु पलच एकत्र पचेत्। रस र। [प्र स २०व।

**अमृतमन्थ.**। पु। दुग्धादिपरिणीलति मन्थ।

**अमृतयोग.**। पु। नक्षत्रयोगविशेषे दिन करकरयुक्त सोमसौम्यन वापि तुरगसहितभौम सोमपुत्रीऽनुराधा। सुरगुरुरपि पुष्य रेवती शुक्र वारे दिनकरसुतयुक्ता रोहिणी सौख्यहेतु। ज्यो ति २स्या ६प।

**अमृतरसा**। स्त्री। कपिलद्राक्षायाम्। आङ्गुर इति लोके। मं कालिद्राख। रा नि व.११।

**अमृतलता**। स्त्री। गुडूच्याम्। रा नि व ३। श.चवि।

**अमृतलतादिघृतम्**। क्ली। पाण्डुरोगाधिकारे घृतम्। तस्य पाठ – अमृतलतारसकल्क प्रसाधित तुरगविहित सर्पि। चीर चतुर्गुणसंत हितरैव हलीमकारोग्य॥ भा म २भ.।

**अमृतवटक.**। पुं। सन्निपातातिसारे हित। श चवि ३स्या ३प। पाण्डु चि।

**अमृतवटी**। स्त्री। ग्रहिण्युध्ये रसविशेष। अमृतवराटकमरिचै हिपयनवभागिकै क्रमश। विष २कडि ५ मरिच ८ तो। जलेन मुद्गसमाना वटी कार्य्या। भैष.।

**अमृतवर्त्तिका**। स्त्री। मधुमयतन्त्रीक्तरसा यनवर्त्ती। तत्साधन यथा—त्रिकटु त्रिफला ब्राह्मी गुडूची चित्रक नागकेशर षष्ठी भृङ्गराज निर्गुण्डी हरिद्रा दारुहरिद्रा मलाम्न(मिढि)लवङ्गा माषा तीलक् विडङ्ग वचानां चूर्णं प्रत्येक १प काम रूपटिणीयगुडस्य च ५०प एकत्र समर्द्य १६० वर्त्तिका कार्य्या। प्रत्यहं भोजनात्प्राक् सन्ध्यायां वा शीतलजलेन एकैक सेव्यम्। भैष।

**अमृतवल्लरी**। स्त्री। गुडूच्याम्। भा.पू १भ गु व। उपोदकायाम्। वड पुंई।

**अमृतवल्लिका** / **अमृतवल्ली** स्त्री। चित्रकूटप्रसिद्ध गुडूच्याम्। र.मा। रा नि व ३। ज्यो ति २स्या २प। अमृतस्य च वल्ली सा हितकारी विषापहा किञ्चित्तिक्ता जराव्याधिहरी कुष्ठमेहा घ्नी। कामलत्वयश्लीपघ्नी त्रविभि परिकीर्त्तिता। वै निघ.जीर्णज्व.हरीतकीपाके।

**अमृतसङ्गमः**। पु। खर्परिकायाम्। खापर। म कलवापरी। वै निघ.। [रा नि व ५।

**अमृतसञ्जीवनी**। स्त्री। गोरचदुग्धीनामक्षुपे।

**अमृतसम्भवा**। स्त्री। गुडूच्याम्। रा.नि व,५।

**अमृतसहोदरः**। पु। घोटके। जयद.।

**अमृतसारजः**। पु। गुडे। गुड। म काकवी। रा नि व १४। तवराजखण्डे। नवात। रा नि व १४। तृषाज्वरदाहरक्तपित्तघ्न।

**अमृतसारजा**। स्त्री। शर्करायाम्। चिनि। म खडेसाकर।

**अमृतसारताम्रम्**। क्ली। रसायनाधिकारे।

**अमृतसोदर.**। पुं। घोटके। रा.नि व १८।

**अमृतस्रवा**। स्त्री।चित्रकूटदेशे स्वनामप्रसिद्ध लतायां। वरस्नी लता। अमृतवल्लि। गुणा — दृष्टिनिकरसायनी,विषघ्नी त्वक्कुष्ठामकामलाशोफ जित्। रा नि व ३। त्रायमाणायाम्। रा.नि व.५। माता २ माषा।

**अमृतहरीतकी**। स्त्री। अजीर्णे। यथा— "धान्यकं जीरकचैव सुसक पटुपञ्चकंयमान्यामठ-पत्रच लवङ्ग त्रिकटुन्तथा। प्रत्येकं समभागमु मख्यचूर्णानि कारयेत्। सर्व्वचूर्णसम दद्यादभया, चूर्णमक्तम्।" सा कौ.। तक्रे समुत्स्विन्नशिवा शतानि सहोभसुद्धृत्य च कौशलेन। षड्यष पञ्च-पटूनि हिङ्गुधारावसाजीरनभीदकच। पुरैव सम्भाव्य तथा समान चिपेत् शिवाबीजनिवार-मध्ये ह प्रवीणा।

**अमृतचार.** । पु । नवसागरे । वैं निघ ।

**अमृता** । स्त्री । गुडूच्याम् । रा नि व ३ । रमा । आमलक्यां । रा नि व ११ । हरीतक्यां । प॰मु । "स्थूलमांसामृता सूता । इय चम्पाजाता । रा नि व ११ । तुलस्यां । काष्ठधात्रीवृक्षे । भा । मदिरायां । रा नि व १४ । इन्द्रवारुण्यां । रा नि व ३ । पारावतपद्यां । लता फट्की । रा नि व.३ । गोरचदुग्धायां । कृष्णातिविषायाम् । रक्तत्रिवृतायां । रा नि व ६ । दूर्व्वायां । पिप्पल्याम् । मे । लिङ्गिन्यां । रा नि.व ३ । नीलदूर्व्वायां । रा नि.व ८ । श्वेतदूर्व्वायाम् । नागवल्ल्याम् । पान । रास्नायाम् । गरुडवल्ल्याम् । वै निघ चय चि सूर्य्यप्रभायाम् । खर्जूरीतिख्यातलतायाम् । कन्दगुडूच्याम् । स्फटिकारिकायाम् । मद व ४ । मद्योगा । गुडूचीति चिन्तकगुड । वा सू १५, आरग्वधादि' । निम्बामृता मधुरसा शुक्लचपाटा, पद्मकादौ भरुष । महामृता दश जीवनसंज्ञा । चि १अ किरातादि । किरातक्तिकममृता । च द वातज्व.चि । किरातान्दामृतोदीच्य—। च द पित्तज्वरौषधादि । च सू ४अ ।

**अमृताख्यगुग्गुलु** । पु । वातरक्ते । गुडूची २ श गुग्गुलु १ श त्रिफला प्रत्येक १ श वारि ६३ श सङ्कुद्य पाच्यम् । पादशिष्टे छानयित्वा तावत्पुन पाच्यं यावत् न घनीभूत भवति । घनीभूते दन्त्यादिचूर्णं प्रत्येकं ४ तो त्रिवृच्चूर्णञ्च २ तो ईषदुष्णतामत्र प्रक्षिप्य मर्द्दयेत् । बलाबल वीक्ष्य मात्रा देया । च द वातरो चि ।

**अमृताख्यलौह.** । पु क्ली । रक्तपित्ताधिकारे लौह । पाठो यथा—अमृता त्रिवृता दन्ती श्रावणी खदिरो वर्ष । चित्रको भृङ्गराजश्च कौकिलाक्ष सपुष्कर । पुनर्नवा बलाकाशशिग्रुमीरटदारका । गवाक्षी पीवरी कन्दशविका तालमूलिका । नागबला कथामूल कुष्ठ मालयष्टिका । पलोन्मितानि चैतानि जलद्रोणे विपाचयेत् । अष्टभागावशेषन्तु कषायमवतारयेत् । त्रिफलायास्तथा प्रस्थं जलाष्टगुणपाचितं । तस्मादष्टावशेषन्तु कषायं सुपरिस्रुतम् । माक्षिकेण हतस्यापि पुटितस्य यथाविधि । अयसश्चूर्णितं पूतं पलयोडशसम्मितम् । पलान्यभ्रस्य तावन्ति तावन्ति गन्धकस्य च । द्वे द्वे • पले रसस्यापि खल्वितस्य विधानत । गुग्गुलस्य च पलान्यष्टौ सिताया वाथ पैत्तिके । रक्तपित्ते तु खण्डेन मत्स्यण्ड्या वापि कासवे । गुग्गुलोर्द्विपलं दत्त्वा प्रस्थमेकन्तु सर्पिष । एव पाकविधिज्ञस्तु पचेल्लौह समाहित । शीतेऽवतार्य्य मधुन क्षिपेदष्टपल भिषक । माक्षिकस्य विशुद्धस्य द्विपल रजस क्षिपेत् । शिलाजतोस्तथा चूर्णं पलार्द्धसम्मित भिषक् । तथैषां प्रक्षिपेच्चूर्णं पलमात्र पृथक पृथक ॥ इत्यादि । अमृतादिवाह्मणयष्ट्यन्तानां प्रत्येक पलमित, वारि ३२ श शेष ८ श । त्रिफला मि २ श वारि ३२ श शेष ८ श । शोधितलौह १६ प अभ्र ४ प रसगन्धकौ ४ प खण्ड ८ प गुग्गुलु २ प घृत २ श । एकत्र लौहपाक कार्य्य । शीतले प्रक्षे मधु ८प स्वर्णमाक्षिक २प शिलाजतु ४ तो । अत्र श्रावणी मुण्डितिका । मोरटमिक्षुमूल । दारको वृद्धदारक । दर्भ उलुमूल । पीवरी शतावरी । गवाक्षी गोरक्षकर्कटी । नागबला गोरक्षाकुलिया । कुष्ठपुष्कराभ्यां काण्डग्रन्थिभेदेन ग्रहणम् । अथवा भागद्वयग्रहणम् । माक्षिकेण हतस्य निरुत्थमारितस्येत्यर्थ । पुटितस्य सामान्यविशेषपुटितस्य । पलान्यभ्रस्येत्यत्रापि पुटितस्येति सम्बध्यते । तेन प्रथमपरिच्छेदोक्तक्रमेण रसायनाधिकारे वक्ष्यमाण वृहदमृतमारोक्त लौहाभ्रसमभिहित विधिनैव वा चूर्णितपुटितस्येत्यर्थ । तावन्ति गन्धकस्येति चत्वारि पलानीत्यर्थ । गन्धकशुद्धिविधिश्च यथा—गन्धकन्तु समानीय नवनीतामलच्छवि । तत्सर्पिषि विपक्वञ्च यावत्तैलनिभ भवेत् । वस्त्रेणान्तरितङ्कृत्वा ढालयेत्त्रिफलाम्भसि । एव गन्धाश्मसंशुद्ध तत्कार्म्मसु योजयेत् । अथ रसस्येति पारदरसस्य पलद्वय । खल्वितस्य मूर्च्छितस्येत्यर्थ । मूर्च्छनं खल्वशिलादिषु औषधचूर्णैं रसं वा दत्त्वा विमर्द्य निर्म्मलीकरणमभिधीयते । तत्र तावत् पारदे सिद्धदोषत्रयनिवारणार्थं त्रिभिर्द्रव्यै प्रत्येकं सप्तधा मूर्च्छन कार्य्यम् । पटु लवण चसम्बुध कुलाहल किम्व सुरावीर्जं । माक्षिकस्य विशुद्धस्येति स्वरूपत शोधितस्या ग्रेयम् । चित्रकाद्यचूर्णानि प्रत्येकं पलमात्राणि । चतुर्जातकादीना प्रत्येकमर्द्धपलम् । रस र.रक्तपि चि ।

**अमृतागुग्गुलु'** । पु । राजयक्ष्मणि हित । प्रस्थं गुडूच्या प्रस्थार्द्धं प्रत्येक त्रिफलापुरं । दत्त्वा द्रोणेऽम्भस शिष्टे पाकार्थे तत्र द्विपम् । कौचे

दन्त्यमृताब्योषविड़ङ्गत्रिफलारजः । प्रत्येकमर्द्धपलिकं तच्चूर्णञ्च कार्षिकम्॥ रस र वा. र चि । च क्रपाणिमते तु गुड़ूची ४ श गुग्गुलु २ श. आमलकी २श. विभीतक २ श. पुनर्णवा २ श हरीतकी २ श एकत्र कुट्टयित्वा ६४ शरावजलेऽपि पक्त्वा १६ शरावावशिष्ट क्वाथः कार्य्यः । अथ गालयित्वा पुनः पक्त्वा घनीभूते तत्र दन्त्यादिचूर्णं प्रत्येक ४तो त्वक्त २ तो प्रक्षेप्यम् । प्रक्षेपश्च ईषदुष्णतायां देय । मात्रा च यथाबल देया । च द वा र. चि । पाठो यथा—अमृतायाश्च द्विप्रस्थं प्रस्थमेकन्तु गुग्गुलो । प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च । सर्व्वमेकत्र सङ्क्षुद्य क्वाथयेन्नल्वणेऽम्भसि । पुन पचेत्पादशेषं यावत्सान्द्रत्वमागतः । दन्ती चित्रकमूलानां कणा विश्वफलत्रिक । गुड़ूचीत्वग्विड ङ्गानां प्रत्येकार्द्धपलोन्मित । त्वक्त कर्षमेकन्तु सर्व्वमेकत्र चूर्णयेत् । सिद्धे कोष्णे क्षिपेत्तत्र अमृतागुग्गुलो परमिति ॥ च द । अथ भावप्रकाशेऽपि वातरक्ते उक्त । पाठस्य मर्म्मार्थस्तुल्य एवेति पाठो न लिखित । भा म ३भ ।

**अमृताङ्कुरलौहः ।** पु, क्ली । उपदंशे लौहविशेष । तस्यार्थ पाठ —"पारदं गन्धकं लौहमभ्रं ताम्रं सगुग्गुलु । भल्लातं पलिकं सर्व्वं धात्र्या सार्द्धं षडङ्गकं । तत्र पथ्याहरीतक्योर्लौहात् षोडशिकं हवि । पचेत्प्रस्थे वराक्वाथ लौहपात्रे विधानवित् । सुसिद्ध तत्समश्नीयात् सम्पूज्य गुरुदेवता । संमर्द्य मधुसर्पिर्भ्यां गुञ्जावृद्ध्या दिने दिने । अथानुपानं पयसा नारिकेलोदकेन वा । कुष्ठोक्तामृताङ्कुरलौहादस्य त्रिफलाभागभेद , अत पाठद्वयम् । प्रयोगा. उ द चि । भैषज्यमिद कुष्ठरोगे हितम् । अत्र पलमेकं रसस्येति रससिन्दूरमिति केचित् । अपरे हिङ्गुलोत्थपारद व्यवहरन्ति । वृद्धास्तु रससिन्दूरमेव व्यवहरन्ति । रसादिसर्व्वमेकीकृत्य लौहपात्रे त्रिफलाक्वाथेन पचेत् । पाकशेषे त्रिफलाचूर्णं देयम् । र सा स रस र । कुष्ठोक्तो यथा—"हताम्रसुखसद्वइं पलमेकं रसस्य वै । पल लौहस्य ताम्रस्य पलं भल्लातकस्य च । गन्धकस्य पलञ्चैकमभ्रकस्य च गुग्गुलो । हरीतकीविभीतक्योश्चूर्णं कर्षद्वयं द्वयो । अष्टमाषाधिकं तत्र धात्र्या पाणितलानि षट् । घृत ह्यष्टगुणं लौहात् त्रिंशत्त्रिफलाजलम् । एकीकृत्य पचेत्पात्रे लौहे तद्विधिपूर्व्वकम् । पाकमेतस्य जानीयात् पाकज्ञ कुशलो भिषक्" । इत्यादि । हुताम्रसुखसंशुद्धि यथा रसार्णवे—रसस्य पञ्चमांशेन गन्धेन लौहपात्रके । लौहदण्डेन च तथा दत्त्वेषन्नवनीतक । मर्द्दनात्कज्जलिकृत्वा पिष्टमालिश्चिकाद्रवे । हण्डीपृष्ठोत्थास्तु पिष्टेन वेष्टयित्वा निधापयेत् । हण्डिकाया मुख लिप्त्वा शनैर्मृद्वग्निना पचेत् । गन्धगन्धश्च यावत्स्यात् तद्धुताम्रसुखं विदु । कश्चित्तु हुताम्रसुखसम्बद्धमिति गुग्गुलुपर्य्यन्त सत्र भाति । तेन शोधनजारणादिक्रमेण सर्व्वेषामप्रशोधनमाह हरीतकीविभीतक्यो सार्द्धकर्षद्वय पृथगिति वचनात् । हरीतक्यास्तु ५ तो विभीतक्याश्च आमलक्या षट, पाणितल १२ तो । मिलितत्रिफला १६ प. पाकार्थजल १६ श. शेष ४श घृत १६ प लौहपात्रे पाच्यम् । वस्त्रपीडित यदा न निःसरति मुद्रा च भवति तदावतार्थं चूर्णप्रक्षेप । अस्य पाके सावधानेन भाव्यम् । अमृतसारलौहवदस्य क्रिया ज्ञेया । वृहदपि अमृताङ्कुरलौह कुष्ठे उक्तम् यथा—सूतं हिङ्गुलसम्भूत ताम्रं तद्द्विगुण भवेत् । सुजीर्णलौह तत्तुल्यमभ्रं भल्लातकं तथा । ताम्रद्विगुणगन्धश्च गुग्गुलुस्तद्द्विधा मत । त्रिफलायास्तथा चूर्णं प्रत्येक सूततुल्यकं ताम्राष्टगुणं सर्पि तैलमेरण्डजं द्विधा । रसाञ्जनशताभगुर्व्यं पक्त्वा चैवामृतद्रवे । चतुर्गुणैर्घृतात्तैलात्त्रिसीयमवतारयेत्" ॥ इत्यादि । भैष प्रयोगा कुष्ठचि । अस्य रसेन्द्रसारसंग्रहोक्त पाठ प्रायेण तुल्य एव । केवलं गन्धकस्य पलञ्चैकमित्यत्र—"अभ्रकस्य पलञ्चैकं गन्धकस्य चतु पलमिति ।" कर्षद्वयं द्वयोरिति प्रत्येक कर्षद्वयमिति । घृत ह्यष्टगुणमित्यत्र—"घृत चाष्टगुण"मितिभेद । अभ्रकस्य पलञ्चैव गन्धकस्य चतु पलमित्यत्र प्रयोगामृतधृतपाठ न साधु मन्यन्ते भट्टादयो विशिष्टवैद्याश्चेति । र.सा स टी । रसरत्नाकर प्रयोगामृतेन तुल्य एव केवल ह्यष्टमाषाधिकमित्यत्र अष्टमाषाधिकमिति भेद । रसेन्द्रचिन्तामणौ च "अष्टमाषाधिकानि" घृतं त्वष्टगुणमिति पाठभिन्नतास्ति । रसे चि कुष्ठ. । मा की । अम्लपित्ते चक्तम् ।

**अमृतादिः ।** पुं । कषायद्रव्यसमूहे यथा—"अमृतापर्पटोल मुस्तकं सप्तपर्णं खदिरमसितवेत्रं निम्बक द्वे हरिद्रे" इत्यादि । अय विसर्पविस्फोटके हित । अमितवेत्र श्यामा लता । रस र. ।

च द विसर्प चि. । सा.कौ. । प्रयोगा । अपर. मूत्रकृच्छ्रे यथा—अमृतं नागरं धात्री वाजिगन्धा त्रिकण्टकं । प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान् ॥ भैष. ।

**अमृतादिवटी** । स्त्री । विषं २ भा. कपर्द भस्म ५ भा मरिचं ८ भा. जलेन मुद्गमाना वटी कार्य्या । इयं कफे त्रिदोषेऽग्निमान्द्ये च हिता । भा.म.१भ.ज्वरचि. ।

**अमृताद्यगुग्गुलुः** । पुं। अयं मेदोरोगे हित । यथा—"अमृता त्रुटिवेल्लवत्सकं कलिपथ्यामलकानि गुग्गुलुम् । क्रमवृद्धमिदं मधुप्लुत पिडकास्थौल्य भगन्दरं जयेत्।" अत्र त्रुटिः सूक्ष्मैला । वेल्लं विडङ्ग। वत्सकं कुटजत्वक् । एषां क्रमवृद्ध्या भागी ग्राह्य । भैष.मेद. । भा.म.३भ.मेदचि. ।

**अमृताद्यघृतम्** । क्ली । वातरक्ते हितं । घृत ४ श. कल्कद्रव्यं १ श. । पाककाले आमलकीरस ४ श. वारि १२ श. दत्त्वा पाच्यम् । आरग्वध श्रीफलफलमज्जा । हयीरः श्वेतपुनर्णवा । चरक. -कोकिलाक्षमूलम् । गन्धर्वः एरण्डमूलं । घन मुस्ता । च.द वातरोग चि. । भा.म.२भ ।

**अमृताद्यचूर्णम्** । क्ली । आमवाते । गुडूची नागरगोक्षुरमुण्डितिकावरुणचूर्णानि प्रत्येक सम भागानि । भा म.२भ ।

**अमृताद्यतैलम्** । क्ली । गलगण्डादौ । मूर्च्छिततिलतैलं ४ श. गुडूच्यादीनां शतपलं वारि ६४ श शेषः १६ श.। उक्तद्रव्याणां मिलितकल्क १श.। तैलपाकविधिना पाच्यम्। च.द.गलगण्ड-चि। अथवा गुडूच्यादीनां प्रत्येकं १ प. वारि १२८ प । तैलं पिबेद्वामृतवल्लिनिम्बहिंसाभयावत्सक पिप्पलीभिः । सिद्धं बलाबिल्वसदेवदारु हिताय नित्यं गलगण्डरोगी ॥ तैल ४ श. कल्कार्थं—গুলুঞ্চ, নিমছাল, গুড়কাউনী, কেলেকড়া, কুটজত্বক্,পিপুল,বেলেড়া, বেতস,দেবদারু । मिलित १ श । भैष.। सिद्धं बलाभ्यामिति । च.द.।

**अमृताफलः** । पुं, क्ली । पटोले । भा.पू.१भ.। कावेलमसिद्धफलस्वविशेषे,दधिफले वा, नासाती इति लोके । मद.व.७ ।

**अमृतारिष्टम्** । क्ली । अरिष्टमिदं विषमज्वरादौ हित । अत्र गुडूच्याः पञ्चशत दशमूलस्य तथा एकत्र द्रोणचतुष्टयजले पक्त्वा पादशेषं ग्राह्यं। अथ तत्र क्वाथे गुडस्य तुलात्रयं(৩৭॥•সের) प्रक्षिप्य, कृष्णजीरस्य १६ प. पर्पटस्य २ प. । तथा सप्तपर्ण त्रिकटु मुस्तक नागकेशर कटुक्यतिविषेन्द्रयवादीनाञ्च प्रत्येकं चूर्णपलं निक्षिप्य आज्यपात्रे मासमात्रं स्थापयेत्। तेनान्तरमेकेनारिष्टं जायते । भैष. ।

**अमृतार्णवः** । पुं । रसोऽयं अतिसारे ज्वरातिसारे च हित. । मात्रा १ मा. । अनुपानं धान्यजीरक शाल्वीजानां यथालाभं देयम् । द्रव्याणि यथा हिङ्गुलोत्थरस लौहगन्धक टङ्कण शटी धान्यकहीवेर मुस्ताम्बष्ठाजीरकातिविषाजीरकाणि छागीक्षीरेण मर्द्दयेत् । भैष। रस र.अजाजी जीरकम् । घुणप्रिया अतिविषा । धान्यजीरकयूषेणेति यूषैः प्रदरतरं मुदा श्रेयम् । र सा.सं.अतिसा.चि ।

**अमृतार्णवरसः** । पुं । कासहरोऽयं रस । अत्र अमृता गुडूची । पद्मकं पद्मकाष्ठं । र.सा.स. कासचि. । रस.र. । भैष. । द्वितीयो रस वाजीकरणाधिकारे । अत्र सूतभस्म रससिन्दूरम् । र. सा.सं. । अन्यः कासे—"रास्ना विडङ्ग त्रिफला रसगन्धकटुत्रिकं । अमृता पद्मकं क्षौद्रं विषतुल्यं सुचूर्णितम् ॥" मात्रा २ गुञ्जा । रस.र.कासचि. । अन्यः राजयक्ष्मणि—"पारदं गन्धकं शुद्ध मृतलौहञ्च टङ्कणं । रास्नाविडङ्गत्रिफला देवदारु कटुत्रयम् । अमृता पद्मकं तुल्यं विषञ्चापि विचूर्णयेत्। मधुनाच वटी कार्य्या ।" प्रयोगा.। अन्यः रसेन्द्रसारधृते रसायनाधिकारे । "सूतभस्म चतुर्भागं लौहभस्म तथाष्टक । अभ्रभस्म च षड्भाग गन्धकस्य च पञ्चमं । भावयेत्त्रिफलाक्वाथैस्तस्त्वौ भृङ्गमद्रवे । त्रियुवङ्गिकटुक्वाथैर्भावयेत्सप्तधा पृथक् । सर्व्वतुल्या कणा योज्या गुडैर्मिश्रं पुरातनैः ॥" मात्रा निष्कमिता । र.सा.स. प्रयोगा.रसायने ।

**अमृतार्णवलौहम्** । क्ली । कुष्ठाधिकारे । "त्रिकटुत्रिफलालौहं समभागं विचूर्णितं । सर्व्वेषामपि चूर्णानामर्द्धभागं शिलाजतु । गुडूचीस्वरसेर्देया भावना रविरश्मिभिः । मारत्रयं ततः शुष्कं घृतेन सह मर्द्दयेत् ॥" मात्रा १मा.मधुना लेह्या । रस.र प्रयोगा। अयम् अमृतार्णवरस इति केचिदुक्त । प्रयोगा. ।

**अमृतावटिका (गुग्गुलु)** । स्त्री । सद्यो व्रणघ्नी वटिका । व्रणशोथे इति च द । "अमृता पटोलमूलत्रिफलात्रिकटुक्रमिघ्नानाम् । समभागाना चूर्णं सर्वसमो गुग्गुलोर्भागः ॥ प्रतिदिवसमेकैका गुडिका खादेदक्षप्रमाणाम् । रस र ।" अक्षमानादधिकं न कर्त्तव्यं कोष्ठादिकशुद्ध्याल्पमपि प्रयोगः । द्वितीया हृदभिधाना व्रणे हिता । यथा— "अमृताया पलशत दशमूलशत तथा । पाठामूर्व्वा बला द्वे च तथा गन्धर्वहस्तकः ॥ पृथग्दशपलान्येता नभयाना शत तथा । विभीतकशते द्वे च धात्री शतचतुष्टय ॥ गुग्गुलो प्रस्थसयुक्त जलद्रोणद्वये निशाम् । एका पर्युषिता पक्वा चतुर्थांशावशेषिते ॥ क्वाथे गुग्गुलुमालोड्य लौहपात्रे पचेद्घन । शीते चैतानि सचूर्ण्य प्रक्षिपेत्पलिकानि तु ॥ त्रिफलात्रिवृतादन्तीव्योषच्छिन्नाश्वगन्धकान् । विडङ्ग चित्रक चोच सूक्ष्मैला नागकेशरम् ॥' इत्यादि । पोट्टलिबद्धगुग्गुलुना सह पर्युषित कर्त्तव्य । ततोऽपरदिने क्वाथकरणम् । कैशोरगुग्गुलुवत् सर्व्वमपर ज्ञेयम् । प्रयोगा व्रणचि । रसरत्नाकरधृतपाठ तुल्य एव । तत्र अस्य पक्षो यथा—घृतपिष्टितगुग्गुलु १६ प. क्वाथार्थं गुडूची १०० प दशमूल १०० प आकनादी मूर्व्वा, बाडियाला, गैतवाडियालामूल, एरण्डमूल, प्रत्येक १० प सास्थि हरीतकी १००, बहेडा १००, आमलकी ४०० पाकार्थं देय जल द्रोणत्रयमित (१९२श) अत्रैव पोट्टलीबद्ध गुग्गुलु दत्त्वा पाकशेषजल ४८ श कर्त्तव्यम् । अत्रैव क्वाथे क्वाथस्थापितगुग्गुलु पिष्ट्वा पाचनीयम् । सिद्धे प्रक्षेपार्थे त्रिफला तेउडीमूल त्रिकटु दन्तीमूल गुडूची अश्वगन्धा विड्ङ्ग तेजपत्र गुडत्वक सूक्ष्मैला नागेश्वर मुण्डा, एषा प्रत्येक १ प एकीकृत्य स्निग्धभाण्डे स्थाप्यम् । मात्रा ८ माषा । उष्णोदकमनुपेयम् । रस र व्रणशोथचि । भा म २भ । अन्या कुष्ठरोगे वातरक्त च हिता । तस्या अथ पाठ—अमृताया पलशत दशमूल्यास्तथा शत । पाठा मूर्व्वा बला तिक्ता दार्व्वीगन्धर्वहस्तका । एषा दशपलान् भागान् विभीतक्या शत हरेत् । द्वे शते च हरीतक्या आमलक्यास्तदा शतम् । जलद्रोणचये पक्वा अष्टभागावशेषित । इत्थ गुग्गुलुमाहृत्य प्रस्थार्द्धञ्च घृत पचेत् । पाकसिद्धो यदा तस्य गुडूच्या अस्वगत्व च ।

पलद्वय तथा मुण्ड्या पिप्पल्याश्च पलद्वयम् ॥ इत्यादि । भैष कुष्ठ चि ।

**अमृताष्टक** । पुं, क्ली । गुडूच्याद्यष्टद्रव्यसिद्धकषाये । एष पित्तश्लेष्मज्वरे हित । च द चि । 'गुडूचीन्द्रयवारिष्टपटोल कटुरोहिणी । नागरं चन्दन मुस्त पिप्पलीचूर्णसयुतम् । अमृताष्टकमित्येष पित्तश्लेष्मज्वरापह ।" अरिष्ट निम्बत्वक् । रोहिणी कटुकी । एषा प्रति २० रक्तिकं वारि ३२ तो शेष ८ तो । प्रक्षेपार्थे पिप्पलीचूर्ण ॥० तो । सा को. । [व ४ ।

**अमृतासङ्गम्** । क्ली । खर्परिकातुत्थे । मद.

**अमृतासङ्गमः** । पु । खर्परीतुत्थे । तूँतेम मोरचूत । वै निघ ।

**अमृताह्वम्** । क्ली । अमृतफले नास्पातीति लोके । हि अपी । मद व ६ । गुणा —गुरु वातघ्न स्वादु त्रिदोषघ्नञ्च । 'नास्पाती' शुद्धलदेशे प्रचुर लभ्यते । भा । खबूंजे । मद व ६ ।

**अमृताह्वयतैलम्** । क्ली । वातरक्ते तैलम् । पाठो यथा— गुडूची मधुक ह्रस्वपञ्चमूल पुनर्नवा । रास्नैरण्डमूला च जीवनीयानि साभत । पलाना शतिकैर्भागैर्बला पञ्चशत भवेत् । कोलं बिल्व यवान् माषान् कुलत्थांशाढकोन्मितान् । काश्मर्य्याणाञ्च शुष्काना द्रोण द्रोणशतेऽम्भस । साधयेज्जर्जर पूत चतुर्द्रोणञ्च शेषयेत् । तैलद्रोण पचेत्तेन दत्त्वा पञ्चगुण पय । पिष्ट्वा त्रिफलिकञ्चैव चन्दनोशीरकेशरम् । पत्रैलागुरुकुष्ठानि तगर मधुयष्टिका । मञ्जिष्ठोत्पलञ्चैव तत्सिद्ध सर्व्वयोगिकम् ॥' भा म २भ वातरोगचि ।

**अमृतेश्वररस** । पु । क्षय रसो यक्ष्मणि हित । रसभस्मामृतासत्व लौह मधुघृतान्वितम् । अमृतेश्वरनामाय यक्ष्मा राजयक्ष्मणि ॥ भा म १भ । रसेचि । प्रयोगा ।

**अमृतोत्था** । स्त्री । सुधामूलायाम्, सालम् मिश्रीति भाषा । पनि ।

**अमृतोत्पन्नम्** । क्ली । तुत्थे । खर्परीतुत्थे । खादर । म कालखापरो । रा नि व १३ । [नि व ।

**अमृतोत्पन्ना** । स्त्री । अष्टमक्षिकायाम् । रा.

**अमृतोद्भव** । पुं । धन्वन्तरौ । रत्ना. । क्ली ।

तुल्ये । रा.नि.व.१३ । खर्परीतुल्ये । खापर । रा. नि.व. । आमलक्याम् ।

**अमृतोद्भवा** । स्त्री । आमलक्याम् । मं आवली । नागरवल्याम् । पान । वै.निघ. ।

**अमृतोपमम्** । क्ली । खर्परीतुल्ये । तूँदते । मं मोरचूत । वै.निघ. । [ति द्रव्ये । वै निघ ।

**अमृतोपहिता** । स्त्री । तोपचिनी इति ख्या

**अमेध्यम्** । क्ली । पुरीषे । अ.र. ।

**अम्बु** । क्ली । जले । रा नि.व १४ । बालके । च द.ज्वरातिसार चि. । "किराताम्बुयवासकम् ।" भैष. शोथ चि.पुनर्णवातैले ।

**अम्बुकः** । पुं । श्वेतार्कमन्दारे । रक्तैरण्डे ।

**अम्बुकण्टकः** । पुं । नक्रे । त्रिका ।

**अम्बुकन्दः** । पु । शृङ्गाटके । वै.निघ. ।

**अम्बुकिरातः (टः)** । पुं । नक्रे । त्रिका ।

**अम्बुकीशः** । पुं । गोधायाम् । शिशुमारे । त्रिका ।

**अम्बुकुक्कुटी (टिका)** । स्त्री । जलकुक्कुट्यां । पानकउडी । म पानकोंबडी । See सव ।

**अम्बुकूर्मः** । पु । गोधायाम् । वै.निघ ।

**अम्बुकणा** । स्त्री । जलपिप्पल्या । कौंचडा दाम् । वै निघ. । [सा.स. ।

**अम्बुकेशरः** । पु । छोलङ्गवृक्षे । लेंदू र.

**अम्बुचरः** । पुं । जलचरे । कच्छटे । वै.निघ. ।

**अम्बुचामरम्** । क्ली । शैवाले । जटा ।

**अम्बुचारिणी** । स्त्री । स्थलपद्मिन्या । हिं थल पद्म । वै निघ ।

**अम्बुजः** । पुं । हिज्जलवृक्षे । अम. । मत्स्यादौ । भा । जलवेतसे । कच्छटे । वै.निघ. । त्रि । जल जातमात्रे । क्ली । कमले । सि.जचिकं । [वै निघ ।

**अम्बुजामलकी** । स्त्री । पानीयामलके ।

**अम्बुटः** । पुं । अश्मगर्भवृक्षे । आवुटा । मं आपटा । रा.नि.व ८ ।

**अम्बुतालः** । पुं । शैवाले । त्रिका ।

**अम्बुदः** । पुं । मुस्तायां । सि.यो.कामला.चि. । मूर्वायष्ट्रयुते इन्द्र' । "पटोलाम्बुददारुभिः ।"

**अम्बुधरः** । पुं । नागरमुस्तायां । भद्रमुस्तायां । वै निघ ।

**अम्बुधिः** । पु । सागरे ।

**अम्बुधिफेनः** । पुं । समुद्रफेने । भा. ।

**अम्बुधिस्रवाः** । स्त्री । गृहकन्यायाम् । घृत कुमारी । मं कोडफल । रा नि व ५ । [भा ।

**अम्बुनाम** । क्ली । ह्रीवेरे । वाला । भा. । बालके ।

**अम्बुपचा (चिका) (पची)** । स्त्री । उच्च टायाम् । र.मा. ।

**अम्बुप्रसादः** / **अम्बुप्रसादनः** } पुं । निर्मलीफलवृक्षे । रा.नि. व.११ । See कतक ।

**अम्बुप्रसादनफलम्** । क्ली । निर्मलीफले । वै निघ. ।

**अम्बुमयूरकः** । पुं । जलापामार्गे । वै निघ. ।

**अम्बुमात्रजः** । पु । शम्बूके । वै.च. ।

**अम्बुयष्टिका** । स्त्री । भार्ग्यां । वामणहाटी । र.मा. । [वै.निघ. ।

**अम्बुरुहा** । स्त्री । पद्मिन्यां । स्थलपद्मिन्याम् ।

**अम्बुवल्लिकः** । पुं । कृमिशत्रौ । वै.निघ. ।

**अम्बुवल्लिका** । स्त्री । कारवेल्लाम् । वै.निघ. ।

**अम्बुवल्ली** । स्त्री । क्षुद्रकारवेल्लयां । जलपिप्पल्यां । वै.निघ. । [वै निघ. ।

**अम्बुवारिणी** । स्त्री । स्थलकमलिन्याम् ।

**अम्बुवासिनी** । स्त्री । रक्तपाटले ।

**अम्बुवासी** । पुं । रक्तपाटले । वै.निघ ।

**अम्बुवाहः** । पुं । मुस्तके । चि.क्र.क.वल्ली प्रदर चि. । [रत्ना. ।

**अम्बुवेतसः** । पुं । जलवेतसे । मं लव्हाला ।

**अम्बुशिरीषिका** / **अम्बुशिरीषी** } स्त्री । जलशिरीषे । वै.निघ. ।

**अम्बुशुक्तिः** । स्त्री । जलशुक्तौ । शिंपुक । मं जलशिंपी । वै निघ । [त्रिका. ।

**अम्बुसर्पिणी** । स्त्री । जलौकसि । जोंक ।

**अम्बुसादनम्** । क्ली । निर्मलीबीजे । वै.निघ. ।

**अम्बुसारा** । स्त्री । कदलीवृक्षे।भा पु १भ फ व।

**अम्बुसाह्वः** । पुं । कुन्दपुष्पवृक्षे । वै निघ ।

**अम्भ** । पु । जले । रा नि व १४ ।

**अम्भःपा** । पु । चातकपक्षिणि ।

**अम्भःसार** । पु । मुक्तायां । वै निघ ।

**अम्भःसू** । स्त्री । धम्बूके । मं धुकें ।

**अम्भोजम्** । क्ली । पद्मे । वारिविलसे ।

**अम्भोजनाल** । पु । पद्मनाले । वै निघ ।

**अम्भोजा** । स्त्री । वल्लीयष्टीमधुनि । वै निघ ।

**अम्भोद** । पु । भद्रमुस्तायाम् । रा नि व ६। च द यक्ष्म चि एलादिमन्थे । प्रपौण्डरीके । प मु ।

**अम्भोधिपल्लव** । पु । प्रवाले । मं पोंवलें । रा नि व १३ ।

**अम्भोरुहम्** । क्ली । पद्मे । च द र पि चि ।

**अम्भोरुहकेशरम्** । क्ली । पद्मकेशरे । च द र पि चि ।

**अम्र** । पुं । आम्रवृक्षे । আম্ গাছ । रा नि । See आम्र । माचिकायां । পুদিনা । हि मोइया । अम्लवेतसे । रा नि ।

**अम्रम्** । क्ली । आम्रफले ।

**अम्रगन्धिहरिद्रा** । स्त्री । (Curcuma reclinata) आम्रहरिद्रायाम् । আমহলুদ । हि आमहलदी ।

**अम्रवेतस** । पु । अम्लवेतसे ।

**अम्रसार** । पु । अम्लवेतसे । रा नि ।

**अम्रात (क)** । पु । (Spandias mangifera)Hogplum आम्रातकवृक्षे । আমড়া গাছ । हि अम्बाडा । मं अंबाडाचे झाड । श मा । निका । See आम्रातक ।

**अम्ल** । पु । षड्रसान्यतमरसे । অম্ল রস । स च जम्बीरमातुलुङ्गफलादिषु व्यक्त । गुणा —लघु, उष्ण, रुचिकर, दीप्तिकर, हृदयतर्पण, वातानुलोमन, बल्य कण्ठदाहकरश्च । रा नि व २०। तद्विपाकोऽपि तद्विपाकगुणस्तु पित्तकृत् वातघ्नश्च रोगघ्नश्च । सु सू । प्रीतिकर पाचन मार्दवकरश्च । अतिसेवनात् भ्रान्तिकुष्ठकफपाण्डुकार्श्यकासजनक । रा नि व १२ । पाचन रुचिकर पित्तलकफजनकी रक्तवर्द्धक लघु लेखन उष्णवीर्य स्पर्शशीतल सन्दीपन क्लेदनी वातघ्न स्निग्ध तीक्ष्ण सारक शुक्रविवन्धनाहृदिष्टिघ्न हर्षणश्च । अतिसेवने—श्रमदृष्टदाहतिमिरज्वरघ्न शोथविस्फोटकुष्ठपाण्डुलक्षण । भा पू १भ । लघुत्व पाचकत्व पित्तश्लेष्मवान्तिक्लेदत्वमुष्णत्वं वातघ्नत्वं। राज।

**अम्लम्** । क्ली। अम्लवेतसफले । काञ्जिके । घोले । रा नि । बदरफले । सि यो अरोचक चि । वर्वरचन्दने । रा नि व १२ ।

**अम्लक** । पु । लकुचवृक्षे । श र ।

**अम्लकरञ्ज** । पु। करञ्जविशेषे । टिकरवक्ष। तत्फलगुणा —पिपासाघ्नं गुरु रुचिकरं पित्तकरश्च । राज ।

**अम्लका** । स्त्री । पालङ्कशाके । পাল° শাক । प मु । पलाशीलतायाम् । रा नि व ४ ।

**अम्लकाञ्जिकम्** । क्ली । काञ्जिके । কাঁজি । च द यक्ष्मी चि महाषट्पलघृते ।

**अम्लकाण्ड** । पु । शुक्रसीने । वै निघ । क्ली। लवणतृणे । নোণা ঘাস । रा नि व ८ ।

**अम्लकुचि** । पु । इक्षुविशेषे ।

**अम्लकेशर** । पु। मातुलुङ्गे । টাবালেবু গাছ। प मु । दाडिम्बवृक्षे । [লেবু । वै निघ ।

**अम्लकेसरी** । पु । अम्लरसनिम्बुकवृक्षे । গোঁড়া

**अम्लकोश (शाक)** । पु । तिन्तिडीवृक्षे । मद व ६ । [मं अबटवाक । वै निघ ।

**अम्लगोरस**. । पुं। अम्लतक्रे । टिक् দোল ।

**अम्लचाङ्गेरी** । स्त्री। चाङ्गेरीभेदे । টক্ আমরুল । च चि २४ मधु तैले ।

**अम्लचुक्रिका** । स्त्री। चिञ्चाम्ले । তেঁতুলের অম্বল । रा नि व ११ । See चिञ्चासार ।

**अम्लचूड** । पु । शाकाम्ले । चिञ्चासारे । তেঁতুলের অম্বল । रा नि व ११ । अम्लशाके । চুকা পালং । रा नि ।

**अम्लजम्बीर** । पु । अम्लरसनिम्बुकवृक्षे ।

**इन्दस्वरम्** । क्ली । (Nymphaea coerulea) नीलकमले, नीलपद्मे । श मा ।

**इन्दिन्दिरः** । पुं । भ्रमरे । त्रिका ।

**इन्दिरा** । स्त्री । लक्ष्म्यां । त्रिका. ।

**इन्दिरामन्दिरम्** । क्ली । विष्णौ । राज. ।

**इन्दिरालयः** । पु । (Nymphaea lotus.) पद्मे । श र. ।

**इन्दिरावरम्** । क्ली । नीलपद्मे । प सु श र ।

**इन्दि(न्दी)वरम्** । क्ली । नीलपद्मे । नील शुक्ति । प.सु.श.मा. । एतत् श्वेतपद्मादिगुणयुक्तं परं किञ्चिद्धीनगुणम् । भा पु १भ । See नीलोत्पलम् ।

**इन्दीवरः** । पुं । श्यामपद्मवृक्षे । सु सू.३८ध । कुरण्टकभेदे । "कुरण्टिकाभेद. दीर्घपर्णी बहुल पुष्प. ।" ड.सु.चि ७भ. ।

**इन्दीवरा (री)** । स्त्री । शतमूल्याम् । प सु. रा नि.व.१० । अमरसाम् । [illegible] । प मु । इन्दीवर्मण्याम् । [illegible] । रा नि व.३ । क दलीवृक्षे । वै निघ । See इन्द्रवारुणी ।

**इन्दीवरिणी** । स्त्री । [illegible] । [illegible] झाड़ । रा नि.व.१० ।

**इन्दीवारम्** । क्ली । नीलपद्मे । श्री.राज. ।

**इन्दुः** । पुं । कर्पूरे । श्म.रा नि व ८ । भा म.४ भ [illegible] वि. । "स्फटिकमद्र[illegible]" भा. म.१भ त [illegible] वि । "[illegible]। [illegible]इन्दुसुवासितम् ।" भा.पु [illegible] ।

**इन्दुकः** । पु । [illegible] रा.नि व ८ । [illegible] । वै निघ. ।

**इन्दुकमलम्** । क्ली । कुमुदे । [illegible] [illegible] । रा नि व १० ।

**इन्दुकलिका** । स्त्री । केतकीवृक्षे । [illegible] [illegible] । [illegible] । रा.नि व.१० ।

**इन्दुकान्तः** । पुं । चन्द्रकान्तमणौ । रा.नि व. ११ । स्त्री । रात्रौ । हे.च. । [रा.नि व.६ ।

**इन्दुखण्डा** । स्त्री । [illegible] । वै.[illegible] ।

**इन्दुचन्दनम्** । क्ली । [illegible] । वै.निघ. ।

**इन्दुपत्रः** । पु । भूर्जवृक्षे । संग्रह ।

**इन्दुपुष्पिका (ष्पी)** । स्त्री । लाङ्गलीवृक्षे । ईश्लाङ्गुल । रा नि.व.३ । [प रा नि व २३ ।

**इन्दुपोदकी** । स्त्री । वेलिकायां । [illegible]

**इन्दुफलः** । पुं, क्ली । आम्रातके । आमड़ा गाछ, आमड़ा । वै निघ. । वै निघ ।

**इन्दुमुखी** । स्त्री । पद्मिन्याम् । पद्मेर झाड़ ।

**इन्दुरः** । पु मूषिके । अर्थ विनिमय, [illegible] [illegible] मधुरं [illegible] [illegible] वीर्यामिय । भा.पु १भ ।

**इन्दुरकर्णिका (र्णी)** । स्त्री । आखुकर्णी लतायाम् । इन्दूरकाणी । हिं मूषाकाणी । [illegible]

**इन्दुरत्नम्** । क्ली । मुक्तायाम् । प सु.रा.नि व.

**इन्दुरसा** । स्त्री । पिष्टकभेदे । [illegible] । द या—"पटिकामाष [illegible] पिष्टं [illegible] । किञ्चिद्भा च संमर्द्य द्वितीये दिवसे [illegible] । वर्तुलान् वटकान् [illegible] । [illegible] —[illegible] इन्दुरसा मता ।" वै.निघ ।

**इन्दुरा** । स्त्री । सोमराज्याम् । वै.निघ. ।

**इन्दुराजिः(जी)** । स्त्री । सोमराज्यां । वै निघ ।

**इन्दुलेखा** । स्त्री । (Asclepias acida) गुडूच्याम् । त्रिका. । म.मराज्याम् । वै निघ. । [illegible] । [illegible] ।

**इन्दुलोह(कम्)** । क्ली । रौप्ये । रा नि.व ११

**इन्दुवल्लिका (ल्ली)** । स्त्री । [illegible] । गुडूच्यां । जटा. । सोमराज्यां । [illegible] । वै निघ

**इन्दुशकला** । स्त्री । सोमराज्यां । वै निघ. ।

**इन्दुशफरी** । स्त्री [illegible] । रा नि व ८

**इन्दूरः** । पुं । मूषिके । रा.नि.व.८ ।

**इन्द्रः** । पुं [illegible] । [illegible] । [illegible] । [illegible] [illegible] । [illegible] । [illegible] । [illegible] । "[illegible]" [illegible] । "[illegible]" [illegible] । [illegible] । [illegible] । [illegible] । [illegible] । [illegible] । [illegible] । वै निघ ।

**इन्द्रकर्णिका:** । पुं। रक्तैरण्डे। लाल ভেরেণ্ডা।

**इन्द्रकोप:** । पुं। निर्यूहे। निर्यासे। तमङ्गके। গোঁজনা। इ च हला.। [टी.भ।

**इन्द्रगुमम्** । क्ली। उशीरे। বেণার মূল। श.

**इन्द्रगोप:** । पुं। (Coccinella of various kinds) शक्रगोपे। तीज बीरबहुटी इति च प्रसिद्धे। मखमली, ছোট কেন্নুই इति लोके। हारा.। रा.नि.व.१९। [रा नि.व १९।

**इन्द्रचन्दनम्** । क्ली। हरिचन्दने। रक्तचन्दने।

**इन्द्रचिर्भिटा (टी)** । स्त्री। इन्द्रवारुणील तायां। युग्मफललतायां। রাখালশশা। मं लघु कावरल। गुणा—कटु शीता पित्तश्लेष्मकास दोषव्रणक्रिमिघ्नी चक्षुष्या च। रा नि.व.३।

**इन्द्रच्छन्दम्** ।क्ली। सहस्रगुच्छहारे। इ च.।

**इन्द्रज:** । पुं। इन्द्रयवे। वै निघ.२भ.ज्व चि.य म्याद्दिकषाये। कुटजद्रुमे। वै.निघ.भ सा.चि. कुटजचूर्णे।

**इन्द्रजतु** । क्ली। शिलाजतुनि। वै निघ.।

**इन्द्रजम्बूकवत्पाचा** । स्त्री। कृष्णसारिवा- यां। भा.पू.१भ.। See कृष्णसारिवा अनन्ता च।

**इन्द्रजिह्वा** । स्त्री। लाङ्गलीवृक्षे। ঈশ্নাঙ্গুলে।

**इन्द्रतरु:** । पुं। अर्जुनवृक्षे। वै निघ.।

**इन्द्रतूल(क)म्** । क्ली। आकाशे उड्डीयमान सूत्रे। আকাশবুড়ির সূতা। कार्पासे। अर्कवृक्ष तूलके। त्रिका। [चि। भा पू १भ.।

**इन्द्रदारु:** ।पु। देवदारुवृक्षे। तैलदेवदारुवृ

**इन्द्रद्युति** । क्ली। चन्दने। वै निघ.।

**इन्द्रद्रु: (म:)** । पुं। अर्जुनवृक्षे। श.र.। अम। कुटजवृक्षे। रा.नि.व.८। देवदारुवृक्षे। भा पू अने।

**इन्द्रनील:** । पुं। मरकतमणौ। नीलकान्त मणि, পান্না। इ.च.। भा.पू १भ.। "क्षीरमध्ये विनिक्षिप्तं क्षीरं शैलं तं वजेत्। इन्द्रनीलमिति ख्यातम्।" इति परीक्षा। (क:) श र.।

**इन्द्रपर्णी** । स्त्री। इन्द्रवारुण्यां। রাখালশশা। लाङ्गलिकायां। ঈশলাঙ্গুলে। सु चि.१०५.।

**इन्द्रपुष्पम्** । क्ली। लवङ्गे। र.सा.सं.पूर्णचन्द्ररसे।

**इन्द्रपुष्पा (ष्पिका) (ष्पी)** । स्त्री। लाङ्गली- वृक्षे। ঈশলাঙ্গলে। प.मु रत्ना.। पूतीकरञ्जे। नाटी। कण्टकीकरञ्जपुष्पकरञ्ज:,कलिकारिकेत्यन्ये। सु.सू ३७अ.अर्कादि.ड।

**इन्द्रब्रह्मवटी** । स्त्री। अपस्माराधिकारे। अत्र तार रौप्यम्। ताप्यं स्वर्णमाक्षिकम्। पाठ:— "मृतसूताभ्रकं तीक्ष्णं तारं ताप्यं विषं समम्। पद्मं केशरसंयुक्तं दिनैकं मर्द्दयेद्द्रवै:। सूच्यग्रिविजयैरण्ड- वचानिष्पावमूरवै:। निर्गुण्ड्याश्च द्रवैर्मर्द्यं तन्नीलं पाचयेत्पुन:। कङ्गुणीसर्षपोत्थेन तैलेन गन्धसंयुतं। तत: पश्चा समुद्धृत्य चणमात्रा वटीकृता।" अनु- पानमार्द्रकरस:। र.सा.स। রসসিন্দুর, অভ্র, লৌহ, রূপা, স্বর্ণমাক্ষিক, বিষ, পদ্মকেশর সমভাগ। মর্দনদ্রব্য—মনশাসিজু, চিতে, সিদ্ধি,এরণ্ড,বচ, শিম, ওল এবং ইক্ষুর রস।

**इन्द्रभेषजम्** । क्ली। शुण्ठ्याम्। श र.।

**इन्द्रमद:** । पुं। तरुणज्वरे। गजवे.।

**इन्द्रमहाकामुक:** । पुं। कुकुरे। त्रिका।

**इन्द्रयव: (वम्)** । पुं, क्ली। (Seed of holarrhena antidysenterica.) कुटजबीजे। ইন্দ্রযব। हिं उत् इन्द्रयव। मं इन्द्रयव, कुडा- चेबी। क कोडसिगेयबीज। इन्द्रशब्दपर्य्यायमात्रं कुटजवाचकम्। धन्वन्तरि:। भा पू.१भ.। चा म. १९अ। "आरग्वधेन्द्रयवपाटलिकाकतिक्ता।" च. द.पित्तज्व.चि.। "तिक्तान्द्रेयवै. क्रतम्।" गुणा: —कटु तिक्त: शीतल. कफवातरक्तपित्तहर: दा- हातीसारघ्न. नानाज्वरघ्न: शूलघ्न। रा.नि.व.८। त्रिदोषघ्नं धारकं कटुशीतं दीपनं ज्वरातीसार- रक्तार्शोवमिवीसर्पकुष्ठवातरक्तकफशूलघ्नं। भा पू १भ.। इन्द्रयवा इति राजनिघण्टु।

**इन्द्रलुप्त(क)म्** । क्ली। Baldness. श्मश्रुकेश पातरोगे। টাক্ রোগ। मं चाइरोग। तस्य लक्ष- णम्—"रोमकूपानुग पित्तं वातेन सह मूर्च्छितं। प्रच्यावयति रोमाणि तत श्लेष्मा सशोणित:। रु- णद्धि रोमकूपांश्च ततोऽन्येषामसम्भव:। तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते। सु नि १३भ.। इन्द्रलुप्तं श्मश्रुणि भवति खालित्यं शिरोरुहेषु च रुज्या सवेदनेति कार्त्तिककुण्ड:। मा नि,शिर.र.। रुज्येति। शिर.र.भोज। पु। रा नि व २०।

।।।३ ) सविदाहचे। सिङ्गिगाछ। आलीकला दिवर्ष्या। गुञ्जायाम्। कुँठ। कुष्ठौषधे। कुड। षारा। [वि १।

**इन्द्राह्वा** । स्त्री। इन्द्रवारुणीलतायाम्। मद

**इन्द्राचः** । पु। ऋषभकनामलताकन्दे। ऋष भक। भा पू १भ.ह व मद.व १।

**इन्द्रियम्** । क्ली। (Organs of senses) ज्ञानकर्म्मादिसाधनेषु चक्षुरादिषु। ज्ञान ও कर्म्म साधनेर उपायभूत चक्षुः प्रभृति। इन्द्रियाणि विविधानि बुद्धीन्द्रियकर्म्मेन्द्रियान्तरिन्द्रियभेदेन, तेषु श्रोत्रत्वक्चक्षुरसनाघ्राणाभिधानानि ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थनामानि कर्म्मेन्द्रियाणि, एतदुभयात्मकं मन, समष्टा एकादशेन्द्रियाणि। तथाहि—'वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्येकादशेन्द्रियाण्युत्पद्यन्ते। तद्यथा —श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपाद मनांसीति। तत्र पूर्व्वाणि पञ्च बुद्धीन्द्रियाणि। इतराणि पञ्च कर्म्मेन्द्रियाणि। उभयात्मक मन। भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते। तद्यथा—शब्दतन्मात्रं स्पर्शतन्मात्र रूपतन्मात्र रसतन्मात्र गन्धतन्मात्रमिति। तेषां विशेषा शब्दस्पर्शरूपरसगन्धास्तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः। एवमेषा तत्त्वचतुर्विंशति र्व्याख्याता। तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः कर्म्मेन्द्रियाणां यथासंख्य वचनादानानन्दविसर्ग विहरणानि। अव्यक्त महानहङ्कार पञ्च तन्मात्राणि *चेत्यष्टौ प्रकृतयः शेषाः षोडश विकाराः।* स्व स्वयैषा विषयोऽधिभूता स्वयमध्यात्ममधिदैवतञ्च। अथ बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वर, मनसश्चन्द्रमा, दिश श्रोत्रस्य, त्वचो वायु, सूर्य्यश्चक्षुषो, रसन स्याप, पृथ्वी घ्राणस्य, वचसोऽग्नि, हस्तयोरिन्द्र, पादयोर्विष्णु, पायोर्मित्र, प्रजापतिरुपस्थस्येति। आयुर्व्वेदे भौतिकानीन्द्रियाणीन्द्रियार्थाश्च वर्ण्यां।" सु शा.१अ.। अन्तरिन्द्रियाणि पुन चत्वारि मनो बुद्ध्यहङ्कारचित्तानि। मनस्तावदिन्द्रियनियामकं। एवं चतुर्द्दशेन्द्रियाणां नियन्तारश्चतुर्द्दशदेवता। तत्र कर्णस्य देवता दिक, त्वचो वात, नेत्रस्य सूर्य्य, रसनाया वरुण घ्राणस्याश्विनौ, वाचो वह्नि, हस्तस्येन्द्र, पादस्य विष्णु, पायोर्मित्र, उपस्थस्य प्र

जापति, मनसश्चन्द्र, बुद्धेश्चतुर्मुख, अहङ्कारस्य शिव, चित्तस्याच्युत। इति वेदान्त। वैतनि। रा. नि व १८ मे अधिक। विका। भा म १भ छ,व चि।

**इन्द्रियकर्म्म** । क्ली। चक्षुरादीनां शब्दाकर्षण स्पर्शग्रहण रूपदर्शन रसग्रहण गन्धग्रहणवचनादानविसर्गगमनानन्दाख्यानि। सु शा १अ.।

**इन्द्रियगोचरः** । त्रि। इन्द्रियविषये।

**इन्द्रियग्रामः** । पु शरीरे। वै निघ। इन्द्रियसमूहे। [शानी।

**इन्द्रियघ्न** । पु। चक्षूरोगविशेषे। চক্ষের

**इन्द्रियज्ञानम्** । क्ली। इन्द्रियजन्यज्ञाने।

**इन्द्रियबुद्धिः** । स्त्री। इन्द्रियजन्यज्ञाने।

**इन्द्रियवर्गः** । पु। एकादशेन्द्रियेषु, इन्द्रियसमूहे। See इन्द्रियम्। [वै निघ।

**इन्द्रियवैकल्यम्** क्ली। इन्द्रियदुर्ब्बलतायां।

**इन्द्रियसन्तापः** । पु। इन्द्रियवैकृते।

**इन्द्रियस्वाप** । पु। प्रलये। निद्रायाम्। चैतन्यनाशे। रा नि,व.२०।

**इन्द्रियागोचर** । त्रि। अतीन्द्रिये।

**इन्द्रियायतनम्** । क्ली। शरीरे। देहे च।

**इन्द्रियार्थ.** । पु। इन्द्रियजन्यज्ञानविषयेषु। यथा—रूपरसगन्धस्पर्शशब्दा। अम।

**इन्द्रोक्तरसायनम्** । क्ली। इन्द्रकथितरसायनवर्गे। ऐन्द्री। ब्राह्मी। शतावरी। महाश्रावणी। वड थूलकुडि। च चि १अ।

**इन्द्रोपलम्** । क्ली। नीलहीरके। प मु।

**इन्धनम्** । क्ली। काष्ठे। अग्निज्वालनार्थंदग्धकाष्ठे। अम।

**इभ** । पु। हस्तिनि। अम। नागकेशरे। च.।

**इभकणा** । स्त्री। (*Pothos officinalis*) गजपिप्पल्याम्। र.मा.। भा पू १भ। च द सि. यो सान्निपातिकज्वराद्यकषाये। 'धनिकेभकणाकषाय।'

**इभकृष्णा (ष्णा)** । पु स्त्री। गजपिप्पल्यां। भैष च द गहणी चि,कल्याणगुडे।

**इभकेश(स)रः** । पुं। नागकेशरवृक्षे । भैष। क्ली। नागकेसरपुष्पे । चि.क्र.क.प्रदरचि.। सु.चि.१८अ ।

**इभगन्धा (न्धिका)** । स्त्री । स्थावरविषान्तर्गततन्नामकफलविषे । सु कल्प २अ. ।

**इभदन्ता** । स्त्री । हस्तिशुण्डीवृक्षे । हाति शुँडे । रवा । नागदन्त्याम् । र मा ।

**इभदन्ताह्वा** । स्त्री । नागदन्त्यां । र मा रवा।

**इभपत्रिका** । स्त्री । चिल्लीशाके । वै निघ ।

**इभपुष्पम्** । क्ली । नागकेशरे । भैष सु री.चि बृहत्खदिरवट्यां ।

**इभपोटा** । स्त्री । करिशावके । [वासायष्टते ।

**इभवला** । स्त्री। नागबलायां । वै निघ चय चि

**इभमञ्जकः** । पु। पुष्पदामीलतायां । वै निघ ।

**इभमाचलः** । पु । सिंहे । [वै निघ ।

**इभमूलकम्** । क्ली। हस्तिमूलके । गजमूलके

**इभशुण्डी** । स्त्री । हस्तिशुण्ड्याम् । [र मा ।

**इभषा** । स्त्री । स्वर्णक्षीरीवृक्षे । सोनाखिरई ।

**इभाख्यः** । पुं । (Musaferrea ) नागकेशरवृक्षे । निका. ।

**इभावती** । स्त्री । वटपत्रीवृक्षे । पाथरकूचा ।

**इभी** । स्त्री । हस्तिन्याम् । हाडिनी ।

**इभोषणा** । स्त्री । गजपिप्पल्याम् । प्र.ख ।

**इभ्या** । स्त्री । (Boswellia thurifera or serrata ) शल्लकीवृक्षे । करिण्यां । मे दनिक ।

**इरणम्** । क्ली। ऊषरभूमौ। च टी द.रा.नि व ।

**इरा** । स्त्री । सुरायाम् । जले । मे । [निका ।

**इराचरम्** । क्ली । करकायाम्। दर्शाद्रि व.ह ।

**इरावती** । स्त्री । वटपत्रीपाषाणभेदे । न्ड़ पाथरकूचा। रा.नि व ४ । [इरिवेल्लिका ।

**इराविल्लिका** । स्त्री । इरिवेल्लिकायाम् । See

**इरिकीलः** । पु । करीलवृक्षे । [illegible] । वै निघ । [illegible]

**इरिणम्** । क्ली । [illegible]

**इरिमेदः (क)** । पु । अरिमेदे । [illegible]

द । रा.नि व ८ । भा पु.४भ मु.री चि । "कर्ण रन्ध्राखदिरेरिमेद ।" See अरिमेद ।

**इरिवेल्लिः (का)** । स्त्री। सन्निपातजन्ये शिरोजातव्रणजन्यपीडाविशेषे । तस्य लक्षणम् —"पित्त कासमूत्रमाहृद्या ज्वालामुखरुजाज्वरौ । सर्वाकिकी सर्वलिङ्गा जानीयादिरिवेल्लिकां ।" निदानम् ।

**इर्मं (म्)** । क्ली । व्रणे । क्षते । अम ।

**इर्व्वारुः** । पु स्त्री । कर्कटीनामफलशाके । बैंकुड़ गाछ । प सु । दीर्घककर्कटीति । व । सु म ४२अ मधुरत्व. ।

**इर्व्वारुशुक्तिः (का)** । स्त्री । फुटीतिख्यात निर्भिन्नकर्कट्याम् फुटी । हारा । [च टी ग ।

**इर्व्वालुः** । पु, स्त्री । कर्कटिकायाम् । [illegible]

**इलि(ली)(लि)श.** । पुं । मत्स्यविशेषे । [illegible] मीन माछ । हि हीलसा । हारा । गुणा — "इलिशो मधुरः स्निग्धो रोचनो वह्निवर्द्धनः । पित्तघ्न कफकृत्स्निग्धोपष्टम्भी [illegible] ।" भा पु १अ। पित्तश्लेष्मविवर्द्धक मधुर [illegible] । राज ।

**इली** । स्त्री । करवालिकायाम् । छुरि, [illegible] । च टी रा. ।

**इल्लन्नः** । पु । पक्षिभेदे । प्र.ख. ।

**इल्वलः** । पु । मत्स्यभेदे । मे [illegible] ।

**इशि(शी)का** । स्त्री । [illegible] काण्डे । [illegible]काठि । च टी भ. ।

**इषः** । पु । आश्विनमासे । अम ।

**इषिका** । स्त्री । [illegible] । च टी [illegible]

**इषिरः** । पु । अग्नौ । [च टी [illegible]

**इषीका** । स्त्री । काशतृणे । [illegible]

**इषु. (कः)** । पु । शरे । प सु ।

**इषुगोमूलकः** । पु । कोविदारवृक्षे ।

**इषुपत्रिका (त्री)** । स्त्री । [illegible]

**इषुपुङ्खा (ङ्खिका)** । स्त्री । [illegible] । हि सरफोंका । रा नि व ४ ।

**इष्ट.** । पु । [illegible] । क्ली । [illegible] च टी भ.

**इष्टका** । स्त्री । गृहादिनिर्माणार्थदग्धमृत्खण्डे। ईट । इयष्टे । [वेनाव मूल । रा.नि व १२ ।

**इष्टकापथम्** । क्ली । लामज्जके, वीरणमूले ।

**इष्ट(ष्टि)कापथकम्** । क्ली। लामज्जके । भा पू १भ । मद.व २ । [लुके । मे घचतुष्कं ।

**इष्टगन्धः** । त्रि । सुगन्धौ । अम । क्ली । वा

**इष्टा** । स्त्री । शमीवृचे रा नि व.८ ।

**इक्षव.** । पु । इक्षुसाधारणे । अ र ।

**इक्षु.** । पु । Sugarcane. (Saccharum officinarum) स्वनामख्यातमधुररसवृचे। आक गाछ । हि गाण्डा उख् तें चेरकु । भ्रा ऊ स । स द्वादशविध —पौण्ड्रक , भीरुक , वंशक , शतपारक कान्तार तापसेक्षु (काण्डेक्षु ), का ष्ठेक्षु , सूचिपत्रक नैपाल , दीर्घपत्रक नीलक , कोशकृत् इति । भा पू २भ । श्वेतपुण्ड्रकरक्तकृष्णरक्त भेदात्त्रिधा। रा नि व १४ । स वर्णत षड्भेद , श्वेतकृष्णताम्ररक्तलेखकृष्णमिश्रवर्ण इति । स च पौण्ड्रकानुवासिकशतपर्वकान्तारनैपालदीर्घपत्रादि भेदाद्बहुविध । वा टी हेमा । एतद्विशेषास्तत्तन्नाम्नि द्रष्टव्या । स गुणा —"इक्षुदण्डो रसे पाके मधुरो वातनाशक । स्निग्धो गुरुर्मूत्रलश्च शीतो हृद्यो बलप्रद । कफपुष्टिकृमिकारकाल्पानन्दकर सर । रक्तपित्तवातविकारान् नाशयेत् सुनिश्चित ॥" वै निघ । 'अभुक्तो पित्तहा ज्ञेयो भुक्तो वातप्रकोपना। भुक्तमध्ये गुरुतरा इतीक्षूणां गुणास्त्रय ॥ पित्त दाहहरो वृष्यस्तेजोबलविवर्द्धन । वृष्यो रक्तास्रपि त्तशमशमनपटु शीतल श्लेष्मदोऽल्पस्निग्धो हृदय रुच्यो रचयति च मुदं मूत्रशुद्धि विधत्ते। कान्ति दीप्तस्य दत्ते बलमतिकुरुते इक्षुदण्डश्छिदायी दन्तै र्निष्पीड्य काण्ड मदयति रसितो मोहनश्चेक्षु दण्ड ॥" रा नि व १४ । इक्षु मूले मध्ये च मधुर, अग्रे ग्रन्थौ च लवणरस । सर्वेक्षु कफ करो मेदोमेहकरश्च। वृष्या च वातघ्न स्वादु पि त्तघ्न वृष्यशीतश्च। भा राज । मूलादूर्द्ध मधुरा मध्येऽतिमधुरास्तथा। इक्षवस्तेऽग्रभागेषु क्रमाल्लवण नीरसा । इति चक्रदत्तमूलमध्याग्रगुणा । रा नि व १४ कोकिलाक्षवृचे। कुलेखाडा। रा नि व ४।

**इक्षुक** । पु । स्त्री । इक्षुगन्धायां । कांशडून । भूमिकुष्माण्डे । काकोल्यां । वै निघ ।

**इक्षुकाण्डिका** । स्त्री । इक्षुकाण्डे । काकोल्यां। भूमिकुष्माण्डे । वै निघ । वा टी. हेमा ।

**इक्षुकन्दा** । स्त्री । श्वेतभूमिकुष्माण्डे । वै निघ. ।

**इक्षुकाण्ड** । पु । काशतृणे । केशे । रा नि. व.८ । मुञ्जायाम् । शरमाला । भ घ ।

**इक्षुकाशः** । पु । काशतृणे । मद व.१ ।

**इक्षुकीय.** । त्रि । इक्षुयुक्तदेशे ।

**इक्षुगण्डिका** । स्त्री । काशतृणे । वै निघ ।

**इक्षुगन्ध'** । पुं । काशतृणे । भा । चुद्रगोक्षुर कवृचे । रा.नि व ४ ।

**इक्षुगन्धा (न्धिका)** । स्त्री । कोकिलाक्षे । कुलेखाडा । मद व १,मे। गोक्षुरके । प सु भा। क्षीरविदार्याम् । भूँइकुमडा । मद व १ भ र, रा नि व ७। वाराहीकन्दे काशतृणे। भा पू भ., मे । शृगाल्याम् । भा भने । मे घचतुष्क । श्वेत भूमिकुष्माण्डे । भम मे । भूमिकुष्माण्डे । भ र।

**इक्षुजटा** । स्त्री। इक्षुमूले। चि.क्र क प्रदरचि.।

**इक्षुतुल्या** । स्त्री। इक्षालिकायां । भानाथ, इक्षुविशेष, थागडा । प सु । काशतृणे । रमा। यावनाले । यो ओयार, यनार ।

**इक्षुदर्भा** । स्त्री । स्वनामख्याततृणविशेषे । न टो । मं भावालु । गुणा —मधुरा स्निग्धा ईषत्क षाया कफपित्तघ्नी रुच्या लघु सन्तर्पणी च । रा नि व ८।

**इक्षुनेत्रम्** । क्ली । इक्षुमूले । येनेक्षु पुनरुत्पद्य ते । आकेर मूल, आकेर डगा वा चोक । रा नि व १४ ।

**इक्षुपत्रः (क)** पुं । यावनाल इति ख्याते धान्ये । जोयारा इति लोके । रा नि व १६ ।

**इक्षुपत्री (र्णी)** । स्त्री । वचायां । शुक्लभूमि कुष्माण्डे वै निघ ।

**इक्षुपाकः** । पु । गुडे ।

**इक्षुपुष्पा** । स्त्री । शरपुष्पायाम् । रा नि.व.४ ।

**इक्षुरः** । पु । शरतृणे । रा नि.व ८ ।

**इक्षुवालिका** । स्त्री । खागडिकायां । शेग ड़ा। रा नि.व.८,च सू ४भ शुन चि । काकिलाचे ।

कुलेखाडा। इति तालमाखना। भा पू १भ। मद व १। इक्षुतुल्यायाम्। र मा। काशतृणे। रा नि व ८।

**इक्षुभक्षिका** । स्त्री। इक्षुरसनिष्कासनयन्त्रे। आक् माडा कल। वै निघ।

**इक्षुमद्यम्** । क्ली। इक्षुविकारमद्ये। "इक्षुदण्ड मरीचञ्च बदरञ्च तथा दधि। शेषे तु लवणं दत्त्वा इक्षुमद्यं प्रकीर्त्तितम्॥" वै निघ।

**इक्षुमूलम्** । क्ली। इक्षोर्मूले। आकेर मूल। राज। च मू ४श।

**इक्षुमेद** । पु। इक्षुवाटिकायां। आखबाडी।

**इक्षुमेह.** । पुं। तन्नामककफजमूत्रदोषविशेषे। लक्षण— 'इक्षोरसमिवात्यर्थं मधुरञ्चक्षुमेहत।' मा नि। [मेहो। अथ पुण्ड्रकमेद। रा नि व १४।

**इक्षुयोनि.** । पु। पुण्ड्रकेक्षौ। करङ्कशालिना

**इक्षुर (क)** । पु। कोकिलाक्षे। कुलेखाड़ा। इति तालमाखना। र मा भा उ ख। 'द्राक्षा चेक्षुरगोक्षुरञ्च महती।' अत्र तद्बीज ग्राह्यम्। सा कौ महाकामेश्वरमोदके। च मू ४भ। इक्षौ। गोक्षुरके। श र। काशतृणे। (केशे, स्थूलशरे। रा नि व ८। "क्षयकृच्छुरकायी।" सु.चि २६भ। भा म १भ मू घा चि। शरतृणे। काशतृणे। रा. नि व ८। क्षीरेक्षौ। रा नि व १४। [ध्व.भ चि।

**इक्षुरबीजम्** । क्ली। कोकिलाक्षबीजे। भैष.।

**इक्षुरस.** । पु। काशतृणे। भा पू १भ गु व। इक्षोः रसे। आकेर रस। तद्गुणा —स मधुर वात वर्द्धयति शीतवीर्य्यत्वात् सु सू ४०भ। "इक्षो रसो गुरु स्निग्धो हृद्य कफमूत्रकृत्। श्य शी तोऽस्रपित्तघ्न स्वादुपाकरस सर।" चारपाणि। एतदयभागरसगुणा —"मूले तु सलवण। मध्य काण्डु माधुर्य्यमिक्षोर्मूलायपर्वसु। माधुर्य्ये सान्न लवण विदाही तेन यान्त्रिक।' हेमाद्री चार पाणि। दन्तपीडितरसगुणा —दन्तपीडित श्लेष्मासम दाहघ्नादिभिगुणै। वा टी हेमा। यन्त्रपीडितरसगुणा —"विदाही गुर्व्विष्टम्भी च।" वा टी हेमा। "यन्त्र पीडितरस कथिती गुरुश्च क्षय कठञ्च कुरुतेऽपि सुशीतमञ्च। पाके विदाहिवलजञ्च सुशीतमञ्च सर्वेविनो दधिर पित्तकज निहन्ति॥ दन्तैर्निपीडितरसो दधिश्च गुरुश्च सन्तर्पणो बलकर कफकृच्छ्रमश्च। विष्टम्भकारिरुधिरस्य तथैव पित्तदोष निहन्ति सकल वमनञ्च शोषम्॥" अथ पर्य्युषितरसगुणा —रस पर्य्युषितो नेष्टस्तापदैकमते गुरु। कफपित्तकर शोषी भेदनी वाय मूत्रल॥ अथ पक्वरसगुणा — पक्को गुरुरत स्निग्ध सुतीक्ष्णकफवातहा। पित्त घ्नोऽपि विशेषेण गुल्मातीसारकासहा॥ अथ फाणितरसगुणा —फाणित गुर्व्वभिष्यन्दि बृंहण च शुक्लञ्च तत्। पित्तघ्नञ्च श्रमहर रक्तदोषनिसूदनं।" भचि १०भ.। पीयूषोपमितस्त्रिदोषशमन श्रा इक्षुनिष्पीडित। यन्त्रजो रस स्तोकं शान्तिकर वातजनन जाड्यकर प्रतिश्यायकरश्च। तथा प र्युषित स कफवातकरश्च भवति। पक्व इक्षुरस स्निग्ध कफवातघ्न अतिगुरु अविपाकेन विदाही रा नि.व १४।

**इक्षुरसक्वाथः** । पुं। इक्षुगुडे। हैम।

**इक्षुरसविकार** । पु। इक्षुगुडे। इक्षुरसस समलन्नंशाद्गाढ्रिमलविकार फाणितगुडमत्स्याण्डिकाशर्कराभेदात्पञ्चविध। गुणा —"यतचोत्तरहिता हृष्या रक्तपित्तानिलापहा। मत्स्यण्डिका खण्ड सिता क्रमेण गुणवत्तरा॥" वा टी हेमा।

**इक्षुरसशुक्तम्** । क्ली। इक्षुरसेन सतैलेन क न्दशाकफलैराप्लुतमम्लतां गतमिक्षुरसशुक्तम्। प श १ख। गुणा —गुरु अनभिसन्दि च। सु सू ४१भ।

**इक्षुरालिका** । स्त्री। इक्ष्वालिकायाम्। का नाशु। रसा। च चि २भ बृंहणीयप्यां।

**इक्षुवल्लकी (री) (ल्ली)** । स्त्री। क्षणदेव विदार्य्याम्। कान कुँईदूमड़ा। रा नि व ०।

**इक्षुवाटिका (टी)** । स्त्री। पुण्ड्रकेक्षौ। पूँड़ि आख। करङ्कशालीक्षौ। रा नि व १४।

**इक्षुविकृति.** । स्त्री। खण्डे। थाँड़। रत्ना.।

**इक्षुविदारिका (री)** । स्त्री। भूमिकुष्माण्ड प मु.। [गु व।

**इक्षुवेष्टः (ल)** । पु। सुश्रुते। भा पू १भ

**इक्षुशाकट(किन)म्** । क्ली। इक्षुक्षेत्रे।

**इक्षुसारः** । पु। इक्षुगुडे। आखेर गुड़। रा.नि व १८।

**इन्द्रूरक(वीज)म्** । क्ली । कोकिलाचवीजे । कुलियाथाडाव वीज । योगरत्न वेमरपाके म हाकामेश्वरमोदके च ।

**इल्लाकु** । स्त्री । A bitter gourd emetic तिक्ततुम्ब्याम् । तिल्लाउ । प सु सू ४२ ञ । भा म ४भ यो व्या चि. । 'इल्लाकुवीजदन्ती ।' See कटुतुम्बी ।

**इल्लाद्.** । त्रि । इच्छुभक्षके । च चि,२ञ ।

**इल्लारिः (क')** । पु । कामदवे । रा नि व. ८ मद व.१ ।

**इल्लालि (क')(का)** । पु,स्त्री । कामदवे । मद व १। र मा। वै.निघ कास चि इल्लादवलेहे । इत्तुविमेषे । आनाथू, थागडा इति केचित् । वनखडिकायां । च द तथा सि यो यन्न चि वला दाघृते । 'इल्लालिका विषघ्न्यि ।'

---

# ई

**ईज्या** । स्त्री । भूमौ । गवि । वै निघ. ।

**ईडा** । स्त्री । नाडाम् । नाडीविशेष ।

**ईड्या** । स्त्री । भूम्यामलक्याम् । वै निघ,ज्व चि. । "गोपीघ्यामलकी ।"

**ईतिः** । स्त्री । डिम्बे । मी । राज्योपद्रवविशेषे । सा षड्विधा—अतिवृष्टिरनावृष्टि शलभा मूषिका शुका । अत्यासन्नाश्च राजानः षडेते ईतय स्मृता ॥

**ईप्सितफलः** । पु । नारिकेलवृक्षे । वै निघ. ।

**ईरिणम्** । क्ली । ऊषरक्षेत्रे । नोणा जाग्गा । "ईरिणे मूषरे ।" मे यान्तिकं ।

**ईरितः** । त्रि । कम्पिते । त्रिप्ते । अम. ।

**ईर्म्मम्** । क्ली । व्रणे । द्वारा। वते । घा । अम ।

**ईर्व्वारुः** । पुं,स्त्री । कर्कट्याम् । काँकुड़ गाछ । कुष्माम् । फूटी । श र ।

**ईर्व्वारुफलिका** । स्त्री । खर्मूज इति प्रसिद्ध फललतायाम् । वै निघ ।

**ईर्ष्यकः** । पु । दृष्टियोन्याख्यक्लीवे । लक्षण—' दृ ष्ट्वा व्यवायमन्येषां व्यवाये य प्रवर्त्तते । ईर्ष्यक स तु विज्ञेयो दृष्टियोनिय स स्मृत ॥" सु ।

**ईश.** । पु । पारदे । अञ्जनरसे । र सा स. । प ञ्चवक्त्ररसे । वै निघ ज्व चि. ।

**ईशलिङ्गिनी (ङ्गी)** । स्त्री । भवलिङ्गीलता यां । पचगुलि इति पाश्चात्ये । भा म.४भ,यो,व्या ,चि । ' विषुकालेशलिङ्गिनी ।"

**ईशा** । स्त्री । लाङ्गलदण्डे । मे.षद्विकं ।

**ईशादन्त** । पु । हस्तिदन्ते । श.र.। (न्त ,न्तौ) उदग्रदन्तिनि । हे च । त्रिका ।

**ईशानः** । पु । शमीवृक्षे । रा नि व २१ ।

**ईशानवायुः** । पु । तद्दिग्भववाते । स च क टुक । वै निघ ।

**ईशाना (नी)** । स्त्री । शमीवृक्षे । रा नि व.८।

**ईशावसः** । पु । कर्पूरभेदे । गुणा —' भेदी रू क्षो मदापह । अतिशीतोन्मादहरोऽसकासनाशनम् । अपान् । खेदश्चैवाङ्गदाहश्च नाशयेत् ।" वै निघ ।

**ईशिरः** । पु । अग्नौ । त्रिका. ।

**ईश्वरः** । पु । पारदे । भैष ध्व भ चि चन्द्रोद मकरध्वजे । पिप्पली रस र एकादशायसे । '

**ईश्वरमल्लिका** । स्त्री । वकवृक्षे । वै निघ ।

**ईश्वरमूलक** । पु,क्ली । तरुभेदे । ईशेरमूल। भैष कुष्ठ चि.कन्दर्पसारतैले ।

**ईश्वरी** । स्त्री । बन्ध्याकर्कोटकीलतायाम् । वै निघ.२भ या व्या महाविषगर्भतैले । लिङ्गिन्याम् । जीवन्त्याम् । नागदमन्याम् । नाकुलीकन्दे । रुद्र जटायाम् । जटालता । रा नि व २ ।

**ईषः** । पु । आश्विने मासि । अ टी भ ।

**ईषत्पाण्डुः** । पु । धूसरवर्णे । अम ।

**ईषदुष्णः** । त्रि । कवोष्णे । अल्प उष्ण । हे.च.। वै निघ । [वै.निघ.।

**ईषद्दीर्घम्** । क्ली । वातामफले । बादाम फल ।

**ईषद्वीजा** । स्त्री । बेदाना इति ख्यातफलवृक्षे ।

**ईषादन्तः** । पु । दीर्घदन्तगजे । हे च. ।

**ईषिका** । स्त्री । अक्षिकूटे । गजाक्षिगोलके । तूलिकायाम् । हे.च ।

**ईषिकास्त्रम्** । क्ली । अस्त्रविशेषे । येन वास वोऽश्वानां पक्षच्छेद कृत । 'ईषिकास्त्रं समुत्सृज्य पक्षच्छेद व्यधादयम् ।' नकुल १४ ।

**ईषीका** । स्त्री । वीरणादिशलाकायाम् ।

**ईष्मः** । पु । वसन्तकाले । उष्मा ।

**ईहा** । स्त्री । चेष्टायां । वाञ्छायां । चिका ।

**ईहामृगः (वृकः)** । पुं । कोके । रत्ना. । कुकुरवद्धरिणघातिकपिलवर्णजन्तुविशेषे । ঢোগ। रा.नि व.१८। (वृक ) । श र. ।

**ईक्षणम्** । क्ली । नेत्रे । रा.नि व १८ । दर्शने । मे थाविर्क ।

**ईक्षणिकः** । पुं, स्त्री । हस्तरेखाद्यवलोकनेन शुभाशुभकथनजीविनि । गणक ।

**ईक्षा** । स्त्री । दृष्टौ ।

---

## उ

**उकनाहः** । पुं । पीतरक्तवर्णघोटके । हे.च. । लक्षण—"रक्तपीतकषायोत्थवर्णजो यस्य दृश्यते । उकनाह स विख्यातो वर्णो वाहस्य देहज ।" ज. द.३४ ।

**उकुणः** । पु । शिर कीटे । माथार उकुन ।

**उक्लेदः** । पु । वमौ ।

**उख(ष)रम्** । क्ली। क्षारभूमौ । यत्रोप्त वीज न रोहति । क्षारमृत्तिकायाम् । সোরা । वै.निघ. । रा नि.व.२ ।

**उख(ष)रजम्** । क्ली । पांशुलवणे । সোরা । रोमकनाम्नि अयस्कान्तभेदे । लवणे । रा नि व २० ।

**उखर्व्वलः** । पु । तृणविशेषे । हि उखल गुणा —बलद रुचिजनक. । पशूनां सदा हित य । रा नि.व.८ ।

**उखलः** । पु । उखर्व्वलतृणे । रा नि.व.८ ।

**उखा** । स्त्री । रन्धनस्थाल्याम् । वाङ्गिवान हाँडी । हि भरथियाभाइ । अम. [कावाव । अम ।

**उख्यः** । त्रि । उखासंस्कृते,मांसादौ । हि हाण्डि-

**उग्रम्** । क्ली । वत्सनाभनामकविषे । रा नि व ६। पु। शोभाञ्जनवृक्षे । श च. । वृष्टवत्सौ । त्रि । उत्कटे । कटुके । तीक्ष्णे । रौद्रे । मे. ।

**उग्रकाण्डः (क.)** । पुं । कारवेल्लके । क-रেলা গাছ । रा.नि.व.३,मद व.७। काण्डवल्ली । · See काण्डवल्ली ।

**उग्रगन्धः** । पु । शुक्लरसोने । रा नि व ७। कट्फलवृक्षे । रा.नि व ९ । रक्तरसोने । बर्बर वृक्षे क्षुद्रतुलसीवृक्षे । रा.नि.व.१० । रसोनमात्रे । भा.पू १भ ह.व. । चम्पकवृक्षे । श.च । क्ली । हिङ्गुनि । रा.नि.व ६ । त्रि । उत्कटगन्धयुक्ते ।

**उग्रगन्धा (न्धिका) (न्धी)** । स्त्री । वनय मान्याम् । वनयवानि । भा.पू १भ ,मद.व २ । अजमोदायाम् । রাঙুনী । भा.पू १भ. । वचायां। दछ । प सु ,रा नि.व ६ भा.चने ,वै निघ सा ज्व. अर्कादौ । मद्दाभरीवचायाम् । हि कुलिञ्जन। भा पू १भ.ह व. । इय सुगन्धवचाप्युच्यते । छिक्किकायां । হেঁচেটা । मे. । अजगन्धायां । रा नि व.४ । ( गन्धिका) अजमोदायां । वन यওয়ান। रा नि व ६। सि.यौ यस्मा चि.एलादिमन्त्रे । (ग न्धी) शुक्लरसोने । मद.व.७ । [हे.च ।

**उग्रनासिकः** । त्रि । दीर्घनासिके । নেঠো।

**उग्रपत्रकः** । पुं । महानील्याम् । वै.निघ ।

**उग्रभा** । स्त्री । गोपसवल्लाम् । वै निघ. ।

**उग्रवीर्य्यम्** । क्ली । हिङ्गुनि । रा नि.व ६ ।

**उग्रा** । स्त्री । धन्याके । धने । रत्ना. । यमान्यां । रा नि व.४ । संविदामश्वर्य्याम् । গৌরী । चपि । वचायाम् । भा.म.१भ.कर्षकज्व चि । ' कटुचिकी शाघनकुस्तुम्बीभि ।" वै.निघ.छ.चि,वचादिचूर्णे, कटजलेदे । छिक्किकायाम् । হেঁচেটা । हे.च. ।

**उड्डुणः** । पु । उत्कुणे । উকুন । श मा ।

**उचितः** । त्रि । अभ्यस्ते । परिमिते । मे.तत्रिकं ।

**उच्चः** । पुं । नारिकेलवृक्षे । रा.नि.व.११ । सर लदेवदारौ । त्रि । उन्नते ।

**उच्चटः** । पुं । वङ्गे । वै.निघ. ।

**उच्चटा** । स्त्री । (Abrus precatorius.) स्वनामख्यातक्षुपे । ওকড়া,উচ্চটা মূল,কুঁচ গাছ इति च प्रसिद्धे । तैं घुंडतुंगमुस्ते । रत्ना. । महा भल्लातकगुडे । लशुनभेदे । हे.च.सु.चि.२६अ. । रक्तगुञ्जायाम् । रा.नि.व.३,वै.निघ,२भ.चय चि ,इत्यादिमोदके । भूधात्र्याम् । ভূঁই আমলা । रा.नि.व ५ । नागरमुस्तायाम् । रा.नि.व ६ । श्वेत-गुञ्जायां । "श्वेतगुञ्जोच्चटा प्रोक्ता ।" भा.म १भ. न्यु.व । तृणविशेषे । निर्विषी वा চেঁচুয়া । अ टी.भ । [क्ली । चिञ्चोटकपत्रे ।

**उच्चटापत्रः** । पुं । क्षुद्रतालीशपत्रे । वै.निघ. ।

**उच्चटाफलम्** । क्ली । रक्तगुञ्जायां । লালকুঁচ, ওকড়া ফল । भैष.कुष्ठ चि महाभल्लातकगुडे ।

**उच्चटामूलम्** । क्ली । चिञ्चोटकमूले । চেঁচ-কোর মূল, ওকড়ার মূল । सु.चि.२६अ. ।

**उच्चतरुः** । पुं । नारिकेलवृक्षे । रा.नि.व.११ ।

**उच्चन्द्रः** । पुं । निशाचतुर्थप्रहरे । श.र. ।

**उच्चयः** । पुं । परिधानवस्त्रग्रन्थौ । हे.च. । राशौ ।

**उच्चलम्** । क्ली । मनसि । हे.च. ।

**उच्चललाटा (टिका)** । स्त्री । महत्स्त्रायां । हारा. । उच्चललाटविशिष्टायाम् । त्रिका. ।

**उच्चाटनम्** । क्ली । उत्पाटने । উদাসকরণ । षट्कर्म्मान्तर्गताभिचारकर्म्मविशेषे । तन्त्रम् ।

**उच्चारः** । पु । विष्ठायाम् । रत्ना. ।

**उच्चिङ्गटः** । पुं । उच्चिटिङ्गनामकीटे । উচ্চিং-ড়ে । क्षणगड्मत्स्ये । मे.टचतुष्कं ।

**उच्चिटिङ्गः** । पुं । A sort of cricket. उच्चिङ्गटे । উচ্চিংড়ে । रा.नि व.१९ । वातप्रकृतिकीटविशेषे । लक्षणम्—"कृष्णलोमोच्चिटिङ्गेन सम्भलिङ्गो भवानिमान् । दष्टः शीतोदकेनेव सिक्ताऽप्यङ्गानि मन्यते ।" तद्दष्टे वातजन्यरोगा भवन्ति । सु कल्प.८अ. ।

**उच्चूलः** । पुं । ध्वजोर्द्ध्वमुखकूर्च्चे । हे.च. ।

**उच्चैःश्रवाः** । त्रि । बधिरे । पुं । घोटकभेदे ।

**उच्छादनम्** । क्ली । गन्धद्रव्येण शरीरमार्ज्जने । भ.टी. । [क छाती । भागवते ।

**उच्छिलीन्ध्रम्** । क्ली । गोमयच्छत्राके । কোঁড়-

**उच्छिष्टमोदनम्** । क्ली । सिक्थके । रा.नि.व.।

**उच्छीर्षकम्** । क्ली । उपधाने । তাকিয়া । हला. । पुं । शय्यादोषविशेषे । सु.चि.२६अ. ।

**उच्छूनः** । त्रि । स्फीते । वर्द्धिते ।

**उच्छेदः** । पुं । उन्मूलने ।

**उच्छ्र(च्छ्रा)यः** । पुं । उच्चतायां । अम. ।

**उच्छ्रितः** । पुं । सरलदेवदारुवृक्षे । वै.निघ. ।

**उच्छ्वसितः** । त्रि । प्रफुल्ले, विकसिते । हे.च ।

**उच्छ्वासः** । पुं । प्राणने । मे.सत्रिकं । अन्तर्मुखश्वासे । हे.च ।

**उज्जासनम्** । क्ली । मारणे । अम । [म. ।

**उज्जृम्भितः** । त्रि । प्रफुल्ले । क्ली । चेष्टायां । अ-

**उज्ज्वल(न)म्** । क्ली । सुवर्णे । रा.नि.व.१२ । पुं । धान्यभेदे । च. । [त्रि./।

**उज्ज्वला** । स्त्री । कुमरिचे । লঙ্কামরিচ । अ-

**उज्झटा** । स्त्री । भूम्यामलक्यां । ভূঁই আমলা ।

**उञ्छः** । पुं । उञ्छवृत्तौ । जटा. ।

**उटः** । पुं । गुप्तकष्टपे । वै.निघ । [वै.निघ. ।

**उटजा** । स्त्री । पानीयशालायां । पर्णशालायां ।

**उटि:(ड़ि:)का** । पुं,स्त्री । नीवारधान्ये । উড়ি ধান । मद.व.१० । गुणाः—"उडिका मत्र कथिता बल्या श्लेष्मविवर्द्धनी ।" राज. ।

**उट्टङ्कम्** । क्ली । मूत्रे । अस्त्रभेदे ।

**उडु** । क्ली । उदके । भ.टी.भ. ।

**उडुपतिः** । पुं । सोमलताभेदे । सु.चि.२९अ । See सोम. । चन्द्रे । [ड । मद.व.२ ।

**उडुपप्रिया** । स्त्री । कमलिन्यां । পদ্মের ঝা-

**उडुम्बरः** । पु, क्ली । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । अम. । कुष्ठरोगविशेषे । मे । लक्षणम्—

"उडम्बरफलाभास कुष्ठमौडम्बरं वदेत् ।" मा नि। ताम्रे। प म । कर्पमाने (२ तो.) । प प्र. ।

**उडम्बरदला** । स्त्री । दन्तीवृक्षे। रा नि.व ६।

**उडम्बरपर्णी** । स्त्री । दन्तीवृक्षे । म.च. ।

**उड्डामररस** । पु । पित्तगुल्माधिकारे रस । पाठ —'शुद्धसूत सम गन्ध सूताश मततामक। पचांश शाकवृक्षस्य द्रवैर्मर्द्य दिनद्वयम्। सर्पाक्ष्यो स्थैर्द्रवैर्याक्षि कृत्वा गजपुटे पचेत्। पचधा भूधरे वाथ चूर्णं जैपालतुल्यक । त्रिगुञ्ज भक्षयेच्चाज्यै पित्तगुल्मप्रशान्तये। द्राक्षाहरीतकीक्वाथमनुपान प्रकल्पयेत् ॥" रस र गुल्म चि । पारा १ ड. गन्धक १ ड. ताम्र ।• सिकि ड. । শেগুন বা শিরীষ এবং নাগেশ্বরের রস মর্দ্দনীয় দ্রব্যের পঞ্চমাংশ দ্বারা দুই দিন মর্দ্দনপূর্ব্বক গজ পুটে ভূধরযন্ত্রে পাক করিয়া দিবাভাগে চূর্ণ কর। শীতল হইলে পরে ঔষধ সমভাগ জয় পাল চূর্ণের সহিত মিশ্রিত করিয়া ৩ কুঁচ ঘৃতে মাড়িয়া সেবন করিবে।

**उड्र (पुष्प.)** । पु, क्ली । जवापुष्पवृक्षे । जवा पुष्पे । वै निघ । [চীনদেশীয় গোলাপ । Wil

**उड्ढ** । पु, क्ली। जपापुष्पवृक्षे । जवापुष्पे । जवा,

**उण्डुक.** । पु । मलाशये । सु शा ५श्च । स चा न्त्रदेशस्थ शोणितकिट्टप्रभव । सु शा ४श्च । "फु प्फुसस्यावरणौ द्वे जर्द्दतस्तद्वय तथी । उण्डुक शैशवे मध्ये मध्यान्ते महतां न हि॥" अत्रि.।

**उत्कट:** । पु । (Sachharum sara) शर काण्डे। शर गाछ। रा नि व ८। चुद्रक्षुपविशेषे । ওকড়া, কালিয়াবিষর। प सु । रक्तौ। रक्त चौ । रा.नि व.१४ । मदे । श र ,भैष नि.रो चि.। मनःशिलिनि । हारा । क्ली । Woody cassia or its bark त्वचभेदे । सतावीशेषे। শালমা। Wil गुडत्वचि । दारचिनि । प सु ,रा नि व ६, हारा । गण्डकुसुमे । हारा । तेजपत्रे । श टी भ । चि। उनाले। तीव्रे।

**उत्कटा** । स्त्री । सिंहलीपिप्पल्याम् । वन पि प्पूल। हिं सैतसुष्यी । म रायपिपलि, उटक टारा। गुणा —"सैंहली कटुकष्णा च अन्नघ्नी दीपनी परा। कफश्वाससमीरार्त्तिशमनी कोष्ठशो धनी ।" रा.नि व ६ । "उत्कटा कचिदा शोषा तिक्ता कषायमुदाहृता। मूत्रकृच्छ्र पित्तवात मह व्रणाश्च हृद्वुजें। विस्फोटक नाशयति वीजमस्याः शीतल। हृद्य हर्षिकरश्चैव मधुरश्च प्रकीर्त्तितम्।' वै निघ । [निरासनम्लितौ । सु चि १४ ।

**उत्कटा(टुका)सनम्** । क्ली । कठिनासने।

**उत्कण्टकम्** । क्ली । ওকড়া इति ख्यात ह्रस भेदे । च.चि १श्च.। [र्यां । श्रम ।

**उत्कण्ठा** । स्त्री । इष्टलाभे कालविलम्बासहिष्णुत

**उत्कता** । स्त्री । (Pothos officinalis) गजपिप्पल्याम् । श च । उत्कण्ठायाम् ।

**उत्कर:** । पु । रक्तेक्षौ । रक्त ईक्षु । रा नि व १४ । धान्यादराशौ । श्रम । उत्कारिकायाम्। पुल्टिश । भैष यत्न चि ।

**उत्कर्ण.** । पु । वायुजन्याश्वरोगे। अश्वस्य क र्णपुच्छगात्राणि स्तब्धीभवन्ति। 'कर्णौ स्तब्धौ तथा पुच्छ स्तब्ध गात्रमकिञ्चन । वातात्मकेन वाहस्य भवेदुत्कर्णकेन हि॥" ज द ५४श्च ।

**उत्कर्षणम्** । क्ली । अधोगतस्य जर्द्धाकर्षणे । सु चि १५श्च । [कलिकायाम् । কুঁড়ি । বিকা ।

**उत्कलिका** । स्त्री । उत्कण्ठायाम् । हारा ।

**उत्काका** । स्त्री। प्रतिवर्षप्रसूतायां गवि। श च।

**उत्कारिका** । स्त्री । रोटिकायां । रुटी । वा टी ইসা। यवमाषेरक्तशोजातसीकुसुम्भवीजादिभि पिष्टैस्विन्नै पिण्डिकाकृतिर्यं स्वेदनोपाय स उत्का रिका । पुल्टिश । चरक ,शा सू १७श्च । गुटिका याम् । वडि । सु चि २६श्च । लप्सिकायां । काई, মোহনভোগ । सु चि १४श्च । [च द यज्ञ वि ।

**उत्कास: (नम्)** । पु,क्ली। कासे। উৎকাশি

**उत्कुञ्चि: (का)** । पु, स्त्री । (Nigella indica) स्थूलकृष्णजीरके। মোটা কৃষ্ণজীরে। रवा । कुञ्चिकावृक्षे । मश्ररञ्जी वट ।

**उत्कुटम्** । क्ली । उत्तानशयने। চিৎ হইয়া শয়ন। हारा ।

**उत्कुण:** । पुं । केशकीटे । উকুন । ३च. ।

**उत्कट:** । पु । उच्चवारवे। हारा ।

न्विमी। पिच्छावलिभिर्वेगस्य पादीन कीर्तितो ऽपर ॥ भानस्खान.।

**उत्तरवायु.** । पु । तद्दिमवमारुते । स च श्री त विध दोषप्रकोपकर क्लेदन प्रकृतिस्थानां बलद मदु चतचीणविषार्त्तानां विशेषेण गुणक रथ। मद व.२३।

**उत्तरवारुणी** । स्त्री । इन्द्रवारुण्याम् । वा थानशशा। र सा.स वैक्रान्तमारणे । भैष कुष्ठ चि। 'शिला चीसरवारुणी।' ज्व चि कुलवधूरसे। उत्तमारणीति वा.उ ३७अ ,वै.निघ २भ काम चि वारुणीपवधूमे ।

**उत्तरायणम्** । क्ली । मकरसङ्क्रान्तितो मिथुन सङ्क्रान्तिसमाप्तिपर्य्यन्तकाले, सवितुरुत्तरमार्गगति रूपे वा काले । तदादान जानीयात्, यतस्तदा नृणां प्रतिदिनं सारमादत्ते, आदित्यपवनयो भुव सौम्यगुणहरत्वात् । वा सू ३अ. । [श्रम ।

**उत्तरासङ्गः** । पु । उत्तरीयवस्त्रे । ऊढ़ूनि ।

**उत्तरिणी** । स्त्री । उत्तमारण्याम् । गुणा — "उत्तरिणी तु कटुका शीता नेत्र्या लघु स्मृता । उष्णा स्निग्धा सारका च तुवरा व्रणरोपणी । कासव्रणकृमिश्वासज्वरपित्तप्रमेहकान् । कफकुष्ठ प्रलापाश्च वात तन्द्राश्च दद्रुक। चयकास मूत्रकृच्छ्रं योनिरोगञ्च शोथक । नाशयेदिति सम्प्रोक्ता सुख प्रसवकारिणी । शाकास्तस्याश्चोष्णवीर्य्या तिक्ता क्रम्यर्श कुष्ठहृत् । कफवातहरा शीता फल तस्या पटु स्मृत । तिक्तसुष्णञ्च कटुक लघु चाग्निप्रदीपक। पित्तकोपकरश्चैव शिवद विषनाशनम् ॥" वै निघ।

**उत्तानः** । त्रि । ऊर्द्धास्यशयिते । मे नत्रिक । क्ली । जले । हे च ।

**उत्तानकः** । पु । (Cyperus) तृणभेदे । नागरमुस्ता । उषटायां । ठेंचूवा, निर्विषी । र मा. । रवा. ।

**उत्तानपत्रः (क)** । पु । रक्तैरण्डे । रा नि व ८ । भा पू १भ गु व । मद व १ । श्वतैरण्डे । वै निघ । [गौ । श्रम ।

**उत्तानशयः** । पु । स्तन्यपायिशिशौ । अतिशि

**उत्तानशायी** । त्रि। उत्तानशायिनि। वै निघ।

**उत्ताप.** । पु । तेजसि । उष्णतायाम् ।

**उत्तापनम्** । क्ली । उष्णताकरणे ।

**उत्तार.** । पु । वमने । [स्कटे ।

**उत्तालः** । पुं । मर्कटे । मे लत्रिकं । त्रि । उ

**उत्तुण्डकी** । स्त्री । करञ्जके । वै निघ ।

**उत्तुण्डितः** । त्रि । निर्गते । सु चि २७. ।

**उत्तुष.** । पुं । लाजायाम् । खई । छारा ।

**उत्तेजि(रि)तम्** । क्ली। अश्वस्य मध्यमगमनगति विशेषे । इयं चतुर्थपञ्चमगति । "उत्तमुत्तेजितमुच गमन कोपादिवाखिले पदे ।" हे च ।

**उत्तोलनम्** । क्ली । उत्क्षेपणे ।

**उत्थानम** । क्ली । मलोत्सर्ग । रवा । मलवेगे । पौरुषे । हर्षे । हे च मे नत्रिकं ॥

**उत्थित.** । पु । सरलद्रवे । रा नि व १२। त्रि। उत्पन्ने । मे तत्रिक । [च ।

**उत्थिताङ्गुलि** । पु । चपटे । चापड़ । श

**उत्पतः** । पु । पक्षिणि । त्रिका. ।

**उत्पतनम् (पत्ति.)** । क्ली, स्त्री । उत्पत्तौ । ऊर्द्धगमने । मे नचतुष्क । जन्मनि ।

**उत्पल(क)म्** । क्ली । Blue lotus नील कमले । नीलपद्म । रा नि व १० । सु व ३८ उत्पलादौ ड. । च सू ४अ । च द र पि चि । कुष्ठे । कुड । तैं चेंगलिकोष्टु । च सु चिव । प्रकृ तूरौमोदके । र.सा स । च द पि ज्व लोधादि । "लोध्रोत्पलाम्रतापघ्र ।" लाचादितैले । वै निघ अर्श चि ह्रीवेरघृते । शालूके । प सु । स्वनाम ख्यातकमलजातीयपुष्पे । उन्दि फूल,'हन्दा फूल। छि कोञ्जि । म उत्पल । सु.चि ३८. । गुणा — कषाय मधुरं शीतलं पित्तकफरक्तघ्न । राज । शीतल स्वादु रक्तपित्तघ्न दाहश्रमवमिभ्रान्तिकृमि हरञ्च । रा नि,व १० । सामान्येनोत्पलं शीतं स्वादु दाहहर मत । रक्तदोष श्रमं वान्ति भ्रान्ति कृमि क्रमीन् जयेत्। द्रव्यगुण । नीलोत्पलो नीलउत्पि। सि यो र पि चि सिद्धतमयोगे, श्रीकण्ठ । "कषा कषायोत्पलसम्प्रियङ्गु ।" सि यो.यक्ष्म चि चवन प्राशे । वा गु १५अ ,अञ्जनादि । पद्मकादि । "प चोत्पलधान्यरोहिणीबिम्बै ।" च द.ज्वरातिविष मज्जनादि । पुष्पे । मे.। जलजातपुष्पमात्रे । कुन्।

**उत्पलः** । त्रि । मांसशून्ये । हे.चं. ।

**उत्पलकः** । पुं । चेत्रकरीषे । वनघुँटे । प्र. र.सा सं. कृष्णमारषे । नीलोत्पले । नीलशुन्दि । रा.नि.व १० ।

**उत्पलकन्दः** । पुं । शालूके । रत्ना. ।

**उत्पलकुष्ठकः** । पुं । कुष्ठौषधौ । वै.निघ ।

**उत्पलकेसरम्** । क्ली । पद्मकेशरे । भैष.क्षुद्र-रो.चि.कनकतैले । [विशेषे । श भा ।

**उत्पलगन्धिकम्** । क्ली । अतिसुरभिचन्दन

**उत्पलगोपा** । स्त्री । श्वेतशारिवायाम् । श्वेत श्यामलता । वै.निघ. ।

**उत्पलदलम्** । क्ली । तन्नामकशस्त्रविशेषे । तच्च छेदने भेदने च प्रयुज्यते। लक्षणं यथा—"उत्पला-र्धधाराख्ये भेदने छेदने तथा ।" अत्रि. ।

**उत्पलपत्र(क)म्** । क्ली । वैद्यकशस्त्रविशेषे छेदने भेदने च । तत्परिमाणं षडङ्गुलम् । सु सू ८अ. । मद.व.१४अ. । तिलके । धरणिः । कुव लयपत्रे । हे.च ।

**उत्पलभेद्यकः** । पुं । दीर्घायतसमोभयपालि कर्णबन्धनाकृतिविशेषे । सु सू.१६अ.। [र.पि.चि.।

**उत्पलमृत्** । स्त्री । सौराष्ट्रमृत्तिकायां । च द.

**उत्पलशारिवा** । स्त्री । श्यामालतायाम् । प. सु.। र.मा.। अनन्तमूले । अम. । भैष अ भ चि.।

**उत्पलषट्कम्** । क्ली । योगविशेषे । "उत्पलं धान्यकं शुण्ठी पृश्निपर्णी बलायुतं । बालबिल्वं गवां तक्रेणायुषेन च पेषयेत् तेन लाजकृतं मण्डं देय-मानीय शीतलम् । ज्वरातिसारशमनं हुताशनबल प्रदम् ॥" हा अत्रि ३स्था.२अ. ।

**उत्पलादिः** । पुं । कषायवर्गविशेषे । उत्पलर-क्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुक-ञ्चेति । गुणाः—"उत्पलादिरयं दाहपित्तरक्तप्रणा-शनः । पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः" इति । सु.सू.३८अ । भावप्रकाशे लक्षणविधः । यथा —"उत्पलं मोचमारक्तं कह्लारं कुमुदं तथा । नेत्रार्थोऽप्ययं मधुकमुत्पलादिरयं गणः । मुखोत्थमो हरत्येवं दाहं तथा हृदामयम् । रक्तपित्तञ्च मू र्च्छां च तथा छर्दिमरोचकम् ।" इति ।

**उत्पलिनी** । स्त्री । कुमुदखण्डे । शुन्दिफूलेर झाड़ । लघुकमलिन्यां । हिं कोईफोटी । गुणाः —हिमा तिक्ता रक्तामयघ्नी पित्तघ्नी तापकफका सत्वाश्रमवमिघ्नी च । तस्या बीजगुणाः—स्वादु रुच्यं हिमं गुरु च । रा नि.व.१० । [भि.सचित्रं ।

**उत्पली** । स्त्री । तुषचर्पट्याम्। तूषेर चापडा ।

**उत्पाटः (तः)** । पुं। कर्णपालीगतरोगे। लक्ष-णं—"गुर्वाभरणसंयोगात्ताडनाद्घर्षणादपि। शो थः पाल्यां भवेच्छ्यावः दाहपाकरुजान्वितः । रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मत. ॥" मा. नि. । कर्णपाल्या उपद्रवे । सु.उ.१०अ. ।

**उत्पाटनम्** । क्ली । वायुजन्यव्रणवेदनाविशेषे । उन्मूलने । सु.सू.२२अ ।

**उत्पादकः** । पुं । शरभे । हे.च. ।

**उत्पादशयनः** । पुं। टिट्टिभपक्षिणि । हे.च.।

**उत्पादिका** । स्त्री । उपजिह्विकायाम् । वा रा। हिलमोचिकायाम् । हिंञ्चे । पूतीदिकायां । पूंई । त्रिका.। देहिकानामकीटविशेषे । श च. ।

**उत्पारः** । पुं । युद्धघृते ।

**उत्पाली** । स्त्री । आरोग्ये । श च ।

**उत्पिञ्जलः** । त्रि । भृशमाकुले । हे.च ।

**उत्पिष्टसन्धिः** । पुं । सन्धिरुत्पेषणे, अस्थिसन्धी घर्षणे । तेन सन्धावुभयतः शोफो वेदना च भव-ति । सु.नि १५अ. । See भग्नम् ।

**उत्पीडः** । पुं । सुरामण्डे । फेने ।

**उत्पुटकः** । पुं । कर्णपालीगतरोगविशेषे । सु. सू.१६अ । कर्णपाल्युपद्रवे । सु. ।

**उत्प्रापः** । पुं। भागे । वैनिघ.। [न्द्रिये । मि.।

**उत्फुल्लः** । त्रि । विकसिते । हे.च.। क्ली । स्त्री-

**उत्सङ्गः** । पुं। क्रोडे । रा.नि.व.१८। "क्रोडमङ्-कयोरुत्सङ्गः प्राग्भागो वपुषः स्मृतः ।" राज.। व्रण-बन्धप्रदेशे । सु.चि.१अ. । पर्वतमध्यदेशाकारव्रण-बन्धविशेषे । सा.सू.१८अ. ।

**उत्सङ्गपिडका** । स्त्री । लक्षणं—नेत्रवर्त्मगत-रोगविशेषे । वर्त्माधोवर्त्मनि सञ्जातपिडकायां । सा च सूक्ष्मा कण्डूमती, अधोवर्त्मनि सोत्सङ्गा वक्त्रा-

भ्यन्तरमुखी, बहिश्चामान्तःपूया च। "अभ्यन्तर मुखी तामा बाह्यतो वर्त्मनश्च या। सोत्सङ्गोत्सङ्ग पिडका सर्वजा स्थूलकण्डुरा॥" मा.नि.।

**उत्सङ्गी** । पुं। नाडीव्रणविशेषे। नाली घा। सु.।

**उत्सर्जनम्** । क्ली। दाने। अम।

**उत्सर्जनी** । स्त्री। गुदस्य द्वितीयवली। लक्षणं यथा—"उत्सर्जनी तु तदध. सा सार्द्धाङ्गुलसम्मिता।" भा.।

**उत्सर्या** । स्त्री। प्राप्तप्रजननकालायां गवि। पाल लइबार योग्य गाभी। जटा.।

**उत्सवः** । पु। इच्छाप्रसवे। उत्सेके। उत्साहे। क्रोधे। मे.वत्रिकं।

**उत्सादनम्** । क्ली। उद्वर्त्तने। भा.म.४भ.ने त्री.चि.। "ता मोचणोत्सादनलेपनादीन्।" "उत्सादनाद्भवेत्स्त्रीणा विशेषात्कान्तिमद्वपु।" सु चि. २४अ.। उत्सवे। रत्ना.घने। समुल्लेखने। मे.न चतुष्क। निम्नस्य व्रणस्य उन्नतीकरणे। सु.चि १ऋ.।

**उत्साहः** । पुं। मनस उल्लासे। अम।

**उत्साहयुक्तः** । पुं। शरभे। मद व १२।

**उत्साही** । पुं। भक्तरोगिणि। [वा.सू.।

**उत्सिङ्घनम्** । क्ली। नासया ऊर्द्ध्वश्वासधारणे।

**उत्सुकः** । त्रि। उत्कण्ठिते। व्यग्रे।

**उत्सूरः** । पु। सन्ध्याकाले, दिनावसाने। है च.।

**उत्सृष्टः** । त्रि। त्यक्ते। अम.।

**उत्सेधः** । पु। शरीरोन्नत्ये। देहे। अम।

**उत्स्मयः** । पुं। मन्दहास्ये। वै.निघ।

**उत्त्विमः** । पुं। धुस्तूरफले। श.च.।

**उत्स्विसिका** । स्त्री। वातडविशेषे। है.च।

**उत्त्वेपणम्** । क्ली। व्यजने। धान्यमर्द्दनवस्तुनि। है च.।

**उत्त्वेपमर्म्म** । क्ली। शङ्खयोपरिकेशप्रान्तस्य मध्येषि। तत्र विशल्यमर्म्मणो युगलं तत्रावेव ति ष्ठति। सु.शा ६ऋ.।

**उद(क)म्** । क्ली। जले। श.र.,रा.नि,व.१४। उ। करिपङ्कयायाम्। रत्ना.।

**उदकप्रक्षेपणम्** । क्ली। जलप्रक्षेपेण जलस्य शीतीकरणोपाये। सु.सू.४५अ.।

**उदकमञ्चिका** । स्त्री। जलप्रसाधनार्थमाधा रविशेषे। सु.सू.४५अ.।

**उदकमञ्जरीरसः** । पुं। रसोऽयं विराम ज्वरे देयः। मात्रा २ र. अनुपानं आर्द्रकरस। अत्र लवणं मरिचं शर्करा विष। मतान्तरे शर्करा सर्व्वद्रव्यसमा। विरावं २४ प्रहरपर्य्यन्तम्। पाठः —"सूतो गन्धष्टङ्कणः सीसपत्र स्यादितैस्तुल्या शर्करा मक्षायिते.। भूयो भूयो भावयेच्च विराव वङ्गी देय षड्डरिवस्य वारा॥" पारा १ ভ. গন্ধক १ ভ. সোহাগার খৈ १ ভ মরিচ १ ভ. বিষ ৪ ভ। কেহ কেহ চিনি ৪ ভাগ বলেন। अत्र शर्कराभ्याने मन शिलादानेन चन्द्रशेखररसो भव ति। र.सा.सं.।

**उदकमेहः** । पुं। कफोत्थमेहविशेषे। लक्षण —"अच्छं बहुसितं शीत निर्गन्धमुदकोपम। मेह त्युदकमेहेन किञ्चिदाविलपिच्छिलम्।" मा.नि.।

**उदकवहस्रोतः** । क्ली। जलवहनाडी। ते च द्वे तयोर्मूलं तालु क्लोम च। सु.शा.९अ.।

**उदकवहा** । स्त्री। मूत्रवस्तिमभिप्रपन्ने धमनी द्वये। तयोर्मूलं तालु क्लोम च। सु.शा ९।

**उदकषट्पल(घृत)म्** । क्ली। कर्णरोगे। तिलतैलं ४ श. वारि ११ श दुग्धं ४ श यवक्षारादीनां प्रत्येक पल कल्क दत्त्वा पचेत्। पाठः— "सक्षारैः पञ्चकोलैस्तु पालिकैस्त्रिगुणोदके। त्रि क्षीर घृतप्रस्थं ज्वरघ्नं सौहकासहृत्।" ঘৃত ৪ শ জল १२ শ দুগ্ধ ৪ শ পঞ্চকোল, যবক্ষার প্রত্যেকে १ প. (৮ তো.)। ইহা কল্ক। च द.घर्म त्रि। [रा.नि व.९।

**उदकिका** । स्त्री। वस्तानामधये। বেলেডা।

**उदकी** । स्त्री। पाठायाम्। थादनानि। ३ निघ.यङ.वि.२थतिविषांदिः।

**उदकीर्णः (र्य्यः)** । पुं। महाकरञ्जे। उदक करञ्ज। द्वि अरारि। रा.नि.व.९। Cनाकाटू १म.गु.व.।

**उदकीर्य्या** । स्त्री। पूतीकरञ्जे। नाटाकरञ्ज

बा ग्री हेमा। ना मू १५अ श्रर्कादि । "मत्यकपुष्पी पीततैलोदकीर्घ्यां।" च मू २अ वमने, फलिनीव १अ । सु मू.२८अ.कफशमने। [दकोदरम्।

**उदकोदरम्** । क्ली। जलोदरनामरोगे। See

**उदक्या** । स्त्री। रजस्वलायाम्। अम.।

**उदगयनम्** । क्ली। उत्तरायणे। अम ।

**उदग्रदन्** । त्रि। महादन्तकरिणि। हे च ।

**उदञ्चनम्** । क्ली। पिधाने। ঢাকনী। हला।

**उदण्डपालः** । पु। मत्स्यविशेषे। দানকোণা মাছ। मैलपश्चकं। [পড়ে। रा नि व १८।

**उदया** । स्त्री। तैलपिपीलिकायाम्। লালপি

**उदधिः** । पु। समुद्रे। रत्ना.। [अब्धिकफ।

**उदधिकफः** । पु। समुद्रफेने। च द। See

**उदधिफलम्** । क्ली। समुद्रफेने। वै.निघ।

**उदधिफेन.** । पु। समुद्रफेने। च द रस र बाल चि। See अब्धिकफ।

**उदधिमलः** । पु। समुद्रफेने। राज।

**उदधिलवणम्** । क्ली। सामुद्रलवणे। भा।

**उदधिशुक्ति.** । स्त्री। मुक्तास्फोटे। সমুদ্রের ঝিনুক। [लवण। भा पू १भ।

**उदधिसम्भवम्** । क्ली। सामुद्रलवणे। পাঙ্গা

**उदन्तिका** । स्त्री। तृप्तौ। हारा.।

**उदन्या** । स्त्री। पिपासायाम्। रा नि.व २०। See तृषा।

**उदपर्णी** । पु। क्षुधान्यविशेषे। सु मू ४६८। [?]

**उदपानः** । पु, क्ली। कूपे। अम.।

**उदमन्थः** । पु। उदकमथानमन्थे। च सू ६अ। क्षाराद्विहितस्य्तमन्थो। स च ग्रीष्मे सेव्य। भा। प.मु.।

**उदमानम्** । क्ली। वारिमानादके।

**उदम्बरः** । पु। शरीरजकृमिभेदे। शार्ङ्ग ७अ.। See कृमि। क्ली। ताम्रे। তামা। च टी.।

**उदयः** । पु। उन्नतौ।

**उदयभास्करकर्पूरः** । पु। समानामस्थातक-पूरे। स च पक्क। सदलनिर्दलभेदेन द्विभेद। गुणा—'पीत सर स्वच्छक सम्भोक्त कठिन कटु समुदित स्यादीपकोऽथैलघु। शीद पित्त कर कफकृमिविषान् वातघ नाशाशुनि लाला स्रावगलयदी च शमयेत् जिह्वाजड्त्वापह।' वै. निघ.।

**उदयभास्कररसः** । पु। कुष्ठाधिकारे रस। अत्र केवल गन्धकेन मृत ताम्र दशभागम्। अमृत विष, तस्य द्वौ भागौ। र सा स.। पाठ—"ग न्धकेन मृत ताम्र दशभाग समुद्धरेत्। उपण (भा) पञ्चभाग (गा) स्यादमृतञ्च द्विभागिक। शुक्ष्णचूर्णी कृत सर्व्वं रक्तिकैकप्रमाणत। दातव्य कुष्ठिने ॥ उषण स्थान भूषणमिति। रसे चि.। 'पिप्पली पञ्चभागा स्यादिति।" सा कौ। তামা ১০ তো পিপুল ৫ তো. শৃঙ্গ বিষ ২ তো. जलेन पिष्ट्वा रक्तिप्रमाणा वटी कार्या। মতান্তরে পিপুলমূল ৫ তো. অন্যমতে ত্রিকটু ৫ তো। अन्य हिक्काश्वासे। पाठ—'धान्याभ्र सूतक गन्ध श्वेतापामार्गजद्रवै। तुल्यांश मर्दयत्वाथ यन्त्रे पा तालके पचेत्। ऊर्द्धलग्नन्तु सग्राह्यो रसो ह्युदय भास्कर। श्वास पञ्चविध हन्ति द्विगुञ्जमनुपानत॥ रस.र.। অভ্র, পারা, গন্ধক সমানভাগে শ্বেত আপাংরসে মাড়িয়া পাতালযন্ত্রে পাক করি লে যন্ত্রের ঊর্দ্ধভাগে যে বস্তু লাগে, তাহা উদয়ভাস্কর রস।

**उदरम्** । क्ली नाभिस्तनमध्यभागे। পেট। रा नि व.१८। मलाशयकरोगे। উদরি রোগ। त दष्टविधम्—वातपित्तकफसन्निपातै चतुर्विध प्ली हजन्य मलसञ्चयजन्य क्षतजन्य जलसञ्चयजन्यञ्चेति। अस्य निदान—अग्निमान्द्याजीर्णमलसञ्चयादिकम्। कुपितवातादिभि स्वेदवहाम्बुवहस्रोतसि रुद्धे, त था प्राणापानाभ्यामग्नौ दूषिते तदुत्पद्यते। साधा रणलक्षण—'आध्मान गमनेऽशक्तिर्दौर्बल्य दुर्ब्ब लाग्निता। शोफ सदनमङ्गाना सङ्गो वातपुरीष यो। दाहस्तन्द्रा च सर्व्वेषु जठरेषु भवन्ति हि॥" सु नि ७अ.। "सर्व्वमेवोदरं प्रायो दोषसङ्घातज मत। अतो वातादिशमनी क्रिया सर्व्वा प्रशस्यते॥ वह्निर्मन्दत्वमायाति कुक्षौ दोषप्रपूरिते। अजीर्णा ग्नलिनैर्यस्मान्मन्दाग्नौ मलसञ्चयात्। रुद्वा स्वेदा-

म्युगाहिन्यो जनयन्त्युदरं नृण॥ आध्मानमामताध्वल गतिरन्या कृशाङ्गता॥ शोथ सदनमङ्गानां दाह सन्द्रा विवर्णता। विड्गतसङ्ग पादाभ्यां शोथ याग्भलचणम्॥ पूर्व्वरूपम्। शीदकानुपज मांस शाक पिष्टकृत तिला। व्यायामाध्वदिवास्वप्नयान पानं विवर्ज्जयेत। तथोष्णलवणाम्लानि विदाहीनि गुरुणि च। नाद्यादन्नानि जठरी तोयपान विवर्ज्जयेत्॥ रस.र।

**उदरग्रन्थिः** । पु । अश्मरीरोगे। गुल्मरोगे। हे च। श्लर्ल। अाँ९ड़ी। मीङ्कि। Wil.

**उदरनाडी** । स्त्री । अन्ननाड्याम्।

**उदरपरीक्षा** । स्त्री । जठरपरीक्षायाम्।

**उदरपिशाचः** । पु । सर्व्वान्नभक्षके। हे च।

**उदरपीड़ा** । स्त्री । उदरामये।

**उदरभङ्गः** । पु । अतिसाररोगे।

**उदररसः** । पु । उदरस्थपाचकरसे।

**उदरव्याधिः** । पु । उदरामये।

**उदरस्फुटा** । स्त्री । नागवल्ल्याम्। वै निघ.।

**उदराग्नि.** । पु । जठराग्नौ। [निघ।

**उदरानलपञ्चकः** । पु। लघुतालीशपत्रे। वै.

**उदरामयः** । पुं । अतिसाररोगे। See अतीसार।

**उदरामयकुम्भकेशरी** । पु । शोथाधिकारे रस। अत्र गन्ध ताम्र, कटुक त्रिकटुकम्, नव यानि पञ्चलवणानि, कणामूल पिपपलीमूलम्। अत्र ब्रह्मा चव्य चित्रकचूर्णञ्च न प्रयच्छन्ति। पाठ —"रसगन्धकभस्मतामक कटुकक्षारयुतं सटङ्कण। कणमूलकचव्यचित्रक सयमानीलवणानि रामठ। समभागमिदं विभावयत् खरतापे त्वय म्बुगारिणा॥ उदरामयकुम्भकेशरी रस एष प्रथितोऽस्य माषक॥ सुरवाप्यनु दापयेद्भिषक् .। र.सा.सं.। পারা, গন্ধক, তামা, ত্রিকটু, যবক্ষার, সোহাগার খৈ, পিপুলমূল, চই, চিতেমূল, পঞ্চলবণ,যমান এবং হিং প্রত্যেক সমান ভাগ। লেবুর রসে মর্দন। মাত্রা ১মাষা।

**उदरारिरसः** । पु। उदराधिकारे रस.। य शोधोरेष सुधीधोरेव। पाठ—"पारदं गन्धक त्वच जैपालं पिप्लीसमं। आरग्वधफलाम्बुना वज्रीचीरेण मर्द्दयेत्॥ माषमात्रां वटीं खादेत् सी त्वां जलोदर जयेत्। चिञ्चाकस्वरसचानु पथ्य दध्योदनं हितम्।" र.सा.सं.।

**उदरावर्त्तः** । पु । नाभौ। रा.नि व १८।

**उदरावेष्टः** । पु। शारीरकृमिभेदे पाटाङ्कनि शार्ङ्ग ७अ। See कृमि।

**उदरिणी** । स्त्री। गर्भवत्यां। हे च। [हे च।

**उदरिलः** । त्रि। महोदरयुक्ते। তুঁড়িযুক্ত

**उदरी** । त्रि। उदरिले। हे च.।

**उदर्क.** । पु । धुस्तूरवृक्षे। मदनकण्टके। মযন কাঁটা। मे कविके।

**उदर्चिः** । पु । अग्नौ। मे.।

**उदर्दः** । पु। Erysipelas रोगविशेषे। तल्लक्षण यथा— "वरटीदष्टसंस्थान शोथ सञ्जायते बहि। सकण्डूतोदबहुल छर्द्दिज्वरविदाहवान्॥ उदर्दमिति त विद्याच्छीतपित्तमथापरे। वाताधिक शीतपित्तमुदर्दश्च कफाधिकम्॥" मा नि।

**उदर्दप्रशमनवर्गः** । पु। उदर्दप्रशमनयोगविशेषे। यथा—तिन्दुकपियालबदरखदिरकदरसप्तपर्णाश्वकर्णार्जुनासनारिमेदा इति दश। তেঁদ, পেয়াল, কুল, খদির, শ্বেতখদির, ছাতিম, শাল, অর্জ্জুন, পীতশাল, বিট্খদির। च.सू. ४अ। [मे.।

**उदर्द्दः** । पु । Scarlet fever. ज्वरविशेषे।

**उदलावणिकः** । त्रि। लवणोदकमिश्रद्रव्ये हला.।

**उदश्वित्** । क्ली । अर्द्धजलतक्रे। অর্দ্ধেক জল ঘোল। र मा अम। "दध्याश्वली यदि शमी तदुदश्विदाह।" रा नि व १५। प म १३। गुणा— लेपेन कुष्ठनाशन तृष्णादाहसुखशोषघ्न। रक्तपित्तशोषघ्नम्। रा नि व १५। [वै निघ।

**उदास्तूहः** । पु । जलकाके। পানকৌড়ী।

**उदानः** । पु । कण्ठस्थवायौ। "उदान कण्ठदेशस्थ।" भा। "उदानस्य पुन स्थानं नाभ्युरः कण्ठ एव च। वाक्प्रवृत्ति प्रयत्नोर्ज्जाबलवर्णस्मृति कर्म च॥" च.। "उदानो नाम यस्तूर्द्ध्व"

**उद्दान्त** । पु । निर्मदकरिणि । चम ।

**उद्दारा** । स्त्री । गुडूच्याम् । श च ।

**उद्दूलनम्** । क्ली । सतैलत्वङ्कर्पूरकस्तूरीमदि घलकचूर्णेषु । पाकराज ।

**उद्दूषणम्** । क्ली । रोमाञ्चे । हला ।

**उद्धृत.** । त्रि । परिभुक्तोज्झिते । मे तन्त्रिक ।

**उद्धट** । पु । कच्छपे । शूर्पे । मे टन्त्रिक ।

**उद्भव.** । पु । उत्पत्तौ । चम ।

**उद्भावः** । पु । उत्पत्ति ।

**उद्भिजः** । त्रि । उद्भिज्जे । च टी र ।

**उद्भिज्जः** । त्रि । उद्भिदो जाते । इन्द्रगोपमण्डूकादौ । चम ।

**उद्भित् (द्)** । त्रि । गुल्मादौ । तत्र पर्यायाः— तरु गुल्म लता वल्ली त्वचच । चम ।

**उद्भिदम्** । क्ली । भूमिसुद्रिय उद्दमज्जलस्थाने । वा टी हैमा । सामुद्रलवणे । पाङा लवण । र मा । Culinary salt साम्बविलवणे । रस र चर्म वि । त्रि । तर्वादौ ।

**उद्भूत** । त्रि । उत्पन्ने, जाते ।

**उद्भेद.** । पु । अङ्कुरे । रा नि.व २ ।

**उद्भमः** । पु । उद्वेगे । चम ।

**उद्यम.** । पु । उद्योगे ।

**उद्यानम्** । क्ली । उपवने । उद्यान स्वयमपरैः समन्तु लोकैरव्यथा विभववताद्य पुष्पवाटी । हला ।

**उद्याव.** । पु । मिश्रणे । संयोजने ।

**उद्योग.** । पु । चेष्टायाम् ।

**उद्र** । पु । जलमार्जारे । उद्विडाल । हारा । जलनकुले । ধেঁড়ে इति भाषा । निघ ।

**उद्रथ** । पु । वृक्षविशेषे । कुक्कुटशोक । ताम्रचूड । कुकुडा । मे. । पावके ।

**उद्राङ्क.** । पु । रक्तचित्रके । वै निघ ।

**उद्रिक्तचित्तता** । स्त्री । पानात्ययरोगे । म चतायाम् । रा नि व २० ।

**उद्रेकः** । पु । रजोगुणे । रा नि व २१ । गहा निम्बे । भा म १भ. ।

**उद्वत्सर** । पु । वत्सरे । हे च । [कर्ता ।

**उद्वमनम्** । क्ली । उद्गिरणे, वान्तौ । वमि

**उद्वर्तनम्** । क्ली विलेपने । घर्षणे । मे भचतुष्क । तद्गुणा —"उद्वर्तनं वातहरं कफमेदोऽनिलापहम् । स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परं । उद्वर्तनं हरिद्राद्यैः कण्डूवैवर्ण्यरौक्ष्यजित् । तिमिनीद्वर्तनं कण्डूरौक्ष्यत्वग्दोषनाशनम् ॥' राज । "उद्वर्तनं कफहरं मेदसः प्रविलापनम् । स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् । ' वा सू २ अ । "उद्वर्तनं वातहरं भाजकानलदीपनं । गात्रस्थिरत्वसुखितात्वकप्रसादसदुत्वसत् ॥ ' मद व १३ । म र्दने । च द विसूचि. । [याम् ।

**उद्वह** । पु । पुत्रे । उदानवायौ । स्त्री । कन्या

**उद्दान्त.** । पुं । निमदगजे । त्रि । उद्दमिते । मे तन्त्रिक ।

**उद्दाहनी** । स्त्री । वराटके ।

**उद्दिडाल** । पु । जलविडाले । उद्दिताल इति भाषा । ধেঁড়ে इत्यपि क्वचित् ।

**उद्वृत्त** । त्रि । उत्थिते । [निका । चामुण्डे ।

**उद्वेगम्** । क्ली । गुवाकफले । रा नि व ११ ।

**उधस्** । क्ली । आपीने । गाभीर पालान । हला ।

**उधान(र)म** । क्ली । चुल्याम् । च टी भं ।

**उन्दक** । पु । धवलयावनाल । शादा जनार, मउयाबा । रा नि व १६ ।

**उन्दर** । पुं । मूषिके ।

**उन्दिरमारी** । स्त्री । मूषिकार्थ्या तन्नाम्ना कोङ्कणे प्रसिद्धायां । इन्दुरमारी । गुणा —"मूषकारी तु कटुका नेत्र्या चाखुविषापहा । त्रयदोष नेत्ररोग नाशयादति च स्मृतम् ॥" रा.नि व ४ ।

**उन्दुक.** । पु । शरीरैकदेशे । भा ।

**उन्दुरः** । पु । मूषिके । [वा ।

**उन्दुरु (क)** । पु । मूषिके । वन्यमूषिके । र

**उन्दुरुकर्णी (र्णिका) (र्णी)** । स्त्री । चा खुकर्णीलतायाम् । इन्दुरकाणी । रा नि व.१ । दन्तीभेदे । उन्दुरुकर्णा ह्रवतीति ड ।

**उन्दुरुपर्णी** । स्त्री । आखुकर्णी । रा नि व ३।
**उन्दूवरम्** । क्ली । ताम्रे । श्रा ।
**उन्द्रः** । पु । कूलचरपशुभेदे । उद्बिडाल । सु शा ४म्ब. । See कूलेचर ।
**उन्नम्** । क्ली । सुरते । चि । क्लिन्ने । मे नविक ।
**उन्नाहम्** । क्ली । काञ्जिके । श्रम ।
**उन्मत्तः** । पु । श्वेतधुस्तूरे । श्वेत धुतुरा । धुस्तूरवृक्षे । प सु । र मा, रा नि व १० । मुचकुन्द वृक्षे । त्रि । उन्मादविशिष्टे । मे ।
**उन्मत्तकारिणी** } स्त्री । दुग्धिकायाम् । छि
**उन्मत्ता** } दुधियार ।
**उन्मत्तरसः** । पु । शीताङ्गसन्निपाते रस । र सगन्धकतुल्याश्च धुस्तूरफलजद्रवे । मर्द्दयेद्दिनमेकन्तु तुल्यांशं त्रिकटु क्षिपत् ।" त्रिकटुमिति त्रिकटुचूर्णं प्रत्येक रसतुल्य । र सा स शीताङ्ग सान्निपात ज्व.।
**उन्मनः** । पु । उन्मादवायौ । द्रोणपरिमाणे (१६ श्र) । प म २भ । [२०।
**उन्मनायितम्** । क्ली । उन्मादे । रा नि व
**उन्मन्थकः** । पु । कर्णपालीगतरोगविशेषे । तल्लक्षण—"कर्णं बलाद्वर्द्धयत पाल्यां वायु प्रकुप्यति । कफ संगृह्य कुरुते शोथ सव्यथवेदनम् । उन्मन्थक सकण्डूको विकार कफवातज ॥ मा नि । सु चि २५श ।
**उन्मादः** । पु । (Mania) वायुरोगे । पागल रोग । स च मानसिको व्याधि षड्विधश्च वात पित्तकफसन्निपातद् खविषसेवनाद्भवति । सम्प्राप्ति —मदयन्त्युन्मदा दोषा यस्मादुन्मार्गगामिन । मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तित ॥ एकैकश समस्तश्च दोषैरत्यर्थमूर्च्छितै । मान सेन च दुखेन स पञ्चविध उच्यते ॥ विषा द्भवति षष्ठश्च यथास्व तत्र भेषजं । स चाप्रवृद्धस्त रुणे मदसंज्ञो बिभर्त्ति च ॥ विरुद्धदुष्टाशुचिभोज नानि प्रधर्षणं देवगुरुद्विजानां । उन्मादहेतुर्भय हर्षपूर्व्वो मनोऽभिघातो विषमाश्च चेष्टा ॥ इति तद्धेतुनिदानम् । मा नि । यत्पुन्मान् समुद्दिष्ट प्रलपितसमुद्भव । यथापि न नि मा वातान्मादा नायनं ध्रुवम् ॥ मन्य यदा कस्यचन स्वादनकाल न च निद्रा सुशीताम्बुलेपनानि । गोधूममुद्गारुण शालयश्च धारोष्णदुग्ध शतधौतसर्पि ॥ घृतं नवी नञ्च पुरातनञ्च कूर्म्मामिष धन्वरसा रसाल । पु राणकुष्माण्डफल पटोल ब्राह्मीदल वास्तुकतण्डुली यं ॥ खराश्वमूत्र गगनाम्बु पथ्या सुवर्णचूर्णानि च नारिकेलं । द्राक्षा कपित्थं पनसश्च वैद्यै विधेयमु न्मादगदेषु पथ्यम् ॥ राज । अयस्योन्मादरोगे । स चण यथा—"प्रकोपकारणे श्रीकृ कुपिते मात रिश्वनि । उन्मादो जायतेऽस्य तस्य रूपञ्च कथ्य ते । यातुमिच्छति य स्थिला रज्जु दत्तेव खा दति । खादत्यकस्मादथस पुनरेव न खादति। कदाचिद्बुध्यते सम्यं कदाचिन्न न बुध्यते ।" न द ५६श । उन्मादघ्नी । अ टी. ।

**उन्मादगजाङ्कुश.** । पु । उन्मादाधिकारे रस । अथ महाराष्ट्री भ्रमयष्टि । वामनहाटी। विषमुष्टि । कुचिला । अर्कचक्रिका, तामचक्रि कायां। पाठ —त्रिदिनं कनकद्रावे महाराष्ट्रद्रवे पुन । विषमुष्टिजले सूत समुत्थाप्यार्कचक्रिकां । कृत्वा तयां सगन्धां तां युक्त्या बन्धनमाचरेत् ॥ तत सं कानक बीजमभ्रक गन्धक विषं । मर्द्दयित्वा दिनं सर्व्वं वल्लमात्रं प्रयोजयेत् ॥ । पारा सच्छ परिमाणे लइया धुतुरा, वामनहाटी एवं कु चिलार रसे एक एक दिन ऊर्द्धपातन करि बे । परे ताहार सहित समभाग गन्धक मि शाइया वक्रनार्थ अर्द्धचक्रिकाय राखिया अग्नि पुट दिबे । परे उहार सहित समभाग धु तुराबीज, अभ्र, गन्धक एवं विष दिया एक त्र सले मर्द्दन करिबे । र सा स ।

**उन्मादपर्पटीरसः** । पु । उन्मादाधिकारे रस । अथ पर्पटीरस सव्वपर्पटीवत् । के पापुडार न्याय। "कृष्णधुस्तूरजैर्द्रावैः पञ्चभि स पंटीरस । सम्प्रयोज्य प्रमादघ्नमुन्माद मूलक्ष त्रम् ।" र सा स ।

**उन्मादभञ्जनरसः** । पु । उन्मादाधिकारे। अथ किरात भूनिम्ब । इन्द्रवारुणी गोरक्षकर्कटी। राखालशशा । पाठ —त्रिकटु त्रिफला चैव श्र पिपपलिका तथा । विडङ्ग्च देवदारु किरात कटुकी तथा । कण्टकारी च सर्व्वमिश्रं त्रिवृत मत च । तथा च विषदन्तीम सूतक गन्धक

च। शोभाञ्जनस्य बीजानि त्रिवृता चैन्द्रवारुणी। षड्‌ङ्गं कृष्णमरिचञ्च प्रमाणं समभागिकं। सर्वचूर्णस्य लौहं सलिलेन विमर्दयेत्॥ ...... । र.सा.स.।

**उन्मादभञ्जिनी** । स्त्री। उन्मादाधिकारे रसविशेषे। अत्र कटुरोहिणी कटुकी। गिरिमल्लीबीज कुटजबीजं। पाठ.—"शुद्ध मन:शिलाचूर्णं सैन्धवं कटुरोहिणी। वचा शिरीषबीजञ्च हिङ्गु च श्वेतसर्षपः। करञ्जबीजं त्रिकटु मलं पारावतस्य च। एतानि समभागानि गोमूत्रैर्वटिका कुरु। गिरिमल्लीबीजसमां छायायुष्काञ्च कारयेत्। प्रातःसन्ध्यानिशाकाले चक्षुषीरञ्जनं हितम्। मधुरादिरसैश्चाद्यं रात्रावपि जलेन च॥" ...... । र.सा.स.।

**उन्मादाङ्कुशरसः** । पुं। उन्मादे रस.। पाठ:—त्रिदिनं कनकद्रावैर्महाराष्ट्रीरसैः पुनः। विषमुष्टिद्रवैः सूतं समुत्थाप्यार्कचक्रिकां। कृत्वा तया सगन्धालां युक्त्या बन्धनमाचरेत्। तत्समं कानकबीजभस्मकं गन्धकं विषं। मर्दयेत्रिदिनं सर्व्वं वल्लमात्रं प्रयोजयेत्। कनक धुस्तूरबीजं। महाराष्ट्री जलपिप्पली भार्गी वा। विषमुष्टिः कुचेलकं। एभिरूर्द्ध्वपातनं कार्य्यं। पारदादिकं समभागं ग्राह्यम्। उन्मादगजाङ्कुश इति नामान्तरम्। भैष.रसे चि।

**उन्मादिनी** । विजयायाम्। सिद्धि।

**उन्मानम्** । क्ली। द्रव्यतौलकपरिमाणे। पु। द्रोणपरिमाणे। प.प्र १ख.।

**उन्मार्गी** । पुं। पञ्चविधभगन्दरान्तर्गतभगन्दररोगविशेषे। अर्शभगन्दर। तस्य लक्षणम्—"मूढेन मांसलुब्धेन यदस्थिसत्वमन्ने सहाभ्यवहृतं यदावगाढपुरीषोन्मिश्रमपानेनाधःप्रेरितं असम्यगागतं गुदं क्षिणोति, तदा चतमिमित्तः क्लोथ उपजायते। तस्मिंश्च चते पूयरुधिरावकीर्णमांसक्लोथं भूमाविव जलप्रक्लिन्नायां क्रिमयः सञ्जायन्ते। ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति,तस्य तैर्मार्गैः क्रमिकृतैः वातमूत्रपुरीषरेतांसि चतिभिःसरन्ति तं भगन्दरं उन्मार्गिणमित्याचक्षते।" सु. नि ४थ.।

**उन्मीलनम्** । क्ली। उन्मेषे। हे.च.।

**उन्मेषः** । पुं। नेत्रोन्मीलने। हे च.।

**उपकण्ठम्** । क्ली। चक्रव्यास्कन्दिते। कण्ठसमीपे। हे.च.।

**उपकरणम्** । क्ली। उपादाने।

**उपकर्णिका** । स्त्री। मूषकर्णिकायाम्। वै. निघ.२भ.अर्श चि विडङ्गादिचूर्णलेहे।

**उपकारिका** । स्त्री। पिष्टकभेदे। मे कपचर्क।

**उपकालिका** । स्त्री। जीरकभेदे। श्वेतजीरके। कलौञ्जीजीरके। मद.व.२। कृष्णजीरके। भा.पू.१भ.। पिप्पल्याम्।

**उपकुञ्चः (कः)** । पुं। कृष्णजीरके। वै.निघ.।

**उपकुञ्चिः (का) (ची)** । स्त्री। कलौञ्जीजीरके। बृहज्जीरके। सूक्ष्मैलायाम्। अम.। कृष्णजीरके। स्वल्पजीरके। छोटि जीरा। भा.पू.१भ.रवा.। गुणाः—"तिक्ता कट्वी चोष्णा च दीपनी। रुच्या चाजीर्णशमनी गर्भाशयविशोधिनी। आध्मानवातगुल्मघ्नं रक्तपित्तं कृमींस्तथा। कफ पित्तं धामदोष वात शूलञ्च नाशयेत्॥" वै निघ.।

**उपकुम्भा** । स्त्री। दन्तीवृक्षे। वै निघ.।

**उपकुल्या (का)** । स्त्री। पिप्पल्याम्। प. मु.,रा.नि व.६। च द.अश्म.चि.एलादौ।

**उपकुशः** । पुं। Gum-boil. संज्ञामकदन्तवेष्टजपित्तरक्तजरोगविशेषे। तत्र वेष्टदाहपाकदन्तचलन चाघट्टिते रक्तस्रावेदने, स्रुते च रक्ते स्फीतिर्मुखपूतिता च जायते। लक्षणं—"वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च। आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनं। आध्मायन्ते स्रुते रक्ते मुखं पूतिः च जायते। भा.म.४भ.मु रो.चि.। चलनच भवति। अ.द।

**उपकूपः** । पुं। दीर्घिकायाम्। हे.च.।

**उपकोलिका** । स्त्री। कृष्णजीरके। भा.।

**उपक्रमः** । पुं। चिकित्सायाम्। रा.नि.व.२०। आरम्भे। मे.मचतुष्कं।

**उपक्रोष्टा** । पुं, स्त्री। गर्दभे।

**उपघातः** । पुं। रोगे। रा.नि.व.२०।

**उपघातकः** । पुं। आरग्वधवृक्षे। वै.निघ.।

**उपघ्नः** । पुं। निकटाश्रये। अम।

**उपचक्रः** । पुं। हंसविशेषे। चटकाङ्ग। "चक्रो

रातुपवककाम् ।" च वि ३च । गुणा—"कषाय स्वादुलवणत्वय केश्यो रुचिप्रद ।" सु सू ४६च । इग लवु उत्तरीर्य्ये कटुपाकि बलाग्निवर्द्धकच । राज । See चक्रवाक । [रा नि.व.२०। इला. ।

**उपचर्य्या** । स्त्री । चिकित्सायाम् । सेवायाम् ।

**उपचक्षुः** । क्ली । चक्षु प्रतिनिधौ । चशमा इति भाषा । [नि व.२० । हे च. ।

**उपचारः** । पु । चिकित्सायां । सेवायाम् । रा.

**उपचार्य्यः** । पु । चिकित्सायाम् । हे.च ।

**उपचितः** । त्रि । दग्धे । मे ।

**उपचित्र (त्रा)** । पु, स्त्री । उपचित्र इति म द व १। पृश्निपर्णीद्वये । চাকুলিয়া । रा नि व ४ । दन्तीद्वये । प सु । र.मा । आखुकर्णाम् । ইন্দুর কাণী পানা । मे. । वृहद्दन्त्या । भा पू १भ. । वै निघ.वा व्या विषगर्भतैले ।

**उपचित्रका** । स्त्री । क्षुद्रदन्त्याम् ।

**उपचिल्ली** । स्त्री । श्वेतचिल्लीशाके । শ্বেত চিল্লী (বেতোশাক) । रा.नि.व ७ ।

**उपजिह्वा (ह्विका)** । स्त्री । जिह्वागतमुख रोगे । दुष्टकफरक्ते जिह्वामुन्नमय्य निम्नतो लाला स्रावकण्डूदाहशोथानुत्पादयत । मा नि । लक्षणम् —"जिह्वाग्ररूद श्वयथुर्हि जिह्वामुन्नम्यजात कफ रक्तयोनि । प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसा बुपजिह्विकेति॥' सु नि १६च । कीटविशेषे । পে দো পোকা । हे च । मूलजिह्वायाम् । আল জিব । रा नि व १८ । अश्वस्य मुखरोगभेदे । अत्र जिह्वाध स्फीति । लक्षणम्—"अधस्तादथ जिह्वाया श्वयथुर्य्यस्य जायते। तं विन्द्यादुपजिह्वाख्य मुखरोगन्तु वाजिनाम् ॥" ज द २९च. ।

**उपतप्ता** । पु । रोगे । च टी भ ।

**'उपतापः** । पु । रोगे । सन्तापे । मे.पवतुर्ष्क ।

**उपदग्धः** । त्रि । ईषद्दग्धे। আঁকা। सु.सू.४६च ।

**उपदन्तः** । पु । कुम्भुरी । দাঁত ধনে ।

**उपदंशः** । पु । The venereal disease समष्ठीलक्षपे । रा नि व ४ । शिग्रौ वृक्षे । সজিনা গাছ । रा नि व ७ । चवने । চাটু । इला. । सि यो,मदा.वि.। "सर्व्वो सभक्तो पिशितोपदंशाम् ।" व्यञ्जने । रा.नि व २० । मेढ्ररोगे । বাও রোগ । निदानादि—"हस्ताभिघातान्नखदन्तपातादधाव-नादत्युपसेवनाद्वा । योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधोपचारे ॥" स च वातादिभेदा त्पञ्चधा । तल्लक्षण—"सतोदभेदे स्फुरणे सकृष्णे स्फोटैर्व्यवस्येत्पवनोपदंश । पीतैर्बहुक्लेदयुते सदाहे पित्तेन रक्तोपिमितावभासे । स्फोटै सकृष्णे रुधिर स्रवन्त रक्तात्मक पित्तसमानलिङ्ग । सकण्डुरे शो थयुतैर्महद्भि शुक्लैर्घनै स्रावयुतै कफेन । नानावि धस्रावरुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम् ॥" मा. नि । "अतिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचा रिणीं चिरोत्सृष्टा रजस्वला दीर्घरोमा कर्कशरो-मां सङ्कीर्णरोमा निगूढरोमामल्पद्वारां महाद्वारामु-प्रियामकामां अचौत्यसलिलप्रक्षालितयोनिमप्रक्षा-लितयोनि योनिरोगोपसृष्टां स्वभावतो वा दुष्ट योनि वियोनि वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषयुक्तनिपातनादर्द्दनाद्धस्ताभिघाताद् चतुष्पदीगमनादचौत्यसलिलप्रक्षालनादवपीडनाच्छु क्रमूत्रवेगविधारणान्मैथुनान्ते चाप्रक्षालनादिभिर्मे ढ्रमार्गस्य प्रकुपिता दोषा क्षतेऽक्षते वा श्वयथु मुपजनयन्ति तमुपदंशमाचक्षते ।" सु नि ११ । विशीर्णमांसं क्रिमिभि प्रजग्ध मुष्कावशेष परिव र्ज्जयेत्तम् । असाध्यलक्षणम्। पथ्य यथा— छर्द्दिर्विरेकौ भुजमध्यनाडीवेधौ जलौका परि पातनञ्च । सेक प्रलेपौ यवशालयश्च धन्वामिष मुद्गरसौ घृतानि । कठिल्लक शिग्रुफलं पटोलं शा लिञ्चशाक वनमूलकञ्च । तिक्त कषाय मधु कूप वारि तैलञ्च इत्यादुपदंशरोगम्" इति । अपथ्य यथा—"दिवानिद्रां मूत्रवेग गुर्व्वन्न मैथुन गुडम् । आयासमम्ल तक्रञ्च वर्ज्जयेदुपदंशवान् ॥" पथ्या-पथ्यम् ।

**उपदंशघ्नः** । पु । शिग्रुवृक्षे । वै निघ. ।

**उपदलम्** । क्ली । पुष्पदले । ফুলের পাপড়ি ।

**उपदी** । स्त्री । वन्दाके । মান্দড়া । म वार्ता गल । रा नि व.५ ।

**उपदीका** । स्त्री । उपजिह्वाख्यकीटे । हे च. ।

**उपदेवता** । स्त्री । यक्षभूतपिशाचादौ ।

**उपदेशः** । पु । मुस्तके । हे च. । स्थितकथने । एवमित्युपदेश यथा—"तथा न आम्बवादार्थी

ष्टुणयुता । भा पू १भ धातुव । यथा —"खेचरा भ्रनकड्कुष्ठगन्धाल्म गैरिक शिलि । शैलेयाञ्जन समिश्रा सप्तल्युपरसा बुधा ॥ कम्पिल्लगौरी चपलाकपर्दंसशैलसिन्दूरकवङ्गिजारान् । पाषाणि नीवादरयुङ्युक्तानित्यष्टकं सूतसमानमाहु ॥ रा. नि व.२२ । गन्धक वज्रवैक्रान्त हीरक दग्धहीर कश्च) वज्राभ तालक शिला । खर्पर शिखितुण्डश्च विमल हेममाक्षिकम् । काशीश कान्तपाषाण व राटाञ्जनहिङ्गुलम् ॥ गैरिक शङ्खभूनाग टङ्कणश्च शिलाजतु । एते चोपरसा प्रोक्ता । र.सा स।

**उपरोधकम्** । क्ली । गर्भंगृहे । श च ।

**उपलः** । पु । पाषाणे । रत्ना. । मे. ।

**उपलभित्** । पु । पाषाणभेदके । रा.नि.व ५ ।

**उपलभेदः (दी)** । पु । करञ्जोडिपाषाणभेदके । रा नि.व.५ ।

**उपलवीरुत्** । स्त्री । गुन्द्रिन्याम् । हे.च ।

**उपला** । स्त्री । शर्करायां । वालुकायाम् । मे ।

**उपलाख्यकः** । पु । दद्रुघ्नवृक्षे । दादमर्दनी ।

**उपलालिका** । स्त्री । तृष्णायाम् । वै.निघ. ।

**उपलासिता** । स्त्री। खटीशर्करायां। वै निघ।

**उपलिङ्गम्** । क्ली । उपद्रवे । अरिष्टे । हे च. ।

**उपलेपः** । पु । चन्दनादिलेपने । मुखलिप्ततायाम् । सु चि.२२ष. ।

**उपलेपनम्** । क्ली । गोमयादिलेपने । त्रिका ।

**उपलोहम्** । क्ली । स्वर्णादिधातुविशेषेषु । यथा —" स्वर्णं तार ताम्रनाग रस कान्तञ्च तीक्ष्णक । मुण्डालमष्टधा लोह कास्यार घोषक तथा । उपलोहा समाख्याता ॥ वै.मयदे ।

**उपवटः** । पु । पियालवृक्षे । चारवृक्षे । रा.नि. व ११ । See चखर ।

**उपवनम्** । क्ली । वहिरुद्याने । अम ।

**उपवनस्थः** । पु । शुकवृक्षे ।

**उपवल्लिका (ल्ली)** । स्त्री । अमृतस्रवालतायाम् । रा नि व.३ । (निश, छाकिडा । हला. ।

**उपवर्हः (र्हम्)** । पु, क्ली । उपधाने । वा

**उपवस्तम्** । क्ली । उपवासे । अम. ।

**उपवासः** । पु । लङ्घने । क्रोधादिपरित्यागे । "उपावृत्तस्य पापेभ्य सहवासो गुणै हि य । उपवास स विज्ञेयो न शरीरस्य शोषण ॥" च.सू १४ ।

**उपवाह्यः** । पु । राजवाहकहस्तिनि । हे.च ।

**उपविषम्** । क्ली। कृत्रिमविषे । हे च । गौण विषमिति । भा । तच्च अष्टविध ।

**उपविषपञ्चकम्** । क्ली । स्नुह्यर्ककरवीरलाङ्गलिकुचेलकेषु । रा नि व १२ । करवीरार्कधुस्तूर लाङ्गलीगुञ्जाहिफेन वज्रश्च । प सु. । अर्कक्षीर स्नुही क्षीर लाङ्गली करवीरक । गुञ्जाहिफेनधुस्तूरश्चेति सप्त । भा । दुग्धपूर्णपात्रे दोलायन्त्रेण तत्सर्वं शोधित भवात । र सा सं. । [षायाम् । रा.नि.व ६ ।

**उपविषा** । स्त्री । रक्तातिविषायाम् । अतिवि

**उपविषाणिका** । स्त्री । कृष्णातिविषायाम् । मद.व १ ।

**उपविष्टकः** । पु । गर्भजरोगे ।

**उपवीतम्** । क्ली । यज्ञसूत्रे । अम. ।

**उपवेदः** । पु । आयुर्वेदे ।

**उपवेशः** । पु । उपवेशने ।

**उपवेशनम्** । क्ली । स्थितौ । दर्श । गुणा — मेदोदोषश्रमशौकुमार्यमुखकरम् । राज. ।

**उपव्याघ्रः** । पु । चित्रके । চিতে বাঘ । रा. नि व १९ ।

**उपशमः** । पु । शान्तौ । हे च ।

**उपशमक्रमः** । पु । साधारणौषधे । वै निघ. ।

**उपशयः** । पु । व्याधिज्ञानहेतौ । लक्षणं — "हेतुव्याधिविपर्यस्त विपर्यस्तार्थकारिणाम् । औषधान्नविहाराणामुपयोग सुखावहं । विद्यादुपशय व्याधे स हि सात्म्यमिति स्मृत ॥" मा नि. ।

**उपशान्तिः** । स्त्री । आरोग्ये ।

**उपशायिता** । स्त्री । रोगमुक्तिसाधनभूतपथ्ये

**उपशीर्षकः** । पु । बालरोगे । कपालरोगे ।

**उपसन्नवर्त्तनम्** । क्ली । दृष्टमवस्थिते । चर्

**उपसम्पन्नम्** । क्ली । त्रती । हला. । त्रि । निहते । सुसंस्कृते । "उपसम्पन्नमुद्दिष्ट निहते च सुसंस्कृते ।" मेदिनी नपञ्चक ।

**उपसव्यानम्** । क्ली । परिधानवस्त्रे । अम ।

**उपसत्तिः** । स्त्री सेवायाम् । मे तचतुष्कं ।

**उपसरः** । पु । प्रथमगर्भधारणे [मे गचतुष्क ।

**उपसर्गः** । पु। पिशाचादिबाधायां । मिश्ररोगे।

**उपसर्य्या** । स्त्री । वर्षप्रसविन्यां गवि । वछर विउनी गाभी । हला ।

**उपसृष्टम्** । क्ली । मैथुने । त्रिका ।

**उपसेकः** । पु । व्यञ्जने । येनौदन भुज्यते । वा ।

**उपस्करः** । पु । वेसवारे । दाड़िमां । हला ।

**उपस्थः** । पु । शिश्ने । योनौ । रा नि व १८ । मलद्वारे । श र. । क्रोडे । मे ।

**उपस्थपत्रम्** । क्ली। अश्वत्थपत्रके । "पित्तश्लेष्मणि प्रसन्ने सूपे वा लेपेषु चेत ।" चर ।

**उपस्थाता** । पु । परिचारके । रत्ना ।

**उपस्नेहः** । पु । उपलेपे । स्नेहयुक्ततायां । स्नेह युक्तान्नरसे । सु.नि ६,७अ. ।

**उपस्पर्शः** । पु । स्नाने । आचमने । मे शचतुष्क।

**उपाङ्गः** । पु । तिलके । जटा. ।

**उपाङ्गचिकित्सा** । स्त्री । छिन्नादिप्रतीकारे। यथा—"छिन्न भिन्न तथा भग्न च्युत पिच्चितमेव च । तेषां दृष्टप्रतीकार प्रोक्तश्चोपाङ्गसञ्चक ।" वै निघ. । अचि.१स्था,२अ ।

**उपाञ्जनम्** । क्ली । अनुलेपने ।

**उपात्तः** । पु । अमदगजे । हला ।

**उपाधानम्** । क्ली । उपधाने । बालिश ।

**उपानद्धारणम्** । क्ली । चर्म्मादिपादुकाधारणे । जूतो परा । गुणा —"उपानद्धारण नेत्र्यमायुष्य पादरोगहृत् । सुखप्रचारमोजस्य वृष्यञ्च परिकीर्त्तितम्। पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणां । अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिदम् ।" वै निघ. ।

**उपाश्रयः** । पु । मत्तहस्तिनि । हला. ।

**उपासः** । पु । उपवासे । [नै । मे.]

**उपासनम्** । क्ली । शुश्रूषायाम् । अम । भाव

**उपासना** । स्त्री । सेवायां । अम. ।

**उपास्तिः** । स्त्री । सेवायां । हे.च. । [अम. ।

**उपास्थि** । क्ली । कोमलास्थिनि। कचि हाड ।

**उपेक्षा** । स्त्री । त्यागे । अनादरे ।

**उपोती (दका) (दकी)** । स्त्री । A pot herb. (Basella rubra or lucida) पूतीकायाम् । बड पुँइ शाक । मं राजगिरा, माडवी, रुदवेलि, मयाला खण्डपालक्येति च ख्याता । गुणा —गुर्व्वी सरा मदघ्नी च । वा.सू. ६अ । कषायोष्णा कटुका मधुरा निद्रालस्यकरी रूच्या विष्टम्भश्लेष्मकरी च । रा नि व ७ । स्वादु पाकरसा वृष्या वातपित्तमदापहा । उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥ सु सू. ४५अ.। उपोदकी भिधा सामान्या क्षुद्रपत्रा वनजा चेति । द्वितीया रसवीर्य्यविपाकेषु पूर्व्वसमा । तृतीया तिक्ता कटूष्णा रोचनी च । रा नि.व.७ । "सारकत्व स्निग्धत्व बल्यत्व श्लेष्मकरत्व हिमत्वञ्च।" राज ।

**उपोदि(दी)का** । स्त्री । उपोदक्याम् । बड पुँइ । पुदिनेति च ख्याता । च.सू.२अ. । See उपोदकी ।

**उपोदिकातैलम्** । क्ली । क्षुद्ररोगे हितं । उपोदकीनां चार २ श वारि १६ श एकविंशतिवार विस्राव्य चारोदकं कार्य्यम् । तैलं ४ श. लवण १ श. एकत्र पाच्यम् । च द.क्षुद्ररो चि. ।

**उपोषः** । पु । उपवासे ।

**उपोषणम्** । क्ली । उपवासे ।

**उप्यम्** । क्ली । वपनबीजे । रा नि.व.२।

**उप्तः** । त्रि । कृतवपने । [भा ]

**उभयकण्टका** । स्त्री । बदरभेदे। दुनगाछ।

**उभयभागहरम्** । क्ली । ऊर्द्ध्वाधोभागहरौषधे । वामक ও রেচক ঔষধ । सु सू ४१अ. ।

**उभयलिङ्गिनी** । स्त्री । लिङ्गिन्याम् । पञ्चगुञ्जियेति लोके प्रसिद्धा । चि.क.क वन्ध्या चि ।

**उमा** । स्त्री । अतस्याम् । अश्विनी । रा.नि.व.
१६ । हरिद्रायाम् । काली । मैं मधिक ।

**उमाकटः** । पुं । उमाधूली । अश्विनाव धूलि ।

**उम्मा(म्मिका)(शालिः)** । स्त्री । शालिधा-
न्यविशेषे । गुणा — मधुरा स्निग्धा सुगन्धा कषाया
पित्तश्लेष्मघ्नी रुचा वातघ्नी च । रा नि.व.१६ ।

**उम्बरः** । पुं । उदुम्बरवृक्षे । यज्ञडुमूर गाछ ।
हि.च. । गुणा —स्निग्धः स्वादादिगुणयुक्त. उष्ण
वीर्य्य. कफपित्तकरो गुरुश्च । वा. ।

**उम्बिका (म्बी)** । स्त्री । यमान्याम् । अर्द्ध
पक्वयवानलसम्भृष्टयवगोधूमसङ्ग्र्याम् । गुणा.—
"कफकरत्व बलकरत्वं लघुत्व पित्तानिलापहारि-
त्वञ्च ।" भा. ।

**उम्यम्** । क्ली । Field of linseed, (Linum utila tissimum.) अतसीक्षेत्रे । हरि
द्राक्षेत्रे । भ.हिरूपाचरकोपय ।

**उरः** । क्ली । वक्षसि । अम. ।

**उरःक्षतम्** । क्ली । उरःक्षते । क्षयरोगे ।

**उरःक्षतकासः** । पुं । क्षयकासरोगे । हृदये
क्षत कास । "अतिव्यवायभाराध्वयुद्धाश्वगजनिग्र
हैः । रुक्षस्योर.क्षतं वायुर्गृहीत्वा कासमावहेत् ॥"
निदानम् ।

**उरगः (ङ्गः) (ङ्गमः)** । पु । सर्पे । क्ली । शी-
सके । मद.व १४ । रस र.इ.चि.एकादशायसे ।
नागकेशरवृक्षे ।

**उरगगन्धम्** । क्ली । सर्पगन्धे ।

**उरगारिः** । पुं । क्रौञ्चपक्षिणि ।

**उरगाशनः** । पुं । गरुडे । जटा. ।

**उरगेन्द्रसुमनः** । क्ली । नागकेशरे । भा.म ४
अ । "व्योषाम्बीददलोरगेन्द्रसुमनः ।"

**उरच्छदः** । पुं । गुन्द्रे । गोंदपटेर इति पाश्चात्य-
भाषा । भा.पू.१भ. ।

**उरणः** । पुं । मेषे । अम. । क्ली । रौप्ये ।

**उरणा** । स्त्री । मेष्याम् । भेड़ी ।

**उरणाख्यः(क्षः)कः** । पुं । दद्रुघ्नवृक्षे । दाद
मर्दन । हि एडाचि । चाकन्दा गाछ इति च
केचित् । अ.टी स्वा. । श.र. । चारमध्यवृक्षे ।

**उरभ्रः** । पुं । मेषपशौ । प.मु. ।

**उरभ्रमारिका** । स्त्री । वातप्रकृतिकीटविशे
षे । तद्दष्टे वायुजरोगा भवन्ति । सु कल्प ८ अ ।

**उरसिजः** । पुं । स्तने । रा नि.व.१८ ।

**उराहः** । पु । कृष्णजान्वीषत्पाण्डुवर्णाश्वे । लक्षणं
—"उराह. कृष्णजानुस्तु मनाक्पाण्डुस्तु यो भवे-
त् ।" ज द.३अ ।

**उरीहा** । स्त्री । कारवेल्लके । करला, उच्छे ।

**उरुकालः (कः)** । पुं । महाकाललतायाम् ।
माकालफलेर गाछ । त्रिका. ।

**उरुमालः** । पुं । फलशाकविशेषे । मायीफल
इति पाश्चात्यभाषा । फलगुणाः—"उरुमालं हि
यालञ्च वृक्षस्य गुरुशीतलं । स्वादुपाकरसं विर्ष
विष्टम्भि कफशुक्रकृत् ॥" वा ।

**उरुबुकः** } पु । श्वेतैरण्डे । एरण्डवृक्षे । अम ।
**उरुवूकः** } र.सा स. । उरुरबड़ी । रक्तैरण्डे ।
**उरूवुकः** } रा नि.व.८ ।

**उरुस्तम्भा** । स्त्री । कदलीवृक्षे ।

**उरोग्रहः** । पुं । हृदयरोगविशेषे । अग्रमास
इति भाषा । लक्षण यथा—"अत्यभिष्यन्दिगुर्वन्न
शुष्कपूत्यामिषाशनात् । साल्वं मांसं यकृत्प्लीहा
मध्ये वृद्धिर्यदा भवेत् । उरोग्रहं तदा कुर्य्या कुष
त. कफमारुतौ ॥ न वामपार्श्वे न च दक्षिणाङ्गे
वृक्कस्य मध्ये परिविद्धिमिति । उरोग्रहं तं प्रवदन्ति
रोग वृक्कायतक्षस्य शिरातलं । दौर्बल्य दुर्बला
ग्नि च कार्श्यं मांसाभिकाङ्क्षितम् । जायते ज्वरवर्ण
ल पीतकश्चापि जायते । हिक्कीहृदयं कठिन्
कठिनकच्छपसन्निभः । अरोचकं पिपासा च
मीयन्नातिप्रकोपने ॥" नि. । हृदयवेदनायां ।

**उरोजः** । पुं । स्तने । हे.च. ।

**उरोघातः** । पुं । हृद्रोगे । च द ।

**उर्णनाभः** । पु । See ऊर्णनाभ. ।

**उर्णा** । स्त्री । See ऊर्णा ।

**उर्णायुः** । पु । See ऊर्णायुः ।

**उर्द्रः** । पुं । जलविडाले । उद्बिडाल । श.र. ।

**उर्म्मिकः** । पु । समुद्रफेने ।

**उर्व्वा** । स्त्री । औषधे ।

**उर्व्वाकः** । पुं । इर्व्वारुके । कांकुड । भरतादि रूपकोषश । भा म १भ भग्न चि वरुणगुडे ।

**उर्व्वी** । स्त्री । तन्नामकमर्म्मस्थाने । तच स्थान मूरुमध्यदेश । सु शा ६ष. । वैकल्यकारमर्म्मान्य तममर्म्मद्वये । सु शा ५ष. ।

**उल(लु)पः** । पुं । प्रतानवत्या लतायां । सा तु त्रपुषीद्राक्षातान्बुलीप्रभृति । भ टी सा. । क्ली । तृणविशेषे । उलूखड । विश्व । मे. ।

**उलु(लू)पी** । पु । शिशुके । शुशोक । भम । तदाकारमीने । श र । उपल इति ख्यातं मत्स्ये । शिशुमाराकृतिमत्स्यभेदे,स कालिङ्गादिदेशेषु दृश्यते। शोश इति ख्यातमत्स्ये । भोगल इति च केचित् । शिशुमार इति सर्व्वस्वे । "चुलप शिशुमार स्यात् उलुपी शिशुकस्तथा ।" भ टी.भ. ।

**उलुम्बा** । स्त्री । यमान्याम् । वै निघ ।

**उलूकः** । पु । पेचके । पेंचा । मे कर्णिक । प सु. । ८ मा । तन्मांस—'उलूकजन्तु यन्मांस पित्तल भ्रान्तिकारक । वातप्रकोपनञ्चैव ।" वै निघ. । क्ली । तृणमल्लातद्वये । उलूखड ।

**उलूकपादः** । पु । भ्रमस्य पादरोगविशेषे । अथर्व—"कूर्चमाहत्य य शोषो अज्ञामयपमायते। उलूकपादी विशेष ।" अ.द २१ष ।

**उलूखल(क)म्** । क्ली । उदूखले । भर । गुग्गुलौ । भम । [शिषु । सु शा ५ष ।

**उलूखलसन्धिः** । पु । कक्षावङ्क्षणदशनस

**उल्कामुखी** । स्त्री । शृगालीविशेषे । हारा ।

**उल्मुकम्** । क्ली । ज्वलदङ्गारे । हारा. ।

**उल्लस (नकम्)** । पु क्ली । रोमाञ्चे । हे च.।

**उल्लाघः** । पु । रोगमुक्ते। रा नि व.२० । म रिचे ।

**उल्ली** । स्त्री । पलाण्डौ । रा नि व ७ ।

**उल्लुमम्** । त्रि । निरम्बर चर्मनातिशयेनानुम [चिमलात् निष्टमिवोल्लुमपिष्टम् । सु उ ६१ष ।

**उल्लेखनम्** । क्ली । वमने । द.मा. ।

**उल्लोचः** । पु । चन्द्रातपे । हारा. । [शा १०ष ।

**उल्वम्** । क्ली । जरायौ । भम. । कलले । सु.

**उल्वणम्** । क्ली । वातादिजव्यविकारे ।

**उशिक्** । पु । हुते ।

**उशीर: (क)** । पु क्ली । The root of a fragrant grass (Andropogon muricatum.) स्वनामख्यातसुगन्धतृणमूले । वीरण मूले । खस् वा खामज्जक इति पाश्चात्ये । गन्ध-वेणार मूल । म वाला । ते वट्टिवेलु । अस्य गुणा —शीतल तिक्त दाहहर वमघ्न पित्तज्वरघ्न जलशोषगन्धकरच । रा.नि व १२ । उशीरं स्वेद दौर्गन्ध्य दाहपित्तास्ररोगजित् । राज । पाचन शीतल स्तम्भन तिक्तं मधुर ज्वरघ्न वान्तिघ्न उन्म त्ताहर कफपित्तहृष्णाघ्न रक्तघ्न विषघ्न वीसर्प-दाहमूत्रकृच्छ्रव्रणघ्नच । भा पू १भ । मद.व.३ । वा लके । वाला । सुश्रुताद्यष्टाङ्गे ।

**उशीरादिः** । पु। तृतीयकज्वरे कषाय । "उ शीर चन्दन मुस्त गुडूचीधान्यनागरं । अम्भसा क थित पेय शर्करामधुयोजित ॥ भैष जीर्णज्व चि । द्वितीय ज्वरातीसारे । तत्र. द्रव्याणि—उशीर बालक मुस्त धन्याकं शुण्ठी वराहक्रान्ता धातकी रोध्र विल्वपेशी च । सा क्री ।

**उशीरी** । स्त्री । चन्द्रकान्तद्वये । छोट केशे। गुणा —मधुरशीता पित्तदाहक्षयघ्नीचा।रा नि.व ८।

**उष.** । पु । गुग्गुलौ । रात्रिशेषे । मे वर्णिक । क्षारमृत्तिकायाम् । श.र. । क्ली । पांशुजलवणे । पाडा कुला लवण । प सु ।

**उषकः** । पु । टङ्कणक्षारे । सोहागा । रवा । मत्तिकालवण । प सु ।

**उषणम्** । क्ली । शुण्ठ्याम् । मरिचे । रवा । भा. पू १भ । उदकमध्वरी । भ द भ मा चि । "त्रिली षणादि ।" सि यो अग्निमा चि मह शुक्रस्थाने । पिप्पलीमूले। रा नि व ६।"वचोषणकणा समा।" त्रिकटुके । वै नि घ २भ.ज्व.चि सैन्धवाद्यघ्ने ।

**उषणा** । स्त्री । पिप्पल्याम् । कणायामुषणा लियाम् । मे वर्णिक । गुग्गुल्याम् । चविकायाम् । र मा । गजपिप्पलीमूले । भम. । भा पू १भ. । कटुकके । मरिचे । मानिमान्द्य,, चवकाद्युदरघ्ने ।

गजपिप्पल्याम्। वै.निघ.२भ.जिह्वकसन्निपा ज्व. षि। [रत्ना।

**उपरा।** स्त्री। चारसत्तिकायाम्। कातिमाटी।

**उपर्बुधः।** पुं। रक्तचित्रके। वांःचित्र। श.च.।

**उपस्।** क्ली, स्त्री। प्रत्यूषे। मे सविक।

**उपा।** स्त्री। गवि। गाई। है.च.।

**उपाकलः।** पु। कुक्कुटे। त्रिका.।

**उपाचारः।** पु। टङ्कणे। सोहागा। चार मत्तिकायाम्। रत्ना।

**उषितः।** त्रि। दग्धे। व्युषिते। मे.तत्रिकं।

**उषीरः।** पु, क्ली। वीरणमूले। खटीरा। च.द.र.पि.चि दूर्वाद्यतैले।

**उष्ट्रः।** पु। खनामख्यातपशुविशेषे। ऊँट। हि ऊँट। तन्मांसगुणा —त्रिदोषशमन बलपुष्टिप्रद रुच्य मधुर वीर्यवर्द्धनश्च। रा नि व १७। शीतलत्व लघुत्व त्रिदोषहरत्व पुष्टिकरत्व रुच्य वीर्यवर्द्धन त्वञ्च। रा नि.व.१५। कटु शीथक्रमिविषहर दीपन वातकफघ्न कुष्ठगुल्मोदरघ्नञ्च। भा पू.१भ।

**उष्ट्रकण्टकः।** पु। सकण्टकगुल्मविशेषे। ठो कुवकाँटा। च द। गोत्तुरे। भैष मसूवा चि.'उष्ट्र कण्टकमूलं।"

**उष्ट्रकाण्डिका (गडी)।** स्त्री। पुष्पवृक्षवि शेषे। ऊँटाटी इति भाषा। म उटकटारा, उ टांटी। गुणा —तिक्ता उष्णा रुच्या हृद्रोगहरी। तद्वीजं मधुर शीत हृद्यं सन्तर्पणञ्च। रा नि व.१०।

**उष्ट्रग्रीवः।** पु,क्ली। पित्तजन्यभगन्दररोगभेदे। 'पित्तन्तु प्रकुपितं चानिलेनाथ प्रपन्न पूर्व्ववदवस्थित रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जन यति। सास्य कष्ट्वादीन् वेदनाविशेषान् जनयति। अप्रतिक्रियमाणा च पाकमुपैति। व्रणय कठिन संरम्भी कण्डूप्राय पिच्छिलमत्यगमास्राव स्रवति। उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति। स भगन्दरं परिस्राविणमित्याचक्षते।" सु.नि ४थ। प्रकोपणे पित्तमतिप्रकोपित करोति रक्तां पिडकां गुदायताम्। तदाशुपाकां हिमपूतिवाहिनीं भगन्दरं तूष्ट्रशिरोधरं वदेत्" जि।

**उष्ट्रधूसरपुच्छिका।** स्त्री। हरिकान्याम्। विछाउ। र.मा.।

**उष्ट्रपादिका।** स्त्री। मदनमालत्याम्। मदन मानी, हापरमाली च इति लोके। र.मा.।

**उष्ट्रप्रमाणः।** पु। काश्मीरदेशीयधर्मे। मद व १२।

**उष्ट्रप्रियः।** पु। मरुभूमिजातकण्टकवृक्षविशेषे। टाकुवकाँटा गाछ। हि करील, टाउर। गुणा करीरशब्दे द्रष्टव्या। भा पू.१भ। [नि व ४।

**उष्ट्रभक्षिका।** स्त्री। चुद्रदुरालभायां। रा.

**उष्ट्रभक्ष्यः।** पुं। वंशकरीरे। बाँशेर कोँड़। पमु।

**उष्ट्रमूत्रम्।** क्ली। उष्ट्रस्य मूत्रे। गुणा कटु तिक्तोष्ण लवण पित्तकोपन बल्यम् उदररोगघ्न वातदोषघ्नञ्च। रा.नि व.१५।

**उष्ट्रशिरोधरम्।** क्ली। उष्ट्रग्रीवभगन्दरे।

**उष्ट्रिका (ष्ट्री)।** स्त्री। उष्ट्रिकालिङ्गुपे। वि छाति। रा नि.व.८। मृद्भाण्डविशेषे। झारा। धष्ट्रभार्य्यायाम्। ऊँटिनी। मे कत्रिकं। तद्दुग्ध गुणा —कुष्ठशोथपित्तार्श कफाटोपानाहोदरघ्नञ्च नुगुल्मश्वासनाशित्वम्, ईषत्सलोघलवण, कुष्ठ शोफघ्न पित्तघ्न अर्शोघ्नं कफाटोपघ्न आनाहहरं क्रमिगुल्मोदरश्वासघ्नञ्च। रा नि व.१५। लघु स्वादु लवण दीपनं तथा क्रमिकुष्ठकफानाहशोथोदर हर परम्। भा.पू.१भ। रुच तथोष्ण लवण क फघ्न निवारण वातविकारहारि। लघु प्रसस्त क टुक। दधिगुणा —अर्श कुष्ठक्रमिगुल्मोदररोगम् जिर्त्तं कटुत्व स्वादुलघु। नवनीतगुणा —विपाके शीतत्वञ्च लघुत्वं व्रणक्रमिकफकासवातविषघ्नत्वञ्च। घृतगुणा — शीतमधुरत्वं विपाके कटुत्वं क्रमिकुष्ठ गुल्मोदरनाशित्वञ्च। पाके कटु शोथक्रमिविषघ्न दीपनं वातकफघ्न कुष्ठगुल्मोदरघ्नञ्च। चरि.दत्त।

**उष्ट्रीचीरम्।** क्ली। उष्ट्रीदुग्धे। See स्त्री।

**उष्णः।** पु। ग्रीष्मे। त्रि। उष्णस्पर्शे उत्तप्ते। पलाण्डौ। रा.नि व। क्ली। मूत्रविशेषे। उष्ण वातकफौ हन्यात्। भा.। [आतुरे। चर। मे.।

**उष्णकः।** पु। ग्रीष्मऋतौ। ज्वरे। शीघ्रकारी। त्रि।

**उष्णगणः।** पु। भद्रदार्व्वादौ। दिग्‌ग्रन्थ... सु चि १७थ.।

**उष्णगन्धा** । स्त्री । कुलिञ्जनवचे । महाभरी वच । वै निघ ।

**उष्णजलम्** । क्ली । See उष्णोदकं ।

**उष्णफला** । स्त्री । लताविशेषे । कुन्दूरुकी । मं गोडितोंडली । वै निघ ।

**उष्णमल(मूत्र)त्वम्** । क्ली । पित्तजज्वररोगे ।

**उष्णरश्मिः** । पु । अर्कवृचे । अम. ।

**उष्णवल्ली** । स्त्री । सारिवायाम् । अनन्तमूल ।

**उष्णवातः** । पु । मूत्राघातविशेषे । लचण यथा —"व्यायामाध्वातपै पित्त वस्ति प्राप्यानिलावृतं । वस्ति मेढ्रं गुदश्चैव मदहन् स्नावयेदध । मूत्र हारिद्रमथवा सरक्तं रक्तमेव वा । कृच्छ्रात्पुन पुन र्जन्तोरुष्णवातं वदन्ति तम् ॥" भा. ।

**उष्णवारणम्** । क्ली । छत्रे । छाता ।

**उष्णवाष्पः** । पु । नेत्रजले । स्वेदे । वै निघ ।

**उष्णविदग्धदृष्टिः** । पुं । दृष्टिगतरोगविशेषे ।

**उष्णवीर्य्यः** । पु । शिशुमारे । देच । क्ली । कटुम्लद्रव्याश्रयधर्मे । गुणा —"लघु कफवातघ्न पित्तकर हृद्य भ्रमतृड्ग्लानिस्वेददाहाशुपाकतां करोति । सु सू ४१अ । त्रि । तीक्ष्णवीर्य्ये । [तिके ।

**उष्णसुन्दरः** । पु, क्ली । विभीतकवृचे । विभी

**उष्णस्निग्धः** । त्रि । तत् यदाग्नेय वस्तु । सु सू ४१अ । [वै निघ । रा नि व २० ।

**उष्णा(ष्मा)** । स्त्री । चयरोगे । सन्तापे । पित्ते ।

**उष्णा(भि)गमः** । पु । ग्रीष्मकाले । अम ।

**उष्णाङ्गत्वम्** । क्ली । पित्तजज्वररोगे ।

**उष्णान्नम्** । क्ली । उष्णभक्ते । See अन्नम् ।

**उष्णाम्बु** । क्ली । सुखोदके । "उष्णाम्बु च सुखोदकम् ।" प प्र १ख. । See उष्णोदकम् ।

**उष्णासहः** । पु । शरत्काले ।

**उष्णिका** । स्त्री । यवाग्वाम् । थाउ । रत्ना ।

**उष्णीषः** । पु, क्ली । शिरस्त्राणे । पागडी । हिपाग । धारणगुणा —"चचिद केश्य रजोवातातप घ्नच । मद व १३। चच्युष्यमायुर्वर्द्धकन्त शीतोष्णादि निवारणञ्च ॥ राज. ।

**उष्णोदकम्** । क्ली । अष्टमांशावशिष्टे, चतुर्थांशावशिष्टे, अर्द्धशिष्टे वा पक्वजले । प.प्र.१ख । तच त्रिविध पादहीनार्द्धहीनत्रिभागहीनत्वात् । "तत्पादहीन वातघ्नमर्द्धहीनन्तु पित्तनुत् । कफघ्न पादशेषञ्च पानीय लघु दीपनम् ॥" पादहीन हेमन्ते, पादार्द्धेन शरदि, तथार्द्धावशेषित प्रावड् वसन्तग्रीष्मेषु हित पथ्यञ्च । विशेषा स्वस्वपर्यायेषु मन्तव्या । गुणा — सदापथ्य कासज्वरविवस्वकफवा तघ्न दीपन वस्तिशोधनञ्चा रात्रौ तत्र श्लेष्मल वात कर्षिल अजीर्णजारकलव । दिवातप्त वारि नक्त जाड्य गच्छति अतस्तत्र रात्रौ पेय । एव रात्रितप्त मपि दिवा गुरु स्यात् अतस्तदपि दिवा न पेयं । सदालमेव तत्र जलं सदा पेयम् । रा नि व १४ ।

**उष्णोपगमः** । पु । ग्रीष्मकाले । अम ।

**उष्म (क)** । पुं । चारे । रत्ना । चयरोगे । रा नि व २० । ग्रीष्मर्त्तौ । अम । वसन्तकाले । उष्णतायाः । आतुरे । मे कनिकं ।

**उष्मजम्** । क्ली । लवणसाधारणे । रत्ना ।

**उष्मस्वेदः** । पु । उष्मजन्यघर्मे । यथा—"उष्मस्वेद मयोतत्र्य लोहपिण्डेष्टिकादिभि । मन्त्रैरम्लसिक्तैश्च कार्यो रक्तकवेष्टिते ॥ अथवा वातनिर्णाशी द्रव्यक्वाथरसादिभि । उष्णोघटं पूरयित्वा पार्श्वे छिद्रं निधाय च । विमुद्यास्य विखण्डाश धातुजा काष्ठवश्जाम् । । सुखोपविष्ट स्वभ्यक्त गुरुप्रावरणावृत । हस्तिशुण्डिकया नाड्या स्वेदयद्वातरोगिणम् ॥ अत्र वातघ्नद्रव्यभागा — शालपर्णी १भ पृश्निपर्णी २ भ कण्टकारी ३ भ. वृहती ४ भ गोक्षुर ५ भ विल्व ६ भ गणिकारी ७भ श्योणाक ८भ पाटलि ९ भ. गाम्भारी १० भ । वै निघ स्वेद ।

**उष्मा (मन्)** । पु । सन्तापे । पित्ते । चयव्याधौ । रा नि व २०। ग्रीष्मर्त्तौ । अ.टी नीलकण्ठ ।

**उष्मागमः** । पु । ग्रीष्मकाले । उत्तापे ।

**उस्र. (स्रा)** । पु, स्त्री । वृषे । भर्त्सुर्या । गाई । उपचित्रायाम् । आखुकर्ण्याम् । इन्दूर कानी । मं रहिक ।

**उह्व.** । त्रि । धौते । सिक्ते ।

**उह्नणम्** । क्ली । सेधने ।

**उच्चतरः** । पु । महाव्रषे । है.च ।

**उच्चा (न्)** । पु । व्रषभे । भा.पू.१भ. । ऋषभ
कौषधे । रा.नि.व ५ ।

**उच्चाभद्रः** । पु । व्रषे । वै.निघ. ।

**उच्चालः** । पु । वानरे । वै.निघ. ।

---

## ऊ

**ऊची** । स्त्री । भ्रष्टद्रव्ये । हुवाटेगोडा इति लो
के । See ऊम्बी ।

**ऊज्ज** । पु । बली । घर ।

**ऊधः** । क्ली । आपीने । अम. ।

**ऊधस्यम्** । क्ली । दुग्धे । रा नि.व १५ ।

**ऊम्बी** । स्त्री । यवगोधूमयोरर्द्धपक्वमञ्जरी तृणा
ग्निना भर्जिता ऊम्बीत्युच्यते । "मञ्जरी त्वर्द्धपक्वा या
यवगोधूमयोर्भवेत् । तृणानलेन सभ्रष्टा बुधैरूम्बी
ति सा स्मृता ॥" गुणा —कफदा बल्या लघ्वी पि
त्तानिलघ्नी च । भा.पू.१भ. ।

**ऊरणः** । पु । मेषे । प सु. । [१८ ।

**ऊरुः** । पु । जानूपरिभागे । ऊँरु । रा नि.व

**ऊरुपर्व्वा** । पु, क्ली । जानौ । हाँटु । अम ।

**ऊरुमाणः** । पु । मायीफले । सु.सू ४६ष ।
See उरुमाल ।

**ऊरुसन्धिः** । पु । जानूपरिस्थसन्धिस्थाने । सु ।

**ऊरुस्तम्भः** । पु । Paralysis of the
lower extremities. वायुजन्यस्फोटकरोग
विशेषे । आढ्यवात इति केचित् । निदान सम्प्रा
प्ति यथा—"शीतोष्णद्रव्यसंयुक्तगुरुस्निग्धै निषे
विते । जीर्णाजीर्णे तथायामसङ्क्षोभस्वप्नजागरैः ।
—सश्लेष्मेद पवन साममत्यर्थसञ्चितम् । अभि
भूयेतरं दोषमूरू चेत्प्रतिपद्यते । सक्थ्यस्थिनी
प्रपूर्य्यान्तः श्लेष्मणा स्तिमितेन च । तदा स्तम्भाति
तेनोरुस्तम्भौ शीताबचेतनौ ॥ इति । परकीयाविव
गुरु स्याताम् अतिभृशव्यथौ । ध्यानाङ्गमर्द्दस्तैमित्यत
न्द्राच्छर्द्यरुचिज्वरैः । संयुक्तौ पादसदनकृच्छ्रोद्धरण
सुप्तिभिः । तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥"
इति रूपम् । मा नि. । ऊरुस्तम्भे विधि कार्य्यो
वातकोपो कफापह । युक्त्या जित्वा कफं रूक्षे
पथ्याशनं अयक्षिपक् । पुराणशालिश्यामाकयवको
द्रवभोदनं । अघृतैर्जाङ्गलैर्मांसैः तथाशाकैरवणैर्हि
तम् । वालूकवायसीनिम्बवेत्राग्रकुलकादिभि ।
शुष्कमूलकयूषेण पटोलस्य रसेन वा । कफक्षयार्थं
व्यायामेष्वेन शक्येषु योजयेत् । स्थानान्याक्रामयेत्
प्रात प्रतिस्रोतो नदीन्तरेत् ॥ पथ्यम् । रस र. ।

**ऊरुस्तम्भा** । स्त्री । कदलीवृक्षे । रा.नि.व ११ ।

**ऊर्ज्जः (र्ज्जः)** । पु । कार्त्तिकमासे । है.च ।
क्ली । जले । श.र. ।

**ऊर्ज्जाः** । पु । उत्साहे । वा.स.२ष ।

**ऊर्णनाभः** । पु । मर्कटके । माकड्शा । अम. ।

**ऊर्णनाभिः** । पु । ऊर्णनाभे । श र. ।

**ऊर्णा** । स्त्री । मेषलोम्नि । "ऊर्णा मेषादिलोम्नि
स्यात् ।" भ्रूमध्यावर्त्ते । "अन्तरावर्त्तके भ्रुवो ।"
मे दिक । [नाभौ । है.च ।

**ऊर्णायुः** । पु । कम्बले । मेषे । प सु । ऊर्ण-

**ऊर्द्धकण्टा (ण्टका) (ण्टी)** । स्त्री । म
हाशतावर्य्याम् । रा नि.व.४ ।

**ऊर्द्धका** । स्त्री । वायुजन्यरोगविशेषे । ऐंड्द ।

**ऊर्द्धगः** । पु । अस्थिभङ्गरोगे । [सु सू ४१ष ।

**ऊर्द्धगुणभूयिष्ठः** । त्रि । लघुद्रव्यमात्रे ।

**ऊर्द्धगुदः** । पु । गुदोर्द्धगरोगे ।

**ऊर्द्धग्रहः** । पु । अश्वस्य ग्रहदोषजन्यरोगविशेषे ।
तस्य लक्षण—जिह्वास्तम्भत्वं दर्शनकरणस्पर्शे
ति । "श्यामं जिह्वामुखं यस्य गदद्दृष्टिर्तिर्ष्ठेत् ।
ऊर्द्धग्रहकृतं दोषं तस्य रोगस्य निर्द्दिशेत् ॥" ज
द.५०ष. ।

**ऊर्द्धजत्रु** । क्ली । स्कन्धसन्धेरूर्द्धभाग. । गर्दनाच्च
ऐर्क्कोण । "ऊर्द्धजत्रुगदरोगघ्नो । तथ रोगेषु ।"
च.द स्व.चि. । [शाङ्गे । भा. ।

**ऊर्द्धजानुः (ज्ञुः)** । त्रि ऊर्द्धजे । उन्नतजा

**ऊर्द्धतिक्तः (कः)** । पुं । नेपालनिम्बे ।

**ऊर्द्धनाड़ी** । स्त्री । नाडीविशेषे ।

**ऊर्द्धपातनम्** । क्ली । रसस्योर्द्ध्वक्षेपणकर्म्मणि यथा—रस ३ भ ताम्र १ भ. जम्बीररसेन ताव न्मर्द्दयेत्, यावन्न पिण्डतां गच्छति । अथ ऊर्द्धपा तनायन्त्रं विद्याधरयन्त्रं वा परिकल्प्य तं पिण्डं त- न्मध्यभाण्डे संस्थाप्य तदुपरिस्थभाण्डे जलं दत्त्वा यत्नसन्धिं सम्यक् निरोधयेत् । अथ तदधः वह्निं ज्वालयेत् । "स्थालीमूर्द्ध्नि जलं दत्त्वा वह्निं प्रज्वा लयेदधः । एतद्विद्याधरं यन्त्रं पातनायन्त्रमित्यपि ॥" पातनायन्त्रमित्यूर्द्धपातनायन्त्रम् । "हण्डिकोपरि- भागेऽन्या हण्डिकाधोर्द्ध्वमुखीं विन्यस्याधोहण्डि काभ्यन्तरे पाच्यसूतादिकं निवेश्य च तयोः सन्धिं निरोधयेत् । तत उपरितलस्थाल्यां जलं दत्त्वा अधो वह्निं प्रज्वालयेदिति ।" र सा.सं. । একটী হাঁড়ির ভিতর পিণ্ডিত সতাম্র রস রাখিয়া তাহার মুখে আর একটী হাঁড়ি বসাইয়া উভয়ের সন্ধিমুখ উত্তমরূপে লেপিয়া শুষ্ক করিবে । পরে উপরিস্থ হণ্ডিকায় জল পূরণ করিয়া জ্বাল দিবে । সিদ্ধ হইলে নামাইয়া হাঁড়ির গায়ে যে ভূষা লাগিয়াছে,তাহা যত্নে লইয়া তাহা হইতে পারা বাহির করিবে ।

**ऊर्द्धपादः** । पुं । काश्मीरदेशीयशरभमृगे । अष्टपादपशुविशेषे । [See वमनं ।

**ऊर्द्धभागहरः** । त्रि । वमनद्रव्ये । सु सू.६अ. ।

**ऊर्द्धवर्त्तिः** । पुं । तन्नामकाश्वमूत्ररोगे । लक्षण यथा—"यवसम्प्रादनश्चैव यो वाजी खादितं पुनः । मुखेन प्रोद्गिरत्याशु तं विद्यादूर्द्धवर्त्तिनम् ॥" ज.द. ४३अ. ।

**ऊर्द्धवातः** । पुं । वायुरोगभेदे । उद्गारे । ঢেকুর । लक्षणं—"अधःप्रतिहतो वायुः श्लेष्मणा मारुतेन च । करोत्युद्गारबाहुल्यमूर्द्धवातः स उच्य- ते ॥" निदानम् । [श्वासरोगे । भा.ज्व.चि ।

**ऊर्द्धवायुः** । पुं । ऊर्द्धगतवायौ । उद्गारबाहुल्ये ।

**ऊर्द्धशोधनम्** । क्ली । अरिष्टकफले । রীঠা फल । वमने ।

**ऊर्द्धश्वासः** । पुं । श्वासरोगभेदे । "ऊर्द्धं श्वसिति यो दीर्घं न च प्रत्याहरत्यधः । श्लेष्मावृतमुखस्रोता क्रुद्धगन्धवहार्दितः ॥ ऊर्द्धदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः । प्रमुह्यन् वेदनार्त्तश्च शुष्कास्योऽरतिपीडि- तः । ऊर्द्धश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते । मुह्यतस्ताम्यतश्चोर्द्धं श्वासस्तस्यैव हन्त्यसून् ॥" मा नि. । See श्वासः ।

**ऊर्द्धस्थितिः** । पुं । अश्वस्योद्धावर्त्ते । त्रिका. ।

**ऊर्द्धासितः** । पुं । कारवेल्ले । करला উচ্ছে । त्रिका. ।

**ऊर्म्मणः** । पुं । द्रोणपरिमाणे ।

**ऊर्म्मिः** । पुं, स्त्री । तरङ्गे । दुःखे । वेदनायां । पीडायां । वेगे । भङ्गे । मे.मदिकं ।

**ऊर्म्मिकः** । पुं । अश्वस्य पादरोगभेदे । लक्षणं —"ऊर्म्मिकश्चोर्म्मिसंस्थानैर्वलिभिः खुरसम्भवैः ।" ज द.३८अ. ।

**ऊर्व्वः** । पुं । वाडवाग्नौ ।

**ऊर्व्वी** । स्त्री । ऊरुस्थमर्म्मभेदे । सु ।

**ऊर्व्याङ्गम्** । क्ली । गोमयच्छत्रिकायाम् । গুবুরে ছাতা । हारा. ।

**ऊर्षा** । स्त्री । देवताडकतृणे । श.च. ।

**ऊलुपी** । पुं । शिशुमारे । भ.टी. ।

**ऊलूकः** । पुं । पेचके । अथ प्रसहजातीयः । एतन्मांसम् उष्णवीर्य्यम् । एतद्भक्षणात् शोषभस्म- कोन्मादाः चीणशुक्रता च जायन्ते । भा.पू १भ । "उलूकपललं मान्द्यकरं वातप्रकोपकरञ्च ।" म- द व. । [रश्मौ । मे. । क्ली । प्रभाते । श.र. ।

**ऊषः** । पुं । क्षारमृत्तिकायां । अम । सन्ध्यायां ।

**ऊषकः** । पुं । कलर इति प्रसिद्धे क्षारकन्दे । वा.सू.१५अ.ऊषकादि. । "ऊषकतुल्यकं हिङ्गु ।" क्षारमृत्तिकायाम् । "ऊषकः क्षारमृत्तिका, वारा- णसीसमीपे यमदरदेशे बाहुल्येन भवति । अन्ये तद्वं द्रव्यान्तरमाहुः ।" सु.सू.१८अ.ड. । क्ली । प्रत्यूषे । श.र. ।

**ऊषकादिगणः** । पुं । ऊषकतुल्यकहिङ्गुका- सीसद्वयसैन्धवशिलाजतूनीति गणः । गुणाः—मूत्र कृच्छ्राश्मरीगुल्मभेदःकफघ्नः । "ऊषकतुल्यको हिङ्गुकासीसद्वयसैन्धवं सशिलाजतु ।" वा.सू.१५ अ. । च.द.कषायपदे ।

**ऊषणम्** । क्ली । मरिचे । 'ऊषणं मरिचे क्लीबम् ।" मेदिनिक । पसु । भा पू १भ ह व । पिप्पल्यां च द.क.क ल्प चिसिन्दुवारादि । "सिन्दुवारदलक्वाथ सोषण कफजे ज्वरे ।" शुण्ठ्याम् । भा पू १भ ह व । पिप्पलीमूले । भा.पू १भ ह व । पु । चित्रकवृक्षे । भा पू १भ ह व ।

**ऊषणा** । स्त्री । पिप्पल्याम् । रा नि व ६ । भा पू १भ ह व । चविकायाम् प सु. । See चव्यम् । शुण्ठ्यां । वै निघ. ।

**ऊषर:** । पु । चारभूमौ । रा नि व.२ ।

**ऊषरक(ज)म्** । क्ली । औषरके । पांशुलवणे । औषरलवणे । रोमकनामायस्कान्तभेदे रा नि व १३ ।

**ऊषरलवणम्** । क्ली । स्वनामख्यातलवणे, घासविशेषे । गुणा —बलद रुच्य पयूना हितच । रा नि व ८ ।

**ऊषवान्** । त्रि । ऊषरे । अम ।

**ऊषसूतम्** । क्ली । मृत्तिकालवणे । "ऊषसूतं वालुकेलं शैलमूलाकरोद्भव । लवणं कटुकं छेदि विहितं कटु चोच्यते ॥ सु सू.४६ ष ।

**ऊषचार:** । पु । चारमृत्तिकायाम् । लोणीमाटी । गुणा —"उष्णोऽनिलघ्न प्रक्लेदी ऊषचारो बलापह ।" सु सू ४६ष. ।

**ऊषाकर** । पु । कुक्कुटे । श.र ।

**ऊषापानम्** । क्ली । प्रत्यूषजलपाने । तस्य विधिगुणा —"अथम प्रसृतीरष्टौ रवावनुदिते पिबेत् । वातपित्तकफान जित्वा जीवेद्वर्षशतं सुखीति ॥ तथा —अर्श शोथग्रहण्यो ज्वरजठरजराकुष्ठमेदोविकारा मूत्राघातास्र पित्तश्रवणगलशिर श्रोणिशूलाचिरोगा । ये चान्ये वातपित्तक्षतजकफकृता व्याधय सन्ति जन्तोस्तांस्तानभ्यासयोगादपहरति पय पीतमन्ते निशाया । विगतघननिशीथे प्रातरुत्थाय नित्यं पिबति खलु नरोयो नासरन्ध्रेण वारि । स भवति मतिपूर्ण्यश्चक्षुषा तार्क्ष्यतुल्यो वलिपलितविहीन सर्व्वरोगैर्विमुक्त ॥"भा ।

**ऊषक** । पु । पित्ते । रा.नि व । ग्रीष्मऋतौ । ज्यैष्ठाषाढौ ग्रीष्मऋतु ।

**ऊष्मा** । पु उष्णतायाम् । चयरोगे । वै निघ. ।

**ऊष्मापह:** । पु । हेमन्तऋतौ । वै.निघ. ।

**ऊह:** । पु । तर्के ।

**ऊहिनी** । स्त्री । सम्मार्ज्जन्याम् । झाँटा ।

**ऊह्यम्** । क्ली । "यदनिर्दिष्टं बुद्धिमता तदूह्यं ।" सु उ ६५ष. ।

---

## ऋ

**ऋकथम्** । क्ली । स्वर्णे । धने । चम. । सु सू ३८ष । [च. ।

**ऋची(जी)षम्** । क्ली । भ्राष्टे । ताओया । हे

**ऋजीक:** । पु । धूमे ।

**ऋजुश्रेणी** । स्त्री । मूर्वायां । रत्ना. ।

**ऋजुसर्प:** । पुं । सर्पविशेषे । दर्व्वीकरसर्पे । सु कल्प ४ष. । See सर्प ।

**ऋतम्** । क्ली । जले । मे ।

**ऋतु:** । पुं । वसन्तादिषड्विधकाले । रवे राशिसंक्रमात् यत्र दोषाणां चयकोपशमा भवन्ति ते ऋतव उच्यन्ते । "चयकोपशमा यस्मिन् दोषाणां सम्भवन्ति हि । ऋतुषट्कं तदाख्यातं रवे राशिसंक्रमात् ।" भा पू १भ ऋतुचर्या । ते च शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तरूपा दोषोपचयप्रकोपोपशमननिमित्तानि भवन्ति । तदुक्तं—"माघादयो द्वादशमासा द्विमासिकमृतुकृत्वा षडृतवो भवन्ति । ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ता । तेषां तपस्तपस्यौ शिशिर , मधुमाधवौ वसन्त , शुचिशुक्रौ ग्रीष्म , नभोनभस्यौ वर्षा , इषोर्जौ शरत्, सहसहस्यौ हेमन्त इति । भाद्रपदाश्वयुजौ शरत्, कार्त्तिकमार्गशीर्षौ हेमन्त", पौषमाघौ शैत, फाल्गुनचैत्रौ वसन्त , वैशाखज्यैष्ठौ ग्रीष्म , आषाढश्रावणौ प्रावडिति" च मतान्तर । सु सू.६ष. । शिशिरौ मेषवृषौ ग्रीष्म प्रावृण्मिथुनकर्कटौ । सिंहकन्ये स्मृता वर्षा तुला वृश्चिकयो शरत् धनुर्ग्राही च हेमन्तो वसन्त कुम्भमीनयो । भा ।

ऋतौ तु तस्य भेदत्रय स्वीकुर्व्वन्ति यथा—शीतग्रीष्मवर्षाः । तत्र फाल्गुनादिज्यैष्ठान्ता ग्रीष्म, आषाढाद्याश्विनान्ता वर्षा, कार्त्तिकादिमाघान्ता शीत इति । ऋतुलक्षणादिक यथा—'तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्ना क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहाना प्राणिना शीतवातविष्टब्धाग्नीनां विदह्यन्ते, विदाहात्पित्तसञ्चयमापादयन्ति, स सञ्चय शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलापित पैत्तिकान् व्याधीन् जनयति । ता एवौषधय कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्ना स्निग्धा अत्यर्थं गुर्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानो सतुषारपवनोपस्तम्भितदेहानां देहिना मविदग्धा स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मसञ्चयमापादयति, स सञ्चयो वसन्तेऽर्करश्मिप्रविलापित ईषत्स्तब्धदेहाना देहिनां श्लैष्मिकान् व्याधीन् जनयति । ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमाना सूर्य्यप्रतापोपशोषितदेहाना देहिना रौक्ष्याल्लघुत्वा द्वैशद्याच्च वायो सञ्चयमापादयन्ति, स सञ्चय प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहाना प्राणिना शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति । तत्र पूर्व्वाह्णे वसन्तस्य लिङ्ग मध्याह्ने ग्रीष्मस्यापराह्णे प्रावृष प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत् । एवमहोरात्रमपि वर्षमिव शीतोष्णलक्षण दोषोपचयप्रकोपोपशमैर्जानीयात् । ऋतूनामत ऊर्द्ध्वमव्यापन्नाना लक्षणानि यथा—वायुर्व्वात्युत्तर शीतो रजोधूमाकुला दिश । छन्नस्तुषारै सविता हिमानद्धा जलाशया ॥ दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जरा । रोध्रप्रियङ्गुपुन्नागा पुष्पिता हिमसाह्वये ॥ शिशिरे शीतमधिक वातवृष्ट्याकुला दिश । शेष हेमन्तवत्सर्व्वं विज्ञेय लक्षण बुधै । दिशो वसन्ते विमला काननैरुपशोभिता । किंशुकाम्भोजवकुलचूताशोकादिपुष्पितै ॥ कोकिलाषट्पदगणैरुपगीता मनोहरा । दक्षिणानिलसंवीता सुमुखा पल्लवोज्ज्वला । ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुख । भूरुष्णा सरितस्तन्व्यो दिश प्रज्वलिता इव ॥ भ्रान्तचक्राह्वयुगला पय पानाकुला मृगा । ध्वस्तवीरुत्तृणलता विपर्णाङ्घ्रिपपादपा । प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितै । अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनै ॥ कोमलश्यामशस्याढ्या शक्रगोपोज्ज्वला मही । कदम्बनीपकुटजसर्ज्जकेतकिभूषिता ॥ तत्र वर्षासु नद्यम्भ पुरोद्भग्नतटद्रुमा । वाप्य प्रोत्फुल्लकुमुदनीलोत्पलविराजिता ॥ भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता । नातिगर्ज्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभ ॥ बभ्रुरुष्ण शरद्यर्क. श्वेताभ्रविमल नभ । तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितै ॥ पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भू । बाणसप्ताह्वबन्धूककाशासनविराजिता ॥ स्वगुणैरतियुक्तेषु विपरीतेषु वा पुन । विषमेष्वपि वा दोषा कुप्यन्त्यृतुषु देहिनां ॥ हरेद्वसन्ते श्लेष्माणं पित्त शरदि निर्हरेत् । वर्षासु शमयेद्वायु प्राग्विकारसमुच्छ्रयात् ॥" सु सू ६ अ. । स्त्रीकुसुमे । अम. । See पुष्प, आर्त्तव ।

**ऋतुजन्मा ।** स्त्री । पुनर्नवायाम् ।

**ऋतुपरीक्षा ।** स्त्री । आर्त्तवपरीक्षायाम् । तद्यथा—"ऋतौ कण्डूयन योनौ क्वचिदङ्गे च वेदना । बाहुल्य स्वल्पता वापि चानुबन्धित्वमस्य वा । सदोष सर्व्वथा वापि वेद्यान्येतानि यत्नत । आमशैथिल्यवद्भिषग्भिर्योषिता सदा ॥" अत्रि. ।

**ऋतुमती ।** त्रि । रजस्वलायां स्त्रियाम् । तल्लक्षण यथा— पीनप्रसन्नवदना प्रक्लिन्नात्ममुखद्विजा । नरकामा प्रियकथा स्रस्तकुक्ष्यक्षिमूर्द्धजाम् ॥ स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिच । हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति । नियत दिवसेऽतीते सङ्कुचत्यम्बुज यथा । ऋतौ व्यतीते नार्य्यास्तु योनि संव्रियते तथा ॥ मासेनोपचित काले धमनीभ्यां तदार्त्तवम् । ईषत्कृष्ण विदग्धञ्च वायुर्योनिमुखन्नयेत् ॥ तद्वर्षाद्द्वादशात्काले वर्त्तमानमसृक् पुन । जरापक्वशरीराणां याति पञ्चाशत क्षयम् ॥" सु. शा ३ अ ।

**ऋतुराजः ।** पु । वसन्तऋतौ । रा नि व,२१ ।

**ऋतुविपर्य्ययः ।** पुं । ऋतुव्यापदि । वसन्तादिस्थाने शरदादिधर्म्मप्रवृत्तौ ।

**ऋतुवैषम्यम् ।** क्ली । ऋतुचर्य्याविपरीताचरणे । भा म ४भ । "क्रोधर्त्तुवैषम्यशिरोभितापे ।"

**ऋतुशूलम् ।** क्ली । ऋतुकाले रजोरोधजन्यशूलरोगे । "पुष्पस्य वातादिभिर्हतस्य सद्य कौरर्थ ।"

बहुल पिच्छिल स्निग्ध घन स्रवति शोणितं । यो नो नाभौ तु शूलानि ऋतौ प्रदरमादिशेत्।" रस र यो व्या चि ।

**ऋतुषट्कम्** । क्ली । हिमशिशिरवसन्तग्रीष्म वर्षाशरत्सु । 'चयकोपसमा यस्मिन दोषाणां स म्भवन्ति हि । ऋतुषट्क तदाख्यात रवेराशिषु स क्रमात् ॥" भा ।

**ऋतुसन्धि.** । पु ऋतुद्वयसन्धिसमये । स च ऋतुद्वयस्याद्यन्तसप्ताहरूप । तदुक्त "ऋत्वोरन्त्या दिसप्ताहावृतुसन्धिरिति स्मृत । तत्र पूर्वोविधि स्त्याज्य सेवनीय परो विधिरिति ॥" वा ।

**ऋतुसम्मिता** । स्त्री । सुनिखर्जूरिकायाम् । वै निघ ।

**ऋतुस्नाता** । स्त्री । रजोदर्शनाच्चतुर्थेऽह्नि स्ना तायाम् । "पूर्व्वं पश्येदृतुस्नाता यादृश नरमङ्गना । तादृश जनयेत्पुत्र तत पश्येत्पति प्रिय ॥" सु शा २अ ।

**ऋतुहरीतकी** । स्त्री । ऋतौ ऋतौ हरी तकीभक्षणविधौ । यथा—"सिन्धूत्थशर्कराशुण्ठी कणामधुगुडै क्रमात् । वर्षादिष्वभया सेव्या रसा यनगुणैषिणा ।' च द । भद्रास्तु ग्रीष्ममधिकृत्याह । ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धाम्बरे साद्रे शर्करया शरद्यमलया शुण्ठ्या तुषारागमे । पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितामित्थं प्राश्य हरीतकीमिव रुजो नश्यन्तु ते शत्रव ॥ प्रयोगा वाजी । [धान्ये । निस्तुषीकृतधान्ये । च टी.।

**ऋदम्** । क्ली । सम्पक्वधान्ये । अम. । पक्वमर्दित

**ऋद्धि.** । स्त्री । कोशयामलप्रसिद्धे ऋद्धिरुद्धीति च गौडप्रसिद्धे स्वनामख्यातलताकन्दे । तदुक्त "ऋ द्धिऽर्द्धिश्च द्वौ कन्दौ भवत कोशयामले । रुत रोमान्वित कन्दो लताजात सरन्ध्रक । तूलग्रन्थि समा ऋद्धिर्वामावर्त्तफला च सा । प्रयोगेष्वनयोरेक यथालाभ प्रयोजयेत् ॥ रा.नि व ५ । गुणा — ऋद्धिर्बलतुल्या बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरु बलैश्वर्य्यकरी मूर्च्छारक्तपित्तहरी च । भा पू १भ । महामायाकरी । वा सू.१५अ पद्मकादौ चक्र च । "पद्मकपुण्ड्राह्वर्द्धिगुर्वर । एतदभावे वाराही योज्या ।"

—

**ऋद्धिजा** । स्त्री । सर्पगन्धायां । गन्धनाकुल्यां । प मु. । अस्या कन्दोयाद्य । भा म १भ ।

**ऋश्य' (ष्य)** । मृगी । रुरुमृगे । "ऋश्यो नीला ङ्कको लोके स रोरु इति कीर्त्तित ।" भा म १भ. तन्मांसगुणा —कषायं मधुर वातघ्न पित्तघ्न ह्य तीक्ष्णं वस्तिशोधनञ्च । सु सू ४६अ ।

**ऋषभ:** । पु । ऋषभके । कर्णरन्ध्रे । कूर्मीर पुच्छे । मी । सु चि १७अ वलीवर्द्दे । वृष । मांस गुणा —अतिगुरु स्निग्ध पित्तश्लेष्मवर्द्धन बृहण वा तघ्न बल्य पीनसघ्न । भा पू १भ ।

**ऋषभक:** । पु । One of the eight medicaments, carpopogon pruriens स्वनामख्यातौषधे । ऋषभ इति गौडे काश्मीरे च प्रसिद्ध । वृषभक । जीवकर्षभकयोरुत्पत्तिमाह मिश्रभाव —"जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिख रोद्भवौ । रसोनकन्दवत्कन्दौ नि सारौ सूक्ष्मपत्रकौ । जीवक कूर्चकाकार ऋषभो वृषशृङ्गवत् ।" गुणा —जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । एतदभावे विदारीमूल प्रयोज्यम् । भा पू १भ । मधुर शीत पित्तरक्तविरेकनुत् । शुक्रश्लेष्मकरो दाहक्षयज्वरहरश्च स । रा नि व ५ । "ऋषभको वृषभक ।" सु चि ८अ ।

**ऋषभी** । स्त्री । कपिकच्छुलतायाम् । आत्म गुप्ती । र मा । नराकारयोषिति । शिराल्वायाम् । विधवायाम् । श भविक ।

**ऋषि:** । पु । गोरोचनायां । वै निघ । [प मु ।

**ऋषिकम्** । क्ली । लताविशेषे । सियाकुलता ।

**ऋषिजाङ्गलक. (ला) (लिका,की)** । स्त्री । ऋश्यगन्धायाम् । सर्पगन्धा । रक्ता ।

**ऋषिपुष्पक:** । पु । दमनकवृक्षे । वै.निघ ।

**ऋषिप्रोक्ता** । स्त्री । माषपर्णीलतायां । प मु ।

**ऋषिश्रेष्ठ:** । पु । पुण्डरीकवृक्षे । ऋद्धौ ।

**ऋषिश्रेष्ठा** । स्त्री । ऋद्धौ । वृद्धौ । वै निघ ।

**ऋषिसृष्टा** । स्त्री । ऋद्धौ । मद व १ ।

**ऋषीक:** । पुं । काशवृक्षे । मद व १ ।

**ऋष्य.** । पु । हरिणे । श्वेतकुष्ठे । श्वदद्रौ ।

भीलहरिणे । एतन्मांसं कफघ्नं पित्तघ्नं किञ्चिद्वातवर्द्धकं लघु बल्यञ्च । भा.पू.१भ. ।

**ऋष्यगता** । स्त्री । माषपर्ण्यां । मासाणी । प्र.र ।

**ऋष्यगन्धा (न्धिका)** । स्त्री । ऋष्यजाङ्गलायां । र मा । अतिबलायाम् । क्षीरविदार्य्यां । प्र र । श्वेतशर्करकन्दे, रक्तशर्करकन्दे । वै.निघ. ।

**ऋष्यजिह्व(क)म्** । क्ली । महाकुष्ठभेदे । तल्लक्षणम्—"ऋष्यजिह्वाप्रकाशखररतानि ऋष्यजिह्वानि ।" सु.नि.५अ. ।

**ऋष्यपुष्पी** । स्त्री । अतिबलायाम् । वै.निघ. ।

**ऋष्यप्रोक्ता** । स्त्री । श्वेतवाट्यालके । प.मु. । शतमूल्याम् । महाशतावर्य्याम् । महाबलायाम् । कपिकच्छुलतायाम् । भा.पू.१भ.गु व. । पीतवाट्यालके । रमा । माषपर्ण्याम् । च.सू.४अ. । "ऋष्यप्रोक्ताशतावर्य्यतिबलागकशिम्बिषु ।" सै तचनुर्ध्वं ।

**ऋष्याह्वा** । स्त्री । नागबलायाम् । बलायाम् । বেলেড়া । वै.निघ. ।

**ऋक्षः** । पुं । भल्लूके । रा.नि.व.१९ । तन्मांसगुणाः—स्निग्धं गुरु ... स्वादु ... वातघ्नम् । मद.व.१२ । हरिणे । हला । क्षतवेधने । घोषालता । मै.पद्रिकं । स्योणाकवृक्षे । रा.नि.व.९ ।

**ऋक्षगन्धा** । स्त्री । वृद्धदारकवृक्षे । वीक्षताडक । ऋष्यजाङ्गलाया । र मा च सू.४अ वंहणी । श्वेतभूमिकुष्माण्डे । वै.निघ. ।

**ऋक्षगन्धिका** । स्त्री । क्षुपभूमिकुष्माण्डे । वृद्धदारकलतायां । वै.निघ. ।

**ऋक्षप्रियः** । पुं । ऋषभकक्षुपे । रा नि व.५ ।

**ऋक्षमुखयन्त्रम्** । क्ली । सन्दंशतुल्ये यन्त्रविशेषे । अत्रि. ।

**ऋक्षविट्** । स्त्री । तैलपायिविष्ठायाम् । आर्शोलाव नादि । वै निघ.२भ.पर्श-चि.क्षणपिरीयलिपे । [व५ ।

**ऋक्षाह्वी** । स्त्री । महामेदालताक्षुपे । रा.नि.

---

## ए

**एककन्दः** । पुं । पानीयालुके । पाणिआलु इति प्रसिद्धे कन्दशाके । শোলাকচু । प.मु. ।

**एककुष्ठम्** । क्ली । क्षुद्रकुष्ठभेदे । लक्षणम्—अस्वेदनं महावास्तु यन्मत्स्यशकलोपमं । तदेककुष्ठम् । मा.नि. । एककुष्ठं चर्मदलमिति केचित् । कृष्णारुणं येन भवेच्छरीरं । तदेककुष्ठं प्रवदन्त्यसाध्यम् । सु.नि.५अ. ।

**एकचरः** । पुं । गण्डके । গণ্ডার । त्रिका. ।

**एकदृक् (ष्टिः)** । पुं । काके । हला. । त्रि । काणे । কাণা । वै.श ।

**एकपत्रः (कः)** । पुं । कन्दालकन्दविशेषे । रा नि.व ७ । श्वेतकृष्णमूले । र.मा. ।

**एकपत्रा (त्रिका)** । स्त्री । सुगन्धपत्राम् । गन्धपत्रे । मालवे पत्राज इति ख्याते गन्धपत्रक्षुपे । रा नि.व.९ । पाण्डुरपुष्पीक्षुपे ।

**एकपर्णी** । स्त्री । मालवजीवनलतायाम् । वै.निघ ।

**एकमूलः** । पुं । पुनर्नवाक्षुपे । পুনর্নবা । वै निघ. ।

**एकमूला** । स्त्री । शालपर्ण्याम् । अतस्याम् । नलिनी । मंचयः । [ভেঙ্গরাজ । জটা ।

**एकरजः** । पुं । भृङ्गराजवृक्षे । ভীমরাজ

**एकरन्ध्रः** । पुं । नदीवटे । वै.निघ. ।

**एकवर्षीया** । स्त्री । एकहायनी गवि । এক বছরের বাছুর । वै.श. ।

**एकविंशतिगुग्गुलुः** । पुं । कुष्ठरोगे । च.द. कुष्ठ चि. । त्रिफलां त्रिकटुं व्योषं ... चव्यं ... विडङ्गाव्यजमोदाश्च मुस्तान्यमरदारु च । यावन्त्येतानि चूर्णानि तावन्मात्रस्तु गुग्गुलुः । मर्द्दयित्वा ... गुटिका ... यथाबलम् .... । চিতামূল, ত্রিফলা, ত্রিকটু, চৈার, কৃষ্ণজীরে, দন্ত, সৈন্ধব, আতইচ, কুড়, চই, এলাইচ, যবক্ষার, বিড়ঙ্গ, যমানী; মুতা, দেবদারু প্রত্যেকে সমভাগ। সর্ব্বচূর্ণ সমান গুগ্গুল, ঘৃতের সহিত মর্দ্দনপূর্ব্বক গুড়িকা করিবে।

**एकवीरः** । पुं। स्वनामख्यातवृक्षविशेषे । एकवीर । गंड़विकेक । गुणाः—कटुकः तीव्रवातघ्नः स्रष्ण: गरभ्रसीकटिशूलाभिघातघ्नः । रा नि व.८ ।

**एकवीरा** । स्त्री । वन्ध्याकर्कोट्याम् । गुणा.—"एकवीरा स्मृता तिक्ता चात्युष्णा वातहा स्मृता । पक्षाघातं पृष्ठकटीशूलञ्चैव विनाशयेत्॥" वै.निघ ।

**एकवृन्दः** । पुं । तन्नामककण्ठरोगविशेषे । येन दुष्टकफशोणिताभ्यां कण्ठे दाहकण्डूमदोषत्पाकीमश्च मृदुरुन्नतो वृत्तश्च शोथो जायते । लक्षणं—"वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाकिमृदुर्गुरुश्च । नाम्नैकवृन्दः परिकीर्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥" सु.नि.१६अ.। मा.नि ।

**एकवृन्दः** । पुं । गलरोगे । वै निघ ।

**एकशफः** । पुं । घोटके । चिका । एकखुर जन्तुमात्रे । यथा—"खरोऽश्वोऽश्वतरी गौर शर भश्चमरी तथा । एते चैकशफा ख्याताः ।" भा ।

**एकशफक्षीरम्** । क्ली। अविभागखुरपशुदुग्धे । खुरयोड़ा पशुमात्रेर दुध । गुणा —उष्ण त्वे कशफं लघु शाखावातहर माम्लमोपलवण जडता करमिति । वा.टी.हेमा । [प सु ।

**एकशिखा** । स्त्री । पाठायाम् । आकनादि ।

**एकशृङ्गः** । पुं । मण्डुके । गण्डार । वै निघ. ।

**एकहस्ती** । स्त्री । अश्वस्य शोभनवल्गाभेदे । "द्विहस्ती चैकहस्ती च शुभगा शोभना मता ।" ज.द.७अ. ।

**एकहायनी** । स्त्री। एकवर्षीयायां गवि । अम.।

**एकाङ्गम्** । क्ली । चन्दने । हारा. ।

**एकाङ्गवातः** । पु। पक्षवधरोगे । पक्षाघात। मा.नि. । See पक्षवध. । अश्वस्य वातव्याधिरोग विशेषे । "एक. प्रलम्बते कर्णः शरीरार्द्धञ्च शुष्यति । शूलो भवति चाश्वस्य रोगे एकाङ्गसंज्ञके ॥" ज.द ५५अ ।

**एकाङ्गी** । स्त्री । सुरामांसी । मुरामांसी नामक गन्धद्रव्यविशेष । गुणाः—तिक्ता हिमा स्वादी लघु वातपित्तघ्नी ज्वरभूतरक्षोघ्नी कुष्ठकासघ्नी च । भा पू १भ. । कटुः कषाया भमसूक्ष्वादिश्वासविपदाहघ्नी च । रा नि व १२ ।

**एकाण्डः** । पुं । तन्नामकदोषान्विताश्वे । "एकेन लम्बमानेन मुष्केणैकाण्डसंज्ञकः । ज.द १अ.।

**एकादशशतिकमहाप्रसारणीतैलम्** । क्ली । वातव्याधौ । "शाखामूलदले प्रसारणितुलास्त्रिः कुरण्टीतुले, छिन्नायाश्च तुले तुले श्वकतीरास्नाशिरीषात्तुला । देवाह्वाश्च सकेतकाष्टमते निःक्वाथ्य कुम्भाशिके, तोये तैलघट तुषाम्बुकलसी द ध्याढकं मस्तुन ॥ शुक्ताच्छागरसाद्येक्षुरसत. क्षीराच्च दध्याढकं,पृक्काकर्कटजीवकाद्यविकषा काकोलिकाकच्छुरा. । मूर्च्छैला घनसारकुन्दुसरला वाशीरमांसीनखैः, कालीयोत्पलपद्मकाह्वयनिशा कक्कोलकग्रन्थिकैः ॥ चाम्पेयाभयचोचपूगकटुकाजातीफलाभीरुभि, शैवालामरदारुचन्दनवचाशैलेयसिन्धूद्भवै । तैलाम्भोदकटम्भराहिमलिनाखरीरकचोरकै.,कस्तूरीदशमूलकेतकनतश्यामाश्वगन्धाम्बुभि । कौन्तीतार्क्ष्यजशल्लकीफललघुश्यामाशताह्वाम्बयै ,भल्लातत्रिफलाब्जकेशरमहाश्यामालवङ्गान्वितै । स्त्र्योर्वैर्भिन्नपलैर्मुहीयसि पचेन्मन्देन पावेऽग्निना ॥" তিলতৈল ৬৪শ. ক্বাথার্থ সমূলপত্রশাখ গন্ধভাদুলিয়া ৩৭॥০শ নীলঝাঁটী, গুলঞ্চ, এবং মূল প্রত্যেকে ২৫শ. রাস্না, শিরীষছাল, দেবদারু, কেয়ার মূল প্রত্যেকে ৬।০ শ জল ৬৪০০ শ. শেষ ৬৪ শ. কাঁজি ৬৪ শ দধি ৬৪শ. ১৬শ. শুক্ত ১৬শ. ছাগমাংস ৮শ. জল ৬৪শ. শেষ ১৬ শ. ইক্ষুরস ১৬ শ. দুগ্ধ ১৬ শ । কল্কার্থ পিড়িং ফল, দাঁবুড়াশৃঙ্গী, জীবনীয় দশক বা অষ্টবর্গ, কাকোলী, মঞ্জিষ্ঠা, ক্ষীরকাকোলী, আলাবুশীর মূল, ছোট এলাইচ, কর্পূর, কুন্দুরখোটী, সরলকাষ্ঠ, কুঙ্কুম, জটামাংসী, নখী, কৃষ্ণাগুরু, নীলোৎপল, পদ্মকাষ্ঠ, হরিদ্রা, কঙ্কোল, গেঠেলা চাঁপা নাগেশ্বর বা নাগেশ্বর, বেণার মূল, গুড়ত্বক্, গুপারি, জায়ফল, লতাকস্তুরী, শতমূলী, মধুখেজুরী, দেবদারু, শ্বেতচন্দন, বচ. শৈলজ, সৈন্ধব, শিলারস, মুতা, গন্ধভাদুলিমূল, পুনর্নবা, বালুকা, গন্ধশটী, মৃগনাভি, দশমূল, মদনফল, প্রিয়ঙ্গু, শাল, কেয়া, তগরমূল, ক্ষুদ্রকণ্টকারী, বালা, রেণুকা, রসাঞ্জন, শিমুলমূল, কটুফল, অগুরু, শ্যামালতা বা অনন্তমূল, কুড়, ভেলার মুটী, ত্রিফলা, শুলফা, পদ্ম নাগেশ্বর,

लवङ्ग, त्रिकटु प्रत्येके ७पल। प्रयोगा मैष। ध्यामसिति पाठे गन्धतृणम्।

**एकादशायसः** । पु। अभ्रकाद्यधिकारे। पा ठ —"सताय पुरुष शुल्व खगी दरदगन्धकौ। गगन पुष्परागश्च शोणितश्चेश्वरोरगौ विडङ्गत्रि फलाहिङ्गुयमानीजीरकदय। सर्ज्जफलवचाशृङ्गी मरिच पिप्पलीद्वय चवी दुरालभा वह्नि शुण्ठी द्रावैर्विमर्द्दयेत्॥" पुरुष रस। खग स्वर्णमाचि कम्। पुष्पराग तन्नामकमणि रसाञ्जन वा। शो णित कुङ्कुमं। ईश्वर पित्तल। रस र अभ्र चि। प्रयोगामृते तु शुल्वस्थाने शङ्ख शुण्ठीद्रावैर्विमर्द्दये दित्यत्र 'भावयेदार्द्रकद्रवे' इति पाठान्तर। प्रयो गामृते पुरुष गुग्गुलु। पष्परागं रसाञ्जन। शोणि त ताम्र। ईश्वर रस। जारितलौह पारद गन्ध तार्क्ष स्वर्णमाचिक अभ्र हिङ्गुल कुङ्कुम पीखराज मणि शीष पित्तल विडङ्ग त्रिफला हिङ्गु यमानी जीरकं कृष्णजीरकं पियालफलं वचा कर्कटशृङ्गी मरिच पिप्पली गजपिप्पली चवी दुरालभा चि त्रकमूल एषां प्रति समभाग। आर्द्रकरसेन भाव्य।

**एकादशेन्द्रियम्** । क्ली। श्रोत्रत्वक्चक्षूरस नाघ्राणवाकपाणिपायूपस्थपादमन स। एषु प्रथम पञ्चज्ञानेन्द्रिय, अन्यच कर्म्मेन्द्रिय। सु शा १अ।

**एकादिवीरः** । पु। एकवीरवृचे। वै निघ।

**एकान्तः** । पु। यदवधारणीच्यते। यथा— "त्रिवृद्विरेचयति मदनफल वामयतीति।" सु उ ६५अ। [वै निघ.।

**एकाष्ठी** । स्त्री। कार्पासी। कार्पासबीजकोषे।

**एकाष्ठीका** । स्त्री। पाठायाम्। आकनादि, निमुका। वै निघ.।

**एकाष्ठील.(ला)** पु,स्त्री। वकवृचे। अम। हि डहडील, सरी। भा पू १भ। (ला) पाठाया। र.मा। रा नि व ६। वनतिक्तिकायाम्। मे ल चतुष्क। पुष्पवृचभेदे। भा.पू १भ। See अगस्त्य।

**एकाह्वा** । स्त्री। एतत्पर्य्यायां गवि। अम.।

**एकाक्षः** । पु। काके। त्रि। एकनेत्रे। काणा। अच। [—हिमं पित्तघ्न वातश्लेष्मकृच। मद.।

**एकैषिकतैलम्** । क्ली। तन्नामकतैले। गुणा

**एकैषि(कोशि)का** । स्त्री। वकपुष्पवृचे। पाठायाम्। आकनादि। त्रिवृतायाम्। "एकै षिकाजशृङ्गी च"। सु सू ३६अ चि १७,१८अ। तत्तैल मधुरम् अतिशीत पित्तहर वातकोपन श्लेष्मवर्द्धनञ्च। सु.सू ४५अ। [हाड्मूल। वै निघ।

**एकैषी** । स्त्री। पाठाया। आकनादि। मं प

**एकोशि(षि)का** । स्त्री। पाठायाम्। आक नादि। र मा। वकवृचे इति केचित्।

**एड** । त्रि। वधिरे। काला। अम।

**एड़क (कारव्यः)** । पु। पृथुशृङ्गमेषे। ভে ড়া। पशु। वनच्छगले। चिका। 'एडका पृथुशृङ्ग स्नाभेद पुच्छस्तु दुम्बक। एडकस्य पल श्रेय मेषामिषसम गुणै। मेद पुच्छोद्भव मासं हृद्य वृष्य श्रमापहम्। पित्तश्लेष्मकर किञ्चिद्वात व्याधिविनाशनम्। भा पू १भ मासव.। हणविशे षे। হোগলা। सु चि ७अ। मञ्जिष्ठाया। च।

**एडकघृतम्** । क्ली। एड़कनवनीतोत्थघृते। गु णा —अतिगुरुलघ्वन्यं सुकुमाराणाम्, बुद्धिपाट वकरं बलकरञ्च। रा नि व १५।

**एडका** । स्त्री। मेषा। ভেড়ী। अ टी रा।

**एडगज. (जा)** । पु, स्त्री। चक्रमर्द्दवृचे। চাকন্দা গাছ, চাটাকাটা इति च भाषा। रा नि व ५। भा पू १भ सोमराजतैले। च सू. ३अ। वन्यैलायां। वन এলাচ। च द कुष्ठ चि।

**एडमूक** । त्रि। वधिरे। वाकश्रुतिवर्ज्जिते। काला बोबा। मे कचतुष्क।

**एडहस्ती** । पु। चक्रमर्द्दे। চাকন্দা গাছ।

**एडकः** । त्रि। वधिरे। मे।

**एणः** । पु। हरिणे। रा नि व.१९। कृष्णमृगविशे षे। कृष्णसार हरिण। हि करीसाइलड़रिण। अयं जङ्गालजातीय। अस्य मांसगुणा —कषाय मधुर हृद्य रक्तपित्तकफवातघ्न रुचिकर धारकं बल्यं। सु सू.४६अ। भा पू १भ। विशेषतो ज्वरे प्रशस्तमिति चक्रपाणि। लघुशीतल वृष्य त्रिदोष हरं षड्रसञ्च रुच्यञ्च। रा नि व १७। "शृङ्गिना हरिण श्रेष्ठ बल्यो रोचनदीपन। त्रिदोषघ्नो लघु पाके मधुरी ज्वरिणा हित॥ चते चयार्त्ती पाण्डुरोगकनिपीडिते। कामयामातुराणा च एणमास सुखावहम्॥" अत्रि २०अ।

**एणक:** । पुं । हरिणे । श.र. । कृष्णसारे ।

**एणीदाह:** । पुं । सन्निपातज्वरविशेषे । लक्षणं—"परिधावतीव गात्रे रुक्पात्रे भुजङ्गपतङ्गहरिणगण । वेपथुमत' सदाहस्यैणीदाहज्वरार्त्तस्य ।" भा.म.१भ. । [See सर्पः ।

**एणीपद:** । पुं । मण्डलिसर्पे । सु कल्प.४अ ।

**एणीपदी** । स्त्री । असाध्यलूताभेदे । सु.कल्प. ८अ. । See लूता ।

**एत:** । पुं । हरिणे । श र. । घोटके ।

**एतन:** । पुं । निश्वासे । हे च ।

**एता** । स्त्री । हरिणाम् । वै निघ ।

**एधतु:** । पु । पुरुषे । [निघ. । See एरका ।

**एरकम्** । क्ली । शोगलतृणे । হোগলা । वै.

**एरका** । स्त्री । गुन्द्रातृणे । तृणविशेषे । হোগলা । स मोर्थीतृण । च.सू.२७अ.। गुणा.—हिमा शुक्रवृद्धिकरी चक्षुष्या वातकोपना। मूत्रकृच्छ्राश्मरी दाहपित्तशोणितघ्नी च । रा.नि व.८। शीता वृष्या चक्षुष्या वातकोपनी मूत्रकृच्छ्राश्मरीदाहपित्तशोणितघ्नी च । भा.पू १भ. ।

**एरङ्ग: (ङ्गी)** । पुं, स्त्री । मत्स्यभेदे । অরঙ্গা মাছ, এলেং মাছ, বামকড়া । हि अरङ्गा । गुणा:—मधुर: स्निग्ध: विष्टम्भी शीतल गुरुश्च । भा.पू.१भ.मत्स्यव. । मञ्जिष्ठायाम् । च. ।

**एरण्ड:** । पुं । Castor oil plant. (Ricinus communis.) स्वनामख्यातवृक्षविशेषे । ভেরেণ্ডা গাছ । हिं एरण्ड, रेंडि । तें आमिदपुचेट्टु । एरण्ड. त्रिविध: स्थूलशुक्लरक्तभेदेन गुणा. —मधुरोष्ण: गुरु.शूलशोथकटिमूत्रबस्तिशूलशिर: शूलोदरज्वरब्रध्नश्वासकफानाहकासकुष्ठामदोषवातहरश्च । तत्कोमलपत्रं गुल्मबस्तिशूलकफवायुकृमिहृद्घ्नम् । तन्मज्जगुणा:—मलभेदक: वातकफोदरघ्नश्च । भा.पू १भ.गुड्व । श्वेतैरण्डस्य मूलगुणा.— शूलवायुकफनाशित्वं शुक्रजनकत्वं । आमवातनाशित्वं अतिदीपनत्वं पित्तकोपनत्वञ्च । राज । श्वेतादीनां गुणा. स्वस्वपर्याये मृग्या: ।

**एरण्डक:** । पु । एरण्डे । भरत. ।

**एरण्डजम्** । क्ली । एरण्डतैले । वा. ।

**एरण्डतैलम्** । क्ली । Castor oil. एरण्डबीजोद्भवतैले । प्रा.एरतेल । ভেরেণ্ডার তৈল । हि रेंढिका तेल । गुणा:—मधुरगुरुश्लेष्मवर्द्धकत्वं वातरक्तगुल्महृद्रोगाजीर्णज्वरघ्नत्वञ्च । राज । ईषत्तिक्तं ईषत्कटुकं रेचकं गुल्मानिलकफोदरमुष्कवृद्धिविषमज्वरकट्यादिशोथरुजश्च जयेत् । तीक्ष्णोष्णं पिच्छिलं विस्रमिति रक्तैरण्डजतैलगुणा । वा टी. हेमा तैलव । एरण्डतैलं क्रिमिदोषनाशनं वातामयघ्नं सर्व्वाङ्गशूलघ्नं । कुष्ठघ्नं स्वादु रसायने श्रेष्ठं पित्तकोपनं अतिदीपनञ्च । रा नि व.१५। "एरण्डज घनञ्चापि शीतमेव सदुस्तरं । हृद्बस्तिशूलाद्यूरुशूलानाहविबन्धनुत् ॥ तैलमेरण्डजं बल्यं गुरूष्णं मधुरं तथा । तीक्ष्णोष्णं पिच्छिलं विस्रं तैलमेरण्डसम्भवम् ॥ अत्रि.१४अ ।

**एरण्डतैलमूर्च्छा** । स्त्री । मूर्च्छाद्रव्याणि— मञ्जिष्ठा मुस्तकं धान्य त्रिफला जयन्तीपत्रं बालकं वनखर्ज्जूरी वटशुङ्गा हरिद्रा दारुहरिद्रा नलिका केतकी (কেয়ার নামান) दधि काञ्जिकञ्च । हरिद्रादिपर्य्यायेण पूर्व्ववत् मूर्च्छा कार्य्या ।

**एरण्डपत्रविटपा (त्रिका) (त्री)** । स्त्री। क्षुद्रदन्तीवृक्षे । रा नि व ६ ।

**एरण्डफला** । स्त्री । क्षुद्रदन्तीवृक्षे । रा.नि व.६ । भा.पू.१भ. ।

**एरण्डमूलम्** । क्ली । एरण्डशिफायां । चर विषमज्व.चि.' एरण्डमूलसिद्धं वा ।"

**एरण्डबीजम्** । क्ली । एरण्डफले ।

**एरण्डशिफा** । स्त्री। एरण्डमूले । भा.बा.व्या.

**एरण्डसप्त(द्वादश)क:** । पु । क्वथविशेषे । अत्र चारादीनां माषचतुष्टयं प्रक्षेप्यम् । माषमानं द्रव्यात्कर्षाष्टादिक: । प्रक्षेप माषिक. क्वाथानां तथा माषिकं हिङ्गुमिश्रणं अत्याधानं शाणिकान्। इति परिभाषानियमात् । पृश्निपर्ण्यादयश्चैका वाश्लिया, अन्या कल्कीपत्रतुल्यदीर्घपत्रा च । चक्र. शूल चि. । এরণ্ডমূল, বেলছাল, চাকুলিয়া, সিংহপুচ্ছী চাকুলিয়া, ছোলঙ্গমূল, শালপর্ণি, গোক্ষুর প্রত্যেকে ২০ রতি । যবক্ষার, হিং, সৈন্ধব, এরণ্ডতৈল প্রত্যেকে ১ মাষা । ইতি एरण्डसप्तक. । এরণ্ডবীজ, এরণ্ডমূল, বৃহতী, কন্টিকারী, গোক্ষুর, শালপানি, চাকুলিয়া,

মৃণালী, মাষাণী, ডানকুনী, সিংহপুচ্ছীচাকু লিয়া,খাগড়ামূল প্রত্যেকে ১৩।০র। প্রক্ষেপ যবক্ষার ৪ মা । एरण्डवादक्क ।

**एरण्डा** । स्त्री । वृहद्दन्तीवृक्षे । मद व १ । पिपपल्याम् । श च ।

**एरण्डादि** । पु । मदादिद्रव्यवर्गे । यथा— "एरण्डशारिवाद्राक्षा शिरीषश्च प्रसारणी । माषस्वाप्यपर्णिन्यौ विदारीकन्दकेतकी । एरण्डादि गणो ह्येष वातपित्तविकारनुत् ॥" रसचन्द्रिका । এরণ্ডমূল, অনন্তমূল, কিসমিস্, শিরীষ, গন্ধভাদুলিয়া, মুগানী মাষাণী, ভুঁইকুমড়া, কেতকীমূল প্রত্যেকে ১৮ ব ।

**एर्वारु (रुका)** । पु, स्त्री । कर्कटीलतायां । কাঁকুড় বা ফুটী গাছ । हि फुट । तै नक्कदोस । श्वीमकर्कटी । विज र । सा महद्दवुद्रभेदेन द्विविधा । गुणा —पित्तहरी शीतला मधुरा मूत्ररोधघ्नी रुचिकरी सन्तापमूर्च्छाहरी च । अति सेवनात् वालकोपकरी च । रा नि व ७ । शीतला रुक्षा मधुरा ग्राहिणी गुरु । आमा सा रुच्या पित्तघ्नी च, पक्वा तृष्णाग्निपित्तकरी च । भा पू १म शा व । कोमलैर्वारुकं तिक्तं लघु स्वादति गूवलम् । शीतं रुच्यं रक्तपित्तमूत्रकृच्छ्रास्रदोषजः । तत्पक्वं पित्तलं चाग्निदीपनञ्च तृपापहं । उक्तं त्रिदोषशमनं क्लमिदाहहरं मतम् । गद्दे बीजन्तु तच्छैत्यमुक्तं पित्तकरं मत । कफवायुर्विनाशकरं शीतमायुर्लिङ्गैर्जने । क्षुद्रमैर्वारुकं शीतं मधुरं रुचिकारकं । कासपीनसकारि स्यात् पाचकमग्निपित्तहं । आध्मानवायोः शमनं । वै निघ । विलिप्तगमने । [र मा । भेष घुदरी चि ।

**एर्वारुकम्** । क्ली । कर्कटिकफले । কাকুড় ।

**एर्वारुतैलम्** । क्ली । कर्कटीबीजतैले । কাঁকুড়বীজের তৈল । गुणा —विभीतकतैलगुणम् । वातपित्तघ्नं केशं प्रशमकरं गुरु शीतलञ्च । वा तैल व ।

**एल.** । पुं । एलायां । एलवालुके । सि यो भ रोच चि शीतक्ष । "राक्षैलवद्धिङ्गुलवर्णोत्तमामा ।" च द वात ज्व रावादि ।

**एलक.** । पुं । मेषे । रा नि व १८ ।

**एलङ्ग.** । पु । मत्स्यविशेषे । रायकदा । दाग्र शौंडा, এলঙ্গা । गुणा —मधुरो वृष्य ग्राही कफवातघ्न मेधाग्निपुष्टिकर शीतल गुरुश्च । रा. नि व १८ ।

**एलवालम्** । क्ली । एलवालुके । भा म ४भ. ने री चि सामान्याञ्जने । 'सैन्धवं चैलवालम् ।"

**एलवालु (कम्)** । क्ली । Name of a perfume, a red powder sold under those names, seed of some plant. स्वनामप्रसिद्धगन्धद्रव्यविशेषे । अम । श र । कङ्कोलसदृश कुष्ठगन्धि । भा म १भ । নালুকা এলাবালুক । हि एलवा । मं कालंगडली । तैं क्रतुरखुडमचेट्टु । गुणा —कटुपाकं कषाय लघु शीतलं कण्डूकुष्ठक्रमिघ्न तृष्णाच्छर्दिकफपित्तरक्तमूत्रहर । भा पू १म । मद व ३ । अगुरु कषाय कफवातनुत् मूर्च्छाज्वरदाहघ्न रोचनञ्च । रा नि व ४ । वा सू १५अ रोधादि । कुष्ठघ्न क्रमिघ्न विषघ्न हृद्रोगहरञ्च । प मु । 'सैलवालुपरिपेलवमोचा ।" তেজবল इति च मू ४अ । वालके । वाना । वै निघ २भ र.पि चि दूर्वाद्यघृते ।

**एला** । स्त्री । Cardamom the seed of Elettaria cardamomum स्वनामख्यात पण्यद्रव्ये । এলাইচ । हि इलाँचीपूरबी । मं एलची । तैं यवडुलकि, एलुकचेट्टु । एला द्विधा —सूक्ष्मा स्थूला च । सूक्ष्मा गुजराटी, स्थूला च वडएलाचि इति भाषा । एतदुभयगुणा —शीत लतिक्तोष्णसुगन्धि पित्तघ्न कफघ्न हृद्रोगकरं मलाग्निवान्तिपुस्लघ्न । रा नि व ६। पित्तकफनाशिल शूलकीलवद्धतावणाच्छर्दिवायुनाशिलम् । राज । सूक्ष्मैलाविशेषगुणा —मूत्रकृच्छ्रनाशिल कफश्वास कासार्शीहरत्वञ्च । स्थूलैला कटुकी पाकी रसी चानलकृल्लघु । रुचोष्णा श्लेष्मपित्तासकण्डूश्वासतृषापहा । हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत् ॥ भा पू १भ । नील्याम् । [व ४ ।

**एलागन्धिकम्** । क्ली । एलवालुके । रा नि.

**एलादिगुडिका** । स्त्री।रक्तपित्ते हिता। मधुना तोलकद्वय मत्स्य। एलापत्रत्वचोऽर्द्धाचा पिप्पल्यर्द्धपल तथा । सितामधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिता । सचूर्णं मधुना युक्ता गुडिका कारयेद्भिषक् ॥ च द, । रस र. । এলাবীজ, তেজপত্র,

গুড়ত্বক্ প্রত্যেকে ১ তো. পিপুল ৪ তো শর্করা,যষ্টিমধু পিণ্ডখর্জুর, দ্রাক্ষা প্রত্যেকে ৮ তো সম্পূর্ণ মধুনা গুড়ী কার্য্যা। সা কৌ।

**एलादिगणः** । पु । एलादिद्रव्यवर्गः । स च एलायुग्मतुरुष्क कुष्ठफलिनी मांसी जल ध्यामकम् क्का चौरक चोच पत्र तगरस्थौलेयजातीरस शुक्ति व्याघ्रनखामरदारुगुरुश्रीवासककुङ्कुमचण्डा गुग्गुलु देवधूपखपुरपुन्नागनागाह्वयात्मक । गुणा —वात कफघ्नो विषघ्नो वर्णप्रसादन कण्डूपिटिकाकोठ घ्नश्च । वा सू.१५अ. । वा टी हेमा ।

**एलादिचूर्णम्** । क्ली । छर्द्यधिकारे । च.द. भैष । पाठ —'एलालवङ्ग मरिचं शुण्ठी पिप्पली नागकेशरं । यथोत्तर भागवृद्धा चूर्णन्तु सितया समं ॥" रस र राजयक्ष्म चि. ।

**एलादितैलम्** । क्ली । वातव्याधौ । तिलतैल ४ श. एलादीनां कल्क मिलितशरावमित दुग्ध १६ श दधि १६ श वाट्यालककाथ १६ श वाट्यालकं १२॥०श. जल ६४ श शे १६श. । एला सुरामांसी सरलकाष्ठ शैलजं देवदारु रेणुकं चौरपुष्पी शटी जटामांसी चम्पकली नागकेशरं ग्रन्थिपर्णं गन्धरस खट्टाशी तेजपत्रम् उशीरमूल चन्दन कुन्दुरुखोटी नखी बालक गुडत्वक कुष्ठ कालागुरु मुस्तक सामुद्रकर्कट श्वेतचन्दन मञ्जिष्ठा जातीफल कुङ्कुम पिण्डिद्रपुष्प शिलारस अगुरु एषां प्रति २ तो. । च.द. ।

**एलादिमन्थ.** । पु । यक्ष्मरोगे । एलादीनां (एला यमानी आमलक हरीतकी विभीतकं खदिरसार निम्ब पीतशाल शाल विडङ्ग भल्लातकास्थि चित्रकमूल त्रिकटुक मुस्तक पर्पटी) प्रत्येकं ८ प. एकत्र १५ श. जलेन साधयित्वा ३॥० शरावावशिष्टे क्वाथ वस्त्रपूतं ग्राह्य । तत्र घृत (१२प) विपाच्य पाकशेषे शर्करायां २०प वंशलोचनायां ६ प मधुन १२प प्रक्षिप्य मन्थदण्डे नालोड़येत् । च द रा.य.चि । इयं वाभटीका प्रक्रिया ज्ञेया । मतान्तरे तु एलादीनां प्रत्येकं २ प. ६ तो. ८ र. जलं ६४ श. ।

**एलानम्** । क्ली। फलविशेषे । নারেঙ্গা লেবু । मे हिरवेकत्व । गुणा.—' आममेलानमत्यं साम्बर

चौण गुरु स्मृतम् । वातघ्नचैव सम्मीक्तं पक्वं तक्कौतल मधु । बलकृद्वातपित्तघ्नमपिमि परिकीर्तितम् । रा नि.व ११ ।

**एलापर्णी** । स्त्री । वृक्षविशेषे । কাঁটা আর কুশী, এলানি । रास्नायाम् । भा पू १भ ।

**एलाफलम्** । क्ली । एलवालुके । रा.नि व ४। पु । मधूकवृक्षे । মহুল গাছ । वै.निघ. ।

**एलावालुकम्** । क्ली । एलवालुके । रा.नि व ४ । कुष्ठगन्धिफलसदृशे । कटुफलसदृशे । सु. सू ३०श ।

**एलावूः** । स्त्री । अलाब्वाम् । লাউ । भ गी ।

**एलायुग्मम्** । क्ली । एका सूक्ष्मा अन्या स्थूला च । ছোট এলাচ, বড় এলাচ । वा सू १५श. एलादि । 'एलायुग्मतुरुष्ककुष्ठफलिनी ।"

**एला।लु (कम्)** । क्ली । एलवालुके । रा नि व.६ । भा पू १भ. ।

**एलाह्वम्** । क्ली । एलवालुके । रा नि व ४ ।

**एलीका** । स्त्री । सूक्ष्मैलायाम् । रा नि व.६ ।

**एलीयः** । पु । एलवालुके । वै.निघ ।

**एलुकम् (काख्या)** । क्ली,स्त्री । एलवालुके । सु.चि.१८श ।

**एल्वम्** । क्ली । एलवालुके । सु.चि १८श ।

**एल्ववालु(ल्वालु)कम्** । क्ली । एलवालुके । रा नि.व ४ । मद.व.२ ।

**एषणः** । पु । सप्तकीटके । वै निघ ।

**एषणिका** । स्त्री । स्वर्णादिपरिमाणतुलायाम् । निरुक्ति । श्रम. ।

**एषणी** । स्त्री । Probe. व्रणमार्गानुसारिद्रव्यकायाम् । सा च गण्डूपदाकारमुखी । नाराचवदवक्राग्रा गण्डूपदमुखेविधौ । भेदनार्थेपरा दृष्टामुखाग्रमूलनिविष्टखा । इति । सु सू ८श । गुणादि । निरुक्ति । 'एषणीव्रणमार्गानुसारिणीवृ स्नाभिदि ।" मे थनिक ।

**एष्यः** । त्रि । एषणार्हे । माघादौ रोगे ।

**एष्या** । स्त्री । आमलकीवृक्षे । रत्ना. ।

# ऐ

**ऐकमफम्** । क्ली । गर्द्दभीष्टते । सु. । See गर्द्दभीष्टतम् । वि । एकखुरसम्बन्धीये ।

**ऐकाह्निक:** । वि । एकदिनसम्पन्ने । एक दिनान्तरभवे । [See अन्येद्युष्क. ।

**ऐकाहिकज्वर:** । पु । एकदिनान्तरगतज्वरे ।

**ऐङ्गुद:** । पुं । इङ्गुदीवृक्षे । क्ली । इङ्गुदीफले । अम. । भैष ।

**ऐण:(णेय)** । वि । एणमृगचर्मादौ ।

**ऐणेयकम्** । क्ली । एलवालुके ।

**ऐन्दवी** । स्त्री । सोमराज्याम् । रा नि व.४ ।

**ऐन्द्र:** । पु । देवसर्षपवृक्षे । क्ली । मूलविशेषे । वन आदा । गुणा:—कटूष्ण रुचिबलाग्निकरश्च । रा.नि व.८ ।

**ऐन्द्रयव:** । पु । इन्द्रयवे । मद व.१ ।

**ऐन्द्रलुप्तिक:** । वि । इन्द्रलुप्तरोगविशिष्टे । टेको । [राधानगना । मद.व.१ ।

**ऐन्द्रवारुणी** । स्त्री । इन्द्रवारुणीलतायाम् ।

**ऐन्द्रि:** । पु । काके । मेदिनी ।

**ऐन्द्री** । स्त्री । स्थूलैलायाम् । मूलैलायाम् । रा. नि.व ६ । वै निघ २भ.ताम्रीमादिचूर्णे । इन्द्रवारुण्याम् । नागानगना । प.सु.रा.नि.व १,च.सू.४च । गौरक्षकर्कट्याम् । च सू.४च.प्रजास्थापने । भा.च्छ.।

**ऐन्द्रीफलम्** । क्ली । इन्द्रवारुणीफले । नाथ लगनाएन । च.द च मा वि. । "पक्केन्द्रीफलमूत्र जम ।"

**ऐन्द्रीरसायनम्** । क्ली । रसायनविशेषे । अत्र ऐन्द्री (गोरक्षतण्डुल), मत्स्याक्षी (मछ्छीक्ष-धून), ब्रह्मसुवर्चला (सुवर्चला), शङ्खपुष्पी (डानकुनी), ऐन्द्रादिविषाणानां प्रत्येक षवकर कर्षं सर्वं यवरसे विलम्ब लिम पृतस्य च पलं । च चि,१च. ।

**ऐभी** । स्त्री । हस्तिघोषालतायाम् । रा नि व.१ ।

**ऐरावत:** । पुं । लकुचवृक्षे । नागरङ्ग । नाग रङ्गे । नारांगा लेबू । मे.नचतुष्क । रा नि व. ११, प सु. । इन्द्रधनुषि । क्ली । खर्ज्जूरे । स्वाकर बीरे । रत्ना. । ऐरावतफले । तरफल अम्लरक्तपित्त-हृद्दन्तगदघ । सु.सू ४६च. ।

**ऐरावतक:** । पुं । हस्तियुक्ता । हातिशुंडे । च.चि.३च. । नागरङ्गवृक्षे । वै निघ. ।

**ऐरावतपदी** । स्त्री । काकजङ्घायाम् । महा ज्योतिष्मतीलतायाम् । बड लताफटकी ।

**ऐरावती** । स्त्री । वटपत्रपाषाणभेदकृपे । बड पाथरकुचि । रा नि.व ५ । नागरङ्गवृक्षे । भा । गुणा:—"ऐरावती रसे पाके लघ्वोष्णा च सुगन्धिका । वातं कास श्वासकर्ज नाशयेदिति कीर्त्तिता ।" वै निघ । [नि व ५ ।

**ऐरिणम्** । क्ली । सैन्धवलवणे, पांशुलवणे । रा.

**ऐरेयम्** । क्ली । मद्ये । वै.निघ. । एलवालुके । अम ।

**ऐर्वारु:** । पुं । कर्कटीविशेषे । बड़ काँकुड़ । मद.व ७। च.द प्रदर.चि ।See एर्वारु., कर्कटी ।

**ऐलवालुकम्** । एलवालुके । अ र. ।

**ऐलेय(क)म्** । क्ली । मलुकायाम् । एलवालुके । अम । "ऐलेयविश्वधान्याकम् ।" चि यो., च.द.र. पि.चि.वासाखण्डकूष्माण्डे ।

**ऐल्वालु** । क्ली । एलवालुके । मद व.३ ।

**ऐशमूलम्** । क्ली । खाइमीमूले । ईश्वरीमूलि-काय मूल । रस.र वाल.चि. ।

**ऐशान:** । पु । ईशानकोणभववायौ । स च कटुक. शीतलश्च । भा. ।

**ऐश्वर्य्यम्** । क्ली । श्वेतधुस्तूरके । वै निघ. ।

**ऐषिका** । स्त्री । पाठायाम् । चिरतायाम् । वै. निघ । [मद्य । क्टा. ।

**ऐक्षवम्** । क्ली । इक्षुविकारे, गुडादौ । इक्षु-

**ऐक्षवी(सुरा)** । स्त्री । इक्षुरसकृतमद्ये; तद्गुणा:—सौरभं धतिमादकश्च । रा नि.व.१५ ।

# ओ

**ओक** । पु, क्ली कस)। गृहे । आश्रये । अम ।

**ओकणः** । पु । केशकीटे । उकुन । अ र ।

**ओकणि (णी)** । पु, स्त्री । उकुणे । अ र ।

**ओकोदनी** । स्त्री । यूके । उकुण । अ र ।

**ओक्कणी** । स्त्री । उकुणे । अ र ।

**ओज (स)** । क्ली बल । मे मविक तेजसि । रसादिसप्तधातुसारभागधातुविशेषे । गुणा —स्वशरीरस्थितत्व स्निग्धत्व शीतलत्व स्थिरत्व शुक्लवर्णत्व कफात्मकत्व शरीरबलपुष्टिकारत्वञ्च । हृदि तिष्ठति यच्छुद्ध रक्तमीषत्सपीतक। ओज शरीरे सङ्ख्यात तन्नाशान्नाशमृच्छति । वै निघ। अष्टविन्दु प्रमाण तदीयद्रव सपीतक। अग्निसोमात्मकत्वन द्विरूप वर्णितञ्च तत्॥ धर । ओजश्च तेजोधातूना शुक्रान्तानां पर स्मृतम् । हृदयस्थमपि व्यापि देह स्थितिनिबन्धनम् ॥ वा । दीप्तौ । मे ।

**ओजस्कर** । त्रि। ओजोधातुवर्द्धके।

**ओडिका (डी)** । स्त्री । नीवारे ।উড়িধান্য । प सु । गुणा —ओषधी रूक्षा कफवायुवृद्धिकारी पित्तनाशिनी च । राज । See नीवार ।

**ओड्र (क)** । पु। The China rose (Hibiscus mutabilis) जवाकुसुमवृक्ष। জবাফুলের গাছ। ই ওড্ফুল। म जासविन्द। रा नि व १०। गुणा —सग्राही केशहितश्च । भा पु १भ पुष्पव । मलमूत्रसञ्जनरञ्जनश्च । राज । कटुकषा इन्द्रलुप्तहर विस्फोटजन्तुजनक सूर्या राधनश्च । रा नि व १०। मात्रा ३मा। [नि व १०।

**ओड्र(ड्रा)काख्या** । स्त्री । जवापुष्पवृक्ष। रा

**ओड्रपर्य्याय** । पु। सूर्यकान्तपुष्पवृक्षे ख्यात। जवा। अम । [फुल । प सु । See ओड्र ।

**ओड्रपुष्पम्** । क्ली । जवाकुसुमे । डरूडवा

**ओड्रपुष्पा** । स्त्री । जवाञ्च । वै निघ.।

**ओडापलद्धया** । स्त्री । गोरचमुण्डाम् । वै निघ । [वनविडाल । वै निघ ।

**ओतु** । पु स्त्री। विडाल। বিড়াল। अम ।

**ओद.** । पु । अम।

**ओदन** । पु । अद्रवे सिकथे।" स च मण्डा दिभ्यो गुरु । वा टी हेमा। क्ली। भक्ते । प सु । अन्न। रा नि व २०। পিটুলি । मा की ज्व वलि।

**ओदनपाकी** । पु । नीलझिण्टयाम् । च चि ३भ चन्द तैल ।

**ओदना((निका) (नी)** । स्त्री । महासमङ्गायाम् । বেলেড়াবিশেষ । वाट्यालके । বেড়ো। रा नि व ४ ।

**ओदनाह्वया (ह्वा)** । स्त्री । महासमङ्गायां। रा नि व ४।वाट्यालके हि खिरिंटी। मद व।।

**ओल (ल्ल)** । पु। स्वनामख्यातकन्दशाके। ওল গাছ। र मा भा पु १भ.। गुणा —अग्निकर कफघ्न रुचिकार लघु अर्शसि पथ्य । सायकन्द सु दीपन इति । राज। See सूरण । त्रि बा ट्टँ । मी लहिक ।

**ओल(ल्ल)कन्द** । पु । सूरणे । ওল। र मा। वनौल्ल । वृ। ওল। पानीयभक्तवयाम्।

**ओष** । पु । दाहे । मीष ओष इति पर्याय शब्द । अम भरत ।

**ओषण (णि)** । पु । कटुकरसे। शाक। दे च । (णी) पुरातिशाके । পুঁইশাক। दर —कफवायुनाशित्वम् । राज । पुनर्नवायाम् ।

**ओषधम्** । क्ली । औषधे।

**ओषधि** । स्त्री। फलपाकान्तद्यादौ कदली धान्यादिके । दे च। द्रव्येषु । तानि पुनरौषधा तास्र द्विविधा स्थावरा जङ्गमाश्च। तासां स्थाव रा चतुर्धा यथा—वनस्पति द्रुम, वीरुत् औ षधिश्चेति। तासु अपुष्पफलवान् वनस्पति पुष्प फलवान् द्रुम प्रतानवती लता, फलपाकान्तिका च ओषधि । जङ्गमा अपि चतुर्धा जरायुजाण्डज स्वेदजोद्भिज्जभेदम। तत्र पशुमनुष्यव्यालादयो जरायु जा । खगसर्पसरीसृपप्रभृतयोऽण्डजा । कृमिकीटमत्कुणादय स्वेदजा । मण्डूकादय उद्भिज्जा इति। सु सू १भ.।

**ओषधिगर्भ.** । पु । रासायनिकौषधिविशेषे। सा सोमसमवीर्य्या महौषधय इति शब्द

मासाश्च सोमवल्लिजयाणोःस्तुतयः शास्त्रे कथिताः । तासाष्टादशधा—अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रा अतिच्छत्रा करेणुः अजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्चला श्रावणी महाश्रावणी गोलोमी अजलोमी महावेगवती चेति । एताश्चार्बुदगिर्य्यादिषु लभ्याः—"आसाञ्च याः क्षीरवत्यस्तासां क्षीरं कुडवमितं सकृदेव उपयुञ्जीत । यास्तु अक्षीरा मूलवत्यः तासां अरत्निप्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे । श्वेतकापोती समूलपत्रा भक्षयितव्या । गोनसाजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतञ्च सकृदेवोपयुञ्जीत । चक्रकायाः पयः सकृदेव । ब्रह्मसुवर्चला सप्तरात्रमुपभोक्तव्याः । भक्ष्यकल्पेन शेषाणां पत्रपलानि क्षीराढककथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत । सोमवदाहारविहारौ व्याख्यातौ, केवलन्तु नवनीतमभ्यङ्गार्थे शेषं सोमवदाभिगमादिति । अथासां पृथग्विज्ञानमुच्यते —मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी । पञ्चारत्निप्रमाणा या विज्ञेयाजगरी बुधैः ॥ निष्पत्रा कनकाभासा मूले द्व्यङ्गुलिसम्मिता । सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते ॥ द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलां । द्वारत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिं ॥ सक्षीरा रोमशा मृद्वी रसेनेक्षुरसोपमा । एवं रूपरसाचापि कृष्णकापोतिमादिशेत् ॥ कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा । एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा ॥ छत्रातिच्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे । जरामृत्युनिवारिण्यौ श्वेतकापोतिसमस्थिते ॥ कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः । कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी ॥ करेणुः स्फटक्षीरा कन्देन गजरूपिणी । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥ अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी । अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा ॥ श्वेता विचित्रकुसुमा काकादन्याः समा क्षुपा । चक्रकामोषधिं विद्याज्जरामृत्युनिवारिणीम् ॥ मूलिनी पञ्चभिः पत्रैः सुरक्तैः मृदुकोमलैः । आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी ॥ कनकाभा जलान्तेषु सर्व्वतः परिसर्पति । सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला ॥ अरत्निमात्रक्षुपका पत्रैरङ्गुष्ठसम्मितैः । पद्मोत्पलोपमाकारैः फलैराञ्जनसन्निभैः, श्रावणी महती ज्ञेया कनकाभा पयस्विनी ॥ श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा । गोलोमी चाजलोमी च रोमशे कन्दसम्भवे ॥ हंसपादीव विच्छिन्नैः पत्रैर्मूलसमुद्भवैः । अथवा शङ्खपुष्पी च समाना सर्व्वरूपतः ॥ वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा । एषा वेगवतीनाम जायते ह्यम्बुदक्षये ॥···देवसुन्दे इन्द्रवरे तथा सिन्धौ महानदे । दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला ॥ आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये । दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे ॥ काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् । करेणुस्तत्र कन्या च छत्रातिच्छत्रिके तथा ॥ गोलोमी चाजलोमी च महती श्रावणी तथा । वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते ॥ कौशिकीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्व्वतः । क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयं ॥ विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु । मलये नलसेतौ च वेगवत्यौषधी ध्रुवा ॥ कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तामुपोषितः । सोमस्यात्र वर्त्तेत फलं तावच्च कीर्त्तितम् ॥" इत्यादि । गुणाः—युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनं । कुर्य्युरेताः क्रमेणैव द्विसहस्रायुषं नरम् ॥ अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बरः । चरत्यमोघसङ्कल्पो नभस्युदुर्गमे ॥ व्रजन्ति पक्षिणो येन जलस्याश सौयदा । गतिः सौषधिसिद्धस्य सोमसिद्धगतिः परा ॥ सु चि ३०अ. । [वै निघ. ।

**ओषधी ।** स्त्री । ओषधी । भरतः । लघुश्चे ।

**ओषधीपतिः ।** पुं । कर्पूरे । वै.च. ।

**ओषधीशः ।** पुं । कर्पूरे । रुग. । [व.१८ ।

**ओष्ठः ।** पुं । दन्तच्छदे । उपरठोँट । रा.नि.

**ओष्ठधरः ।** पुं । ओष्ठे । ठोँट । [ग्र। मा नि.।

**ओष्ठपाकः ।** पुं । तन्नामकरोगविशेषे । ओष्ठ-

**ओष्ठपुष्पः ।** पुं । बन्धुजीवपुष्पवृक्षे । दाङ्गुनी गाछ । रा.नि.व.१० । See बन्धुजीवः ।

**ओष्ठप्रान्तः ।** पुं । सृक्कभागे । रत्न. ।

**ओष्ठफला (भा) ।** स्त्री । बिम्बीलतायाम् । तेलाकुचा । सं मौड़सौड़ली । वै निघ. ।

**ओष्ठरञ्जनी ।** स्त्री । ताम्बूले । पान । प.मु.।

**ओष्ठरोगः ।** पुं । ओष्ठाश्रितरोगविशेषे, ओष्ठ-

मयादी। वातजपित्तजश्लैष्मिकसान्निपातिकरक्तजमां सजमेदोजाभिघातजभेदादष्टविध। तत्र कर्कशत्वादिलक्षणा वातजा, पिडकाचितत्वादिलक्षणा पित्तजा, कण्डुमत्त्वादिलक्षणा कफजा, कृष्णपीत श्वेतत्वादिसर्व्वलक्षणयुक्ता सन्निपातजा, खवद्रक्त खर्ज्जूरफलवर्णत्वादिलिङ्गा रक्तजा, गुरुस्थूलत्वादिलक्षणा मांसजा, सर्पिमण्डसवर्णत्वादिलक्षणा मेदोजा, क्षतजातत्वादिलक्षणा अभिघातजा इति।

भा म ४भ मुखरो चि। "आलूपपिशितक्षीरदधि मत्स्यातिसेवनात्। मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषा कफोत्तराः॥ इति। मा नि। [पृ।

**ओष्ठा (ष्ठी)**। स्त्री। विम्बा। তেলাকুচা।

**ओष्ठाधरौ (रं)**। पु, क्ली। ओष्ठद्वये।

**ओष्ठोपमफला (लिका)**। स्त्री। विम्बिकायां। তেলাকুচা গাছ। हि कुन्दुरु। भा पू १भ।

—∞∞∞—

# औ

**औड(ड)म्बरम्**। क्ली। कुष्ठरोगविशेषे। मे। तस्य लक्षण—"रुग्दाहरागकण्डुभिः परीतं रोम पिञ्जरं। औदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत्॥" मा नि। ताम्रे। जटा। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औड्रपुष्पम्**। क्ली। जवापुष्पे। हे च।

**औत्सुक्यम्**। क्ली। उत्कण्ठायाम्। हे च।

**औदनिक.**। पु। सूपकारे। अम। [पिटके।

**औदरिक.**। त्रि। क्षुधिते। उदरमात्रपोषके।

**औदर्य्यम्**। क्ली। ताम्रे। मदनफले। उदुम्बरफले। [हे च।

**औदश्वित(त्क)म्**। क्ली। अर्द्धजलयुक्तघोले।

**औदुम्बरम्**। क्ली। ताम्रे। द्वारा। महाकुष्ठरोगविशेषे। गुणा —"पित्तेन पक्वोदुम्बरफलाक्ततिवर्णानि औदुम्बराणि।" सु नि ५भ। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औदुम्बरच्छद**। पु। दन्तीवृक्षे। वै निघ।

**औदुम्बरी**। स्त्री। ऋषिभेदे।

**औद्दाल(क)म्**। क्ली। स्वर्णवर्णे वल्मीककारि कीटकृतमधुनि। उद्देमधु। रा नि व १४। गुणा —कषायम् उष्णं कटु कुष्ठविषनाशि च। राज। राजनिघण्टौ तु भूमिं उद्दलनात् औद्दालकाभिधा कापलकीटा तैः वल्मीकसमीपे सञ्चितं मधु। "औद्दाला कपिला कीटा भूमिमुद्दलनात् स्मृता। वल्मीकास्तद्भवमर्मौद्दालकमुदीर्यते। कुष्ठादिदावर्त्तसम्बन्धि इदमेवेति।" रा नि व १४। "प्रायो वल्मीकमध्यस्था कपिला स्वल्पकीटका। कुर्व्वन्ति कपिलं स्वर्णं तत्स्यादौद्दालकं मधु।" इत्य स्वर्यं कुष्ठविषघ्नं कषायं उष्णमम्लं कटुपाकं पित्तकरञ्च। भा पू २भ मधुव।

**औद्दालकशर्करा**। स्त्री। औद्दालमधुकृतशर्करायां। सा गुणैरौद्दालमधुसदृशी। रा नि व १४।

**औद्भिज्जम्**। क्ली। पांशुलवणे। সোরা। रा नि व ६। क्षारिलवणे। [राज।

**औद्भिदम्**। क्ली। औद्भिदलवणे। সোরা।

**औद्भिदजलम्**। क्ली। उद्भिदी जाते जले। प्रस्रवसलिले। तस्य गुणा —मधुरं पित्तशमनं अविदाहि च। राज। लघु। रा नि व १४। "विदार्य्य भूमिं निम्नां यत् महत्या धारया स्रवेत्। तस्यमौद्भिदं नाम वदन्तीति महर्षयः॥ औद्भिदं वारि पित्तघ्नं अविदाह्यतिशीतलं। प्रीणनं मधुरं बल्यमीषद्वातकरं लघु॥" भा पू १भ वारिव। ववाद्यौद्भिदं पथ्यम्। मद.।

**औद्भिदद्रव्यम्**। क्ली। उद्भिद्य पृथिवीं जायते इत्युद्भित्। तत्र वनस्पतिलतावानस्पत्यौषधादिकम्। See च सू १भ वनस्पत्यादि।

**औद्भिदलवणम्**। क्ली। पांशुलवणापरनामधेयलवणे, यद्भूगर्भतः स्वयमुत्पद्यते। সোরা। हि यो यद चि चित्रगुडिकायां। च द महापञ्चघृते। गुणा —क्षारयुक्तं गुरु कटु स्निग्धं शीतं वातघ्नं। भा पू १भ ह व। वल्लन सूक्ष्मं लघु वातानुलोमनञ्च। मद व २। तीक्ष्णं उत्क्लेदजनकं क्षारयुक्तं कटु तिक्तं कोष्ठबद्धतानाशकञ्च। राज।

**औधस्यम्**। क्ली। पयदुग्धे।

**औनीतम्**। क्ली। चक्षुरोगविशेषे। सुश्रुते

नाभिष्यन्दियामग्रहणार्थ्मैवावर्ज्जनात् शुक्रं स्वस्था
नच्युत मेहने प्रतिहन्यते,तेन मूत्रकृच्छ्र भवेत्। तत
शोणित कुपित मेहने शूल जनयति । मेहनञ्च
क्लिन्न पक्क कण्डूमत्पिडकायुक्त मक्षिकावृत भवति,
स्वस्थानञ्च न प्रविशति । ज द ५२५ ।

**औन्दूवरम्** । क्ली । ताम्रे । भा म १म ।

**औपवस्तम्** । क्ली । उपवासे । लङ्घने । हे च ।

**औपसर्गिकः** । पु । सन्निपातादिरोगविशेषे ।
तस्य लक्षण —"कफोऽनुलोमवातेन यदि पित्तानुगो
भवेत् । स्वेदशैत्यादिभिर्जष्टस्तदा भवति मानव ॥
प्रतिलोम पुमनेन स्वास्थ्यमायाति तत्क्षणात्। औ
पसर्गिक एवाय सन्निपात उदाहृत ॥" वैद्यशास्त्र।

**औपस्थ्यम्** । क्ली । उपस्थेन्द्रियसुखे ।

**औपीनम्** । क्ली । चयचैवे । रा नि व २ ।

**औमीनम्** । क्ली। अतसीक्षेत्रे। [illegible]

**औरभ्र (क)** । पु । कम्बलभेदे । मेषे । हे
च । क्ली । मेषमांसे । [illegible] । म भेडी
कस्मात् । गुणा —मधुर शीतल गुरु विष्टम्भि ह
णञ्च । मेषसमूहे । ऊर्णावस्त्रे । रा नि व १७ ।

**औरिणम्** । क्ली । मृत्तिकालवणे । यवक्षारे ।
सोरा। वै निघ ।

**औरुबुकम्** । क्ली । एरण्डतैले । च द ।

**और्व्वम्** । क्ली । मृत्तिकालवणे । यवक्षारे ।
पांशुलवणे । रा नि व ६ ।

**औलम्** । क्ली । श्वेतशूरणे । वै निघ ।

**औलूकम्** । क्ली । उलूकसमूहे । जटा ।

**औशीरम्** । क्ली पु । बालके । वाला । चामर
दण्डे । आसने । त्रि । उशीरजे । मे रावक ।

**औषणम्** । क्ली । कटुरसे ।

**औषधम्** । क्ली । गणग्राम् । रसास औषध
मारणगणे । रोगघ्नद्रव्ये । ঔষধ । "वैद्यो व्याधि
हरेयेन तद्द्रव्य प्रोक्तमौषधम्' । अत्रि । औषध
पञ्चविधम् । यथा—रसचूर्णकषायावलेहकल्का ।
"तत्र पञ्चविधं प्रोक्त स्वसर्योगविभेदत । रसचूर्ण
कषायावलेह कल्कदलेपि:' तत्र पुन द्विविध
शोधनशमनलक्षण । तयो शोधनरूप वस्तिविरेक
वमनम् । कुपितदोषान् बहिर्निःसार्य्य रोगोपश
मन करोति । शमनरूप तैलघृतमधुरूप स्वस्थान
स्थितानामेव साम्यहेतु । वा टी भरत । तत्र
वातस्य वस्ति (गुदप्रणिधेयस्नेहादि) । पित्तस्य
विरेक (सुखपीत गुदमार्गेणान्त स्थितस्य नि
सारण) । कफस्य वमन (सुखेन पीते तेनैव दो
षस्य नि सारणम्) । शमन—वातस्य तैल, पित्तस्य
घृत, कफस्य च मधु । विन्ध्यशैलजानि औषधानि
क्रियाविधौ प्रशस्तानि तथा वनोपवनजानि। वल्मी
कश्मशानादिजानि न ग्राह्याणि । औषधीहरण
मन्त्रोऽप्यस्ति स्थानाभावान्नोक्त । औषधद्रव्याङ्ग
ह्यं यथा—खदिरादीना सार ,निम्बादीना त्वक,
दाडिमादीनां फल,पटोलादेश्च छद ग्राह्य । सार
स्यात् खदिरादीनामित्यादि । शार्ङ्गधरमते न्यग्रो
धादे त्वक् बीजकादे सार तालीशादे पत्र त्रि
फलादेश फल ग्राह्यमिति । कण्टगर्भमहामूलानां
वल्कल क्षुद्रमूलाना सर्व्वशो ग्राह्यमिति । अति
स्थूलजटायास्त्वच तथा सूक्ष्ममूलान सर्व्वशो ग्रा
ह्याणि । यत्र द्रव्याङ्गावयवो यादृशो निर्दिष्ट ,
तत्र तादृश एव ग्राह्य । यथामृतादिकपाथे
अमृतादीनां पत्रमेव ग्राह्यम् । अङ्गसामान्योक्तौ
मूलवल्कलम् "अङ्गेऽप्यनुक्ते विहितन्तु मूल मिति
वचनात्। विषयभेदे ऋतुद्रव्यग्रहणम्—शरदि
स्वरसौषध सर्व्वकार्य्यार्थं, विरेकवमनार्थं वसन्ते ।
शिशिरे मूलं, ग्रीष्मे पत्र, वर्षावसन्तयो त्वकन्दी,
शरदि क्षीर यथतपुष्प फलञ्च हेमन्ते सारञ्च ग्रा
ह्यम्। सामान्योक्तौ—उत्पाच, उत्पले नीलोत्पल,
शकृद्रसे गोमयरस , चन्दने रक्तचन्दन, सर्षपे सि
द्धार्थ , लवणे सैन्धव मूत्र गोमूत्रं, घृतदुग्धेषु ग
व्यमेव, चतुष्पदे स्त्री , पक्षिणि पुमान् वयस्य
लाङ्गलाना चर्म्मादि हित्वा ग्राह्यम् । मांसे कथिते
आज कौशचा ग्रहीयात । अनुक्ते ग्रहण यथा—
कालेऽनुक्ते प्रभात अङ्गेऽनुक्ते जटा भागेऽनुक्ते सा
म्य द्रवेऽनुक्ते जल । प म १ख । चूर्णलेपासवकार्य्ये
तु श्वेतचन्दन क्वाथप्रलेपे रक्तचन्दन ग्राह्यम् । भ
क्षणीयौषधविधाने—अजमोदोक्तौ यमानी, वास्य
प्रलेपे तु वचा ग्राह्या । भा ।

**औषधकाल.** । पु । औषधसेवनस्य समये ।
स च दशविध —"निर्भक्त प्राग्भक्तमधोभक्तं मध्यभ
क्तमन्तराभक्त सभक्त सामुद्ग मुहुर्मुहुर्ग्रास ग्रासान्त
रञ्चेति । तत्र निर्भक्त केवलमौषधमुपयुज्यते । प्रा
ग्भक्त यत्तु प्राग्भक्तमौपयुज्यते । अधोभक्त यद्भक्ते

# क

**कम्** । क्लो । जले । रा.नि.व १४ । सुखे । मे. । केशे । धर. । [पानपत्रे । च टी ।

**कंसः** । पुं, क्लो । कंसमाचिके (महाद्रावके) ।

**कमम्** । क्लो, पुं । तामवङ्गयोरुपधातौ, कास्य धातौ । कांसा । प.मु । आढकपरिमाणे (प्रश्न) । भा. । तैजसपात्रमात्रे । चिका. । [ई.च. ।

**कंसकाम्** । क्लो । पुष्पकासीसे । इदं श्वेतवर्णम् ।

**कसहरीतकी** । स्त्री । शोथाधिकारे । हरीतकी १०० शतं, दशमूलं प्रस्थकं ६प शती १३० माषा मिलित ६४प, वारि ५१२ प, (६४श.) शे. १२८ प. (१६ श.) पुरातनगुडः १०० प. । पक्वा सिद्धवह्नौ, शुण्ठीचूर्णं ८ तो. मरिचचूर्णं ८ तो. पिप्पलीचूर्णं ८ तो. यवक्षार. ८ तो. गुडत्वक् २ तो. तेजपत्र २ तो. एलाचूर्णञ्च २ तो. प्रक्षेपो देयः । मधु २ श. वा १६ प. । मतान्तरे क्वाथः ८ श । पाठः—"द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानाञ्च शतं गुडाच्च । लेहे सुसिद्धे च विनीय चूर्णं व्योष त्रिसौगन्ध्यमुपस्थिते च । प्रस्थार्द्धमानं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्, एकाभया प्राश्य ततश्च लेहात् शुक्ति निहन्ति श्वयथु प्रवृद्ध"-मित्यादि । सा.कौ. ।

**कंसास्थि** । क्लो । कास्यधातौ । कांसा । "कंसे तु कांस्यं कंसास्थि" । चिका । [च. ।

**कंसोद्भवा** । स्त्री । सौराष्ट्रमृत्तिकायाम् । वै.

**ककन्दः** । पुं । स्वर्णे । त्रुवा. ।

**ककारीमुखः** । पुं । केशे । रा.नि.व.१८ ।

**ककारपूर्व्वद्रव्यम्** । क्लो । ककारपूर्व्वकद्रव्येषु । तानि यथा—कटुकः, कालशाकं, कुष्माण्ड, कर्कटी, कर्कन्धुः, कर्कोटकः, कलिङ्गः, करमर्द्दः, करीरः, कतक, कशेरुः, काञ्जिकश्चेति रक्तपित्ते वर्ज्यम् । भा.म.र.पि.चि. ।

**ककुङ्गिनी** । स्त्री । ज्योतिष्मतीलतायाम् । नताफट्की । भा.म १भ । [राज ।

**ककुञ्जलः (ला)** । पुं,स्त्री । चातकपक्षिणि ।

**ककुण(न)कः** । पुं, क्लो । बालरोगविशेषे । See कुकूणकः ।

**ककुत् (द्‌ः)** । स्त्री, पुं, क्लो । वृषाङ्गे । षाँड़ेर झूँटि । प्राधान्ये । अम. । ध्वजे । मे । दर्व्वीकरसर्पभेदे । सु.कल्प.४अ. । See सर्पः ।

**ककुद्मती** । स्त्री । कटी । पाछा, नितम्ब । अम । त्रि । ककुद्विशिष्टे । [हृचे । हे च. ।

**ककुद्मान्** । पुं । ऋषभकवृषे । रा नि व.५ ।

**ककुन्दरम्** । क्लो । नितम्बगर्त्ताधिष्ठाने वैकल्यकरे पृष्ठवंशमर्म्मद्वये । मेरुदण्डोभयतः पार्श्वजघनबहिर्भागे ईषदधस्तस्य स्थानम् । तत्र स्पर्शाज्ञानमध.काये चेष्टोपघातश्च । सु.शा ६अ । ककुन्दरौ तु सर्व्वेषां स्यातां जघनकूपकौ । रा नि.व १८ । पु । अश्वविशेषे । गुणाः—"ककुन्दरः कटुस्तिक्तः ज्वरघ्नश्चाग्निजन्मतः । रक्तकफदाहानां तृषायाश्च विनाशन ।।" अस्यार्द्रमूलस्य मुखे धारितं मुखदौर्गन्ध्यम् । वै.निघ. । [भनिकं ।

**ककुप्** । स्त्री । चम्पकमालायां । प्रवेण्याम् । मे.

**ककुभः** । पुं । अर्जुनवृक्षे । प मु. । वृषे ।

**ककुभत्वक्** । स्त्री । अर्जुनवृक्षवल्कले । च द. । सि.यो यक्ष्म.चि ककुभादौ ।

**ककुभशाखा** । स्त्री । भार्य्याम् । रत्ना. । [च. ।

**ककुभादनी** । स्त्री । मलीनामकगन्धद्रव्ये । श.

**ककूणकः** । पुं, क्लो । शिशोर्नेत्रवर्त्मजरोगे । कटो । हि कोथुयाद । लक्षण यथा—"ककूणकः क्षीरदोषाक्षिशूलामचिवर्त्मनि । जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन्मुहुः । शिशुः कुर्य्याल्ललाटाक्षिकूटनासावघर्षण । शक्तो नार्कप्रभा द्रष्टु न वर्त्मोन्मीलनक्षमः ॥ मा.बालरोगे नि । ककूणक क्षीरदोषाक्षिशूलामचिवर्त्मनि । जायते सहजं नेत्रं कण्डूरञ्च स्रवेन्मुहुः... । भा.म ४भ. ।

**ककूल(क)म्** । क्लो, पुं । गोमयकदादिचूर्णसन्तापे । वा.टी.अरुण. । अपूपपचनार्थे मृन्मयपात्रे । "ककूलं मद्गुभिः कीर्णे स्वभ्रे ना तु तुषानलः । तेन च मृन्मयमुत्तानमपूपपचनपात्रं लक्ष्यते" । वा.टी. हेमा. ।

**ककेरुकः** । पुं । कृमिभेदे । See कृमिः ।

**जतुनी ।** स्त्री । चर्म्मचटिकायाम् । त्रिका. ।

**जतुपत्रिका ।** स्त्री । पाङ्गेर्य्याम् । चुद्रपाषाण भेदे । वै निघ ।

**जतु(न्तु)मणि ।** पु । चुद्ररोगविशेषे । जडूक, जरुड । लचण यथा—"नीरुज समसुत्पन्न मण्डल कफरक्तजम् । सहज रक्तमीषच्च श्लक्ष्णं जतुमणिं विदु ॥" सु नि १३च ।

**जतुसुख ।** पु । रक्तसुखशालिधान्यविशेषे । लचण यथा— लाचावर्णं सुखं यस्य श्रेयो जतुसुखस्तु स ।" भा पू १भ धान्यव । अथ श्रीहव्रीन गुण । [व ६ ।

**जतुरस: ।** पु । अलक्तके । आलता । रा नि

**जतुशिला ।** स्त्री । शिलाजतुनि । वै निघ.२भ क्रमि चि विडङ्गादितैले ।

**जतुकर्ण. ।** पुं । तन्त्रकारभेदे । [पाथी ।

**जतूका ।** स्त्री । अजिनपत्रायाम् । চামচিকা श र. । जनीद्रव्ये । अम । जालूकभेदे । वै निघ ।

**जत्रु(क)म् ।** क्ली । स्कन्धकचयो सन्धौ । পাখু রা । रा नि.व १८ ।

**जत्र्वस्थि ।** क्ली । स्कन्धकचासन्ध्यस्थनि । পাখুরার হাড় । ते प दे । प भा ०भ ।

**जत्वश्मक(ज)म् ।** क्ली । शिलाजतुनि । रा नि व १३ । भम शिलायाम् । वै निघ ।

**जन. ।** पु । लोके । मनुष्ये । अम ।

**जनकम् ।** क्ली । पत्राङ्गचन्दने । বকমভেদ । रा नि व १२ ।

**जनकारी (इन्) ।** पु । अलक्तके । रा नि.व ६।

**जनचा ।** स्त्री । रुचे । वै निघ ।

**जननम् ।** क्ली । जन्मनि, उत्पत्तौ । मे ।

**जननि. (नी) ।** स्त्री । मञ्जिष्ठायाम् । कटुकायाम् । अलक्तके । रा नि व.६ । जगामांसाम् । रा नि व १२ । जतुकालतायाम् । रा नि व ३ । जनीनामकगन्धद्रव्य, पपटीनामकगन्धद्रव्ये, पपरी ति उत्तरदेशे । लटा । श र. । चर्म्मचट्याम् । চামচিকা । त्रिका । वालूके । मञ्जिकायाम् । वै निघ । यूथिकायाम् । शू ई जूँईर गाछ । म.थ ।

**जनप्रिय: ।** पु । शोभाञ्जनवृचे । সজিনা গাছ । रा नि व ७ । गोधूमे । नागरङ्गवृचे । নারঙ্গা লেবু । वै निघ । धान्यके । धने । रा नि व ६ ।

**जनप्रिया ।** स्त्री । कुस्तुम्बुर्य्या । কাঁচা ধনে । हि कोथम्बीर । रा नि व २३ ।

**जनरञ्जक ।** पु । वनवालूके । वै निघ ।

**जनरञ्जनी ।** स्त्री । जतुकालतायाम् । जनी नामसुगन्धद्रव्ये । वै निघ ।

**जनवल्लभ: ।** पु । श्वेतरोहितकवृचे । শ্বেত রোড়া । रा नि.व ८ ।

**जनाशन: ।** पु । दूंष्टाशी वृके । रा नि व १९।

**जनि. (नी) ।** स्त्री । वालूके । বেতো । वै निघ । उत्पत्तौ । अम । स्वनामख्यातगन्धद्रव्ये । अटी रा । जतुकायाम् । कटुकायाम् । कटुकी । रा नि व ६ । (नी) सातलायाम् । वै निघ ।

**जनिनीलिका ।** स्त्री । महानील्याम् । বড নীল । रा नि व ४ ।

**जनिष्ठा (नेष्टा) ।** स्त्री । हरिद्रायाम् । रा. नि व ६ । जातीपुष्पवृचे । रा नि व १० । कङ्कौ । रा नि व ५ । जतुकालतायाम् । रा.नि व.३ ।

**जनेष्ट: ।** पुं । गन्धराजपुष्पवृचे । গন্ধরাজ ফুলের গাছ । रा नि व १० ।

**जनोत्तम: ।** पु । शाकवृचे । শেগুন । प सु ।

**जन्तवम् ।** क्ली । विडङ्गे । वै निघ २भ चर्म्म चि ।

**जन्तु: ।** पु । वाह्याभ्यन्तरक्रिमौ । का टी कैमा । प्राणिमात्रे । अम । [याम् । वै निघ ।

**जन्तुक. ।** पु । हिङ्गौ । ज द १२च । जन्तुका

**जन्तुकम्बु. (क) ।** पु । क्रमिशङ्खे । रा.नि. व १९ ।

**जन्तुका ।** स्त्री । लाचायाम् । रा.नि व ६ । मालवदेशप्रसिद्धस्वनामख्यातलतायाम् । हिं पापड़ी । गुणा —शिशिरा तिक्ता रक्तपित्तकफघ्नी दाहवणावमिहरा रुचिकृत् दीपनी च । रा नि. व ३ । नाड़ीहिङ्गौ । पत्रदात्याम् । भमर्य्याम् । त्वचि । रा नि व ११ ।

**जन्तुकारी ।** स्त्री । जन्तुकालतायाम् । रा नि. व ३ । नाड़ीहिङ्गौ । अलक्तके । रा नि.व ६ ।

जयपाल बीज निस्तुष द्विधाकृत्य बीजमध्यस्थपत्रञ्च परित्यज्य अष्टमांशटङ्कणचूर्णेन विमिश्र च कैश यञ्च दुग्धसमुत्थ विकारं भाव्यम्। तत्तैल सार्व पादितैलवत् तैलपीडनयन्त्रे निष्कास्यम्। गुणा —चक्षुष्यरेचकम् आनाहोदरघ्न धनुस्तम्भसन्याम शिरोरोगघ्न ज्वरघ्नमुन्मादहरमामवातमीयमीका ऊरोगघ्न मर्दनात् हन्ति कासञ्च हरति। चनि। एरण्डद्रवे।

**जयमङ्गलरस** । पुं। विषमज्वरघ्ने औषध विशेषे। पाठ —हिङ्गुलसम्भव सूत गन्धक टङ्कण तथा। ताम्र वङ्ग माक्षिकञ्च सैन्धव मरिच तथा। एतत्समासमाहृत्य द्विगुण स्वर्णभस्मक। तदर्द्ध कान्तलौहञ्च रूप्यभस्म च तत्समं। एतत्सर्वं वि चूर्ण्याथ भावयेत् कनकद्रवैः। शेफालिकादलैर्वापि दशमूलरसेन च। किराततिक्तके क्वाथैस्त्रिवार भावयेत् सुधी। भावयित्वा तत पश्चात् गुञ्जा द्वयवटीकृता। अनु मधु जीरकचूर्णञ्च सा कौ। अन्य —हिङ्गुलोत्थपारद गन्धक टङ्कणचार ताम्र वङ्ग स्वर्णमाक्षिक सैन्धवलवण मरिचचूर्णं प्र सम, स्वर्णभस्म एतत्सर्वद्विगुण स्वर्णभस्मार्द्धं का न्तलौह तदर्द्धं रौप्यञ्च। एकत्र धुस्तूरपत्ररसेन शे फालिकापत्ररसेन दशमूलक्वाथेन किराततिक्तका दिशक्वाथेन च प्र वारत्रय भावयेत्। दशमूल भाव्यद्रव्यपारदादिसम वारि अष्टगुणम् अष्टमांश शिष्ट ग्राह्यम्। एव किराततिक्तकादेरपि। अपर —रससिन्दूर अभ्र रौप्य मुण्डलौह तीक्ष्णलौह ह रिताल स्वर्णमाक्षिक चित्रकमूल टङ्कणचार त्रि कटुकं प्र समभाग। पाठानिर्गुण्डीयष्टिमधुबिल्वम् लक्कषायञ्च दिन मर्दयित्वा मूषया भूधरे पुटे पचे त्। अनु दशमूलक्वाथ। अस्याश्चन नस्तमपि हि तम्। र चि रस कौ.।

**जया**। स्त्री। विजयायाम्। सिद्धि। भा माषा रोगचि जयापुष्पवृक्षे। माहायां। महादन्तीवृक्षे। कपिकच्छाम्। वै निघ। अग्निमन्थवृक्षे। रा नि. व ८। भा.कर्णकज्ज.चि। वा उ १५। शमीवृ क्षे। रा.नि व.८। नीलदूर्व्वायाम्। जयन्तीवृक्ष। रा नि व ४। भेद कुष्ठ चि कन्दर्पसारतैले। च.द अम्ल चि.रसेन्द्रगुडी। हरीतक्याम्। रा नि व ११। वै.निघ.सग्रहणी.चि.शार्ङ्गधचूर्णे। अपराजिता याम्। मद व १। भावलौहचे। वै.निघ २भ.चय. चि कनकसिन्दूरे।

**जयाञ्जन(मल)म्**। क्ली। स्रोतोऽञ्जनविशेषे। अदरपायर इति पश्चिमदेशे। "स्रोतोऽञ्जन नदी जन्म कृष्णस्रोती जयाञ्जनम्।" प मु।

**जयाह्वयम्**। क्ली। तकारो हरीतकी चेति द्वयी। वा सू १५श।

**जयापुष्पम्**। क्ली। जपापुष्पे। वै निघ।

**जयावटी**। स्त्री ज्वराधिकारे। "विष चि- कटुक मुस्त हरिद्रा निम्बपत्रक। विडङ्गमष्टमं चूर्णं छागमूत्रे समं समम्। चणकाभा वटी कार्य्या स्याज्जया योगवाहिका॥" अत्र जयन्तीमूलचूर्णं तुल्यांश देयं योगवाहिकत्वात्। र.सा.स।

**जयावहा**। स्त्री। नीलदूर्व्वायां। रा नि व. ८। भद्रदन्तीवृक्षे। मुण्डी। रा नि व ६।

**जयाश्रया**। स्त्री। गर्मूटकाख्ये रा नि व ८।

**जयाह्वा**। स्त्री। भद्रदन्तीवृक्षे। रा नि व ६।

**जरकम्**। क्ली, पुं। हिङ्गुनि। वै निघ। —

**जरठ**। त्रि। पाण्डौ। कठिने। मे। क्रौर्ये। हे च.। [त्रि जडुर्। रा नि व.८।

**जरडी**। स्त्री। गर्मूटिकाख्ये। घासविशेषे।

**जरण**। पु, क्ली। स्थूलजीरके। बड जीरा। रा नि व ६। च द वातव्याधि चि। कृष्णजीरके। कासमर्द्दे। कालकासन्दा। हिङ्गुनि। रा नि.व. २३। सौवर्चललवणे। सचल लवण। अ र.। क्- ष्णौषधौ। कुड़। र मा। पीतजीरके। च.द ज्व चि। स्त्री। कृष्णजीरके। रा नि.व ६।

**जरणद्रुमः**। पु। अश्वकर्णनामलतायाम्। सडा शाल। रा नि व ८।

**जरती**। स्त्री। इडायाम्। रा नि व १८।

**जरत्पित्तशूलम्**। क्ली। परिणामशूले। "वा न्तमात्रे जरत्पित्ते शूलमाशु प्रशाम्यति।" रस र.।

**जरन्त**। पु। महिषे। त्रिका।

**जरमान**.। पु। मनुष्य। उषा।

**जरा**। स्त्री। वार्द्धक्ये। अम.।

**जराक्लैव्यम्**। क्ली। जराजन्यक्लैव्यरोगविशेषे।

स्य निदानलक्षणं यथा—"अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम्। रसादीनां क्षयाच्चैव तथैवावृष्यसेवनात्। बलवीर्य्येन्द्रियाणाञ्च क्रमेणैव परिक्षयात्। परिचिन्ताद्यगुरुव्यायाम्यनाहाराच्छ्रमात्क्लमात्। जरासम्भवजं क्लैब्यमित्येतैर्हेतुभिर्नृणाम्। जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्ब्बलः। विवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते॥" च।

**जरायु**। पुं। अग्निजारवृक्षे। रा नि व ६। गर्भाशये। गर्ड्थलि वा ओँओल। रा नि व १८। स चर्म्माकारं सूक्ष्मञ्च। तस्य स्थानञ्च गुदमूत्राशयमध्यभागः। यथा—'गुदमूत्राशयान्तस्थो जरायुर्गर्भमन्दिरम्। जरायुपार्श्वे नाड्यौ द्वे डिम्बनाड्यौ प्रकीर्त्तिते।" अत्रि। 'या तु चर्म्माकृतिः सूक्ष्मा जरायुः सा निगद्यते।" तन्त्रान्तरम्।

**जरायुजः**। त्रि। जरायुजाते प्राणिमात्रे, पशुमनुष्यव्यालादौ। अम.। "शुक्रशोणितयोर्योगस्तस्मिन् सञ्जायते यतः। तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः॥" तन्त्रान्तरम्।

**जरायुदोषः**। पुं। गर्भजरोगभेदे। वै निघ।

**जरालक्ष्म**। क्ली। पलिते। रा नि व १८।

**जराशोषः**। पुं। वार्द्धक्यजन्यक्षीणतारोगे। लक्षणं—"जराशोषी कृशो मन्दवीर्य्यबुद्धिबलेन्द्रियः। कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः। ष्ठीवति श्लेष्मणा हीनं गौरवारुचिपीडितः। सम्प्रसुतास्यनासाक्षः शुष्करूक्षमलच्छविः॥" मा नि।

**जरूथम्**। क्ली। मांसे। त्रिका।

**जर्ज्जरः**। पुं। इन्द्रध्वजे। मद व ७। क्ली। शैवाले। शैलजे। मे। त्रि। छद्रे। रा नि व १८।

**जर्ज्जरीकः**। त्रि। बहुच्छिद्रद्रव्ये। दोदुरी। मे।

**जर्णः**। त्रि। जीर्णे। हेम।

**जर्त्तः (र्त्तुः)**। पुं। करिणि। योनौ। उणा।

**जर्त्ति(र्हि)लः**। पुं। आरण्यतिलके। वुनो तिल। हेम। रा नि व १६।

**जलम्**। क्ली। बालके। दाना। चम् ३४। आ वाल्म कि.। वाम् १४ एलादौ। जम्बुवेतसे। उदके। उन। जलस्य षड्दोषा भवन्ति—स्पर्श रूप रस गन्ध वीर्य्य विपाकाख्याः। तत्र स्पर्शदोषे खरता पैच्छिल्यमुष्णता, रूपदोषे पङ्कसिकताशैवालबहुवर्णता च रसदोषे व्यक्तरसता, गन्धदोषे अनिष्टगन्धता, वीर्य्यदोषे तृष्णादिकं सेवनात्, विपाकदोषे च विष्टम्भादिकं जनयति। जलस्य कलुषता-साधनं सप्त—कतक गोमेद विसग्रन्थि शैवालमूल वस्त्र मुक्ता मणय इति। जलस्य निर्वपणं पञ्च। फलादिशीतीकरणञ्च सप्त प्रवातस्थापनादि सु मू ४५ अ। तस्य गुणाः—मधुरं शीतलं तृष्णाघ्नं शोषमोहभ्रान्तिघ्नं भुक्तान्नपाचकं निद्रालस्यहरं विषघ्नं श्रमहरं रुचिजनकं धीबलवीर्य्यतुष्टिपुष्टिकरञ्च। "साधारणं जलं रुच्यं दीपनं पाचनं लघु। श्रमतृष्णापहं वातकफमेदघ्नपुष्टिदम्।" पात्रदेशादिभेदेन जलगुणा यथा—"जातं ताम्रमृदन्तदेश सलिलं वातादिदोषप्रदं देशाज्जाङ्गलकस्य दुर्जरतरं दोषावहं धूसरम्। वातघ्नं शिलाशिरीत्थममलं पथ्यं लघु स्वादु च शैलश्यामसृदश्मदोषशमनं सर्व्वामयघ्नं पयः।" रा. नि व १४। "तच्चादौ द्विविधमान्तरीक्षभौमभेदेन। तयोरान्तरीक्षं जलमनिर्द्देश्यरसम् एकान्ततः पथ्यतमञ्च। तद्देशावनिपतितमन्यतमं रसमुपलभते स्थानविशेषाद्यथादिव्यवर्ण्यमितिमिति। तत्र स पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण, तत्र भूगुणभूयिष्ठायां भूमौ लवणमम्लञ्च भवति, अम्बुगुणभूयिष्ठायां मधुरं, तेजोगुणभूयिष्ठायां कटुकं तिक्तञ्च वायुगुणभूयिष्ठायां कषायं, आकाशगुणभूयिष्ठायामव्यक्तरसमिति।" सु. सू ४५ अ। अन्तरीक्षोद्भवं जलं पुनः धारं कारकं तौषारं हैममिति चतुर्धा। तत्र धारमष्टविधम्—"धारं पृथिव्यां पतितं पयस्तु तदेव जातं गुणभेदभिन्नम्। नानाविधैर्भेदगुणैश्च कूपकं जातं जलं चाष्टविधं वदन्ति। नद्यौद्भिदं प्रास्रवणञ्च चौण्ड्यं कौपं तडागं सरसीभवञ्च वाप्युद्भवं तत्प्रवदन्ति धीराः।" नदीजलम् औद्भिदादिकञ्च पर्य्यायं द्रष्टव्यम्। तत्र कारं जलं यथा—"स्वर्णधा शीतवातेन मिथविस्फूर्च्छसङ्कुलम्। शीताम्बु कठिनं भूत्वा विर्जातं हिमम् तु। पश्चात् सुमुच्यमानात्पालिकादि द्रवते जलम्। वसन्ति येषां सलिलं शकलं शीतलं मतम्। गुणाः—कारं शीतगुणे श्रमोपहननं यस्यादिग्निमान्द्यनम् मूर्च्छामोहमिराशिरःशिरःप्रकर्दिकारमारवम्। शीतकालां तस्मिन्तु दोषकर्म्मदीपानिकालानां हिम संमस्तु मधर गुरुके मतिद्धिं

-तस्माच्च दूरे श्रुतम् ॥” इति । “तोयारं लघु शीतलं श्रमहरं पित्तार्त्तिशान्तिप्रदं दोषाणां शमनं जला तिहननं सर्व्वामयघ्नं परं । कुष्ठश्लीपदवर्च्चिकाविषहरं पामाविसर्पापहं चीणानां घृतशोषिणां हितकरं सम्पीयते मानवैः ॥” हैमजलगुणाः— “हैमं घनञ्च मधुरञ्च कफात्मकञ्च मूर्च्छार्त्तिसंश्रमगमामविनाशनञ्च । पित्तास्रजः प्रशमनं रुधिरञ्च तच्च शान्तङ्करोति हिमसम्भववारि सद्यः ॥” भूमिविशेषे जलगुणाः—“भूमिः पञ्चविधा ज्ञेया कृष्णा रक्ता तथा सिता । पीता नीला भवेच्चान्या गुणास्तासां प्रकीर्त्तिताः । सघनं मधुरं नीरं कृष्णभूमिपरिश्रुतं । पीताश्रितकषायञ्च रक्तायाः क्षारमाधुरम् । सिताश्रमम्लमधुरं भूमिभागेन लक्षयेत् ॥” -गुणाः—“ताडागं वातलं स्वादु कषायं कटुपाकि च । कौपं क्षाराग्निकरं रुच्यं मधुरं कफकारकं । नैर्झरं लघुपाकञ्च दीपनं कफनाशनं । सारसं लघु तृष्णाघ्नं बल्यं स्वादु कषायवत् । पाल्वलं गुर्व्वभिष्यन्दि विष्टम्भि दोषलं परं ॥” इति । अथ स्वच्छजलगुणाः—लघु हृद्यं गुणवच्च । अथाविलजलगुणाः—पिच्छिलं क्रिमिलं विवर्णं क्लिन्नं सान्द्रं विरसं दुर्गन्धं चाहितञ्च । अथ शरदादिजलगुणाः— शारदं लघु चानभिष्यन्दि च । हैमन्तं स्निग्धं वृष्यं बल्यं गुरु हितञ्च । शैशिरं वातकफघ्नं हैमन्तादौ पल्लघु च । वासन्तं मधुरं कषायं बल्यं रूक्षञ्च । ग्रैष्मञ्च अनभिष्यन्दीति । सुगन्धजलगुणाः—तृष्णाघ्नं सुशीतलम् अव्यक्तरसञ्च । शीतलजलगुणाः—मदघ्नं मूर्च्छाहरं छर्द्दिनाशनं पित्तज्वरश्रमक्लमतृष्णादाहमदात्ययविषघ्नञ्च । शृतशीतजलगुणाः—त्रिदोषघ्नम् । सुवासितमृत्पात्रस्थितजलं रुचिकरं अजीर्णे औषधतुल्यं जीर्णे बलदं भोजनकाले चायुष्यम् । रात्रौ च भुक्तान्तोपरि अहितम् । राज । हेमन्तादौ जलपानविधिः—हेमन्ते ताडागं सारसं वा हितं । इदमेव शिशिरे प्रशस्तम् । चैत्रवसन्तयोः वाप्यं वा कौपं वा नैर्झरं वा प्रशस्तम् भाद्रे यच्च साकल्यतो वर्ज्यम् । औद्भिदं वान्तरीक्षं वा कौपं वा प्रावृट्काले । शरदि नादेयम् अंशूदकञ्च हितम्, तथागस्त्योदयात् स्वच्छं जलं प्रशस्तम् । “पौषे वारि सरो जातं माघे तत्तु तडागजं । फाल्गुने कूपसम्भूतं चैत्रे चौण्ड्रं हितं मतम् । वैशाखे नैर्झरं नीरं ज्यैष्ठे शस्तं तथौद्भिदं । आषाढे शस्यते कौपं श्रावणे दिव्यमेव च । भाद्रे कौपं, पयः प्रत्यग्विने चौण्ड्रमेव च । कार्त्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते ॥” वारिग्रहणकालः—शीता नामभसां प्रायो ग्रहणं प्रातरिष्यते । शीतलं निर्म्मलत्वञ्च यत्तेषां महान् गुणः ॥ इन्द्रसंयुतः । पुनश्च जलं चतुर्विधम् । पापोदकं रोगोदकम् अंशूदकम् आरोग्योदकञ्च । पापोदकं यथा— “विश्वायुक्तं याद्धि नीरङ्क्रिमिकीटसमाकुलम् । समलं नीलशैवालं पापन्तु नहितञ्च यत् । स्नाने पाने च तत्कलं नराणां वाहवेषु च । स्नानेन त्वग्भवान् रोगान् कण्डूकुष्ठविसर्पकान् । पानेन कफगुल्मानां क्रमीणां वरसम्भवान् । करोति विविधान् रोगान् तस्मात्तत्परिवर्ज्जयेत् ॥” रोगोदकं—“बहुवल्लतागुल्मे छायाकूपोऽथवा सरः । अव्ययच्छेदधोऽप्येव क्रिमिशैवालसंयुतम् । क्लिन्नं सपिच्छिलं कृष्णं हृच्मूलाश्रित भवेत् । बहुवर्णयुक्ता दुर्गन्धं मूत्रगन्धवत् । रोगोदकं विजानीयात्करोति विषमान् गदान् । शूलं कुष्ठञ्च कण्डूञ्च सेवितेन करोति हि ॥” अंशूदक पर्य्याये द्रष्टव्यम् । आरोग्योदकं—“पादशेषन्तु क्वथितं तथारोग्यजलं विदुः । कासश्वासज्वरं पथ्यं मारुतञ्चापकर्षति । सद्योज्वरं हरत्याशु समेदकफनाशनम् । प्रतिश्याय पाचयति शूलगुल्मार्शोनाशनम् । दीपनञ्च हुताशस्य पाण्डुशोफोदरापहम् । अजीर्णञ्च नरत्याशु पीतमुष्णोदकं निशि ॥” अत्रि.७अ. । गवीगर्भाशये । वै.निघ. ।

**जलकण्टकः** । पुं । शृङ्गाटके । पाणिफल, । प.मु । कुम्भीरे । हारा. ।

**जलकदली** । स्त्री । स्वनामख्यातजलजकन्दविशेषे । जलकदली । प.मु ।

**जलकन्दः** । पुं । शृङ्गाटके । पाणिफल । वै.निघ. । (न्दा) स्त्री । जलकदल्याम् । प.मु. ।

**जलकपिः** । पुं । शिशुमारे । शुशुक । हारा. ।

**जलकपोतः (कः)** । पुं । जलपक्षिविशेषे । जलपिपि । वै.निघ. ।

**जलकरङ्कः** । पुं । नारिकेलफले । पद्मे । शङ्खे । त्रिका. । हारा. । जलमक्षतायाम् । मे. ।

**जलकर्णा** । स्त्री । कर्णमोटायां । कानछिड़ा, कान्दिड़िया । प.र.पञ्च.पि.रसेन्द्रगुडी ।

**जलकल्कः** । पुं । जम्बाले । पेङ्का, पाँक । शब्द. ।

**जलकाक** । पु । जलपक्षिविशेषे । পান কৌডী । तन्मांसगुणा —स्निग्ध गुरु हिम वात हरम् । रा नि व १७ । [हारा ।

**जलकाङ्क्ष (ङ्क्षि)** । पु स्त्री हस्तिनि ।

**जलकाम** । पु । जलवेतसे । ज द १२५ ।

**जलकामा** । स्त्री । अम्बाहुल्याम् । वै निघ ।

**जलकामुक** । पु, स्त्री (का, की) । कुटुम्बिनीनामक्षुपे । रा नि व ५ ।

**जलकिराट** । पु। नक्र । शिशुमारे हारा

**जलकुक्कुट** । पु। डहुके । डाक পাখী । कारण्डवे वै निघ । [थी । हे च ।

**जलकुक्कुभ** । पु जलकुक्कुटे । কোড়া পা

**जलकुक्कुटी** । स्त्री । गङ्गाचिल्लीपक्षिणि । গাঙ চিল । हारा ।

**जलकुण्डल** । पु । शैवाले । भूरिप्र ।

**जलकुन्तका** । स्त्री । शृङ्गाटके । পানিফল । कुम्भीरे । वै निघ ।

**जलकूपी** । स्त्री । पुष्करिण्या । हारा ।

**जलकूर्म** । पु । शिशुमारे शुशुक । त्रिका।

**जलकेश** । पु । शैवाले । हारा । [हारा ।

**जलगुल्म** । पु । क्षुद्रसरोवरे । मे । कच्छपे ।

**जलगोजकम** । क्ली । पिस्ता इति ख्याति का बेलदेशजफले । वै निघ ।

**जलङ्ग** । पु । महाकाले । रा नि.व ।

**जलचर (चारी (रिन्))** । पुं । शङ्खे । मत्स्ये । श च । पु स्त्री । जलचरप्राणिमात्र इस सारसकादम्बबककौञ्चादौ । प सु । "कुररवकमकरा कङ्कचटकपिकभृङ्गसारसाः । आडिदात्यूहसा जलकरटिकपिङ्गरिङ्गिभायाः । जले चरा विहङ्गाश्चे ।' चनि १०५ । मांसगुणा —गुरवः स्निग्ध मधुर वातघ्न शुक्रलच । रा नि व,१७ ।

**जलज** । त्रि । जलवासिजन्तुमात्रे । पु । दिव्यलवणे । रा नि व ८ । मत्स्य । श,च । शैवाले । जलवेतसे । कुबेराक्षे । काकसिन्दुके । जलमधूके । रा नि,व १९ । क्ली । कौन्तिके । चारे । लवणे । लवङ्गे । दिवधान्ये । वै निघ । पद्मे । शङ्खे । नवरत्नराजमृगाङ्के । वै निघ २भ खय चि ।

**जलजन्तु** । पुं । जलवासिप्राणिमात्रे । श्रम ।

**जलजन्तुका** । स्त्री । जलौकायां । भ ।

**जलजन्म** । क्ली । पद्म । हे च ।

**जलजम्बूका** । स्त्री । भूमिजम्बूक्षे । वन जाम । भा । See क्षुद्रजम्बू ।

**जलजसुमना** । स्त्री । शङ्खपुष्पां । वै निघ ।

**जलजा** । स्त्री । वल्लीयष्टिमधुनि । रा नि व ६ । सोमराज्याम् । वै निघ ।

**जलजात.** । पु जलवेतसे । वै निघ ।

**जलजाता** । स्त्री । कुङ्कुमशाली । শালিধান্য বিশেষ । रा नि व १६ ।

**जलजिह्व** । पु । शिशुमारे । कुम्भीरे । हारा ।

**जलजीविनी** । स्त्री । जलौकायां । জোঁক । वै निघ । [शम्बूक । हारा ।

**जलडिम्ब** । पु । शुक्तौ । ঝিনুক । शम्बूके ।

**जलतण्डुलीयम्** । क्ली । कचटे । কাঁটানটে শাক । भा ।

**जलतापिक (तापी)** । पु । मत्स्यविशेषे । ইলিশ মাছ । काचकमत्स्य । श र ।

**जलताल** । पु । शालीशमत्स्ये । त्रिका ।

**जलतिक्त(क्ति)का** । स्त्री । शल्लकीवृक्षे । रा. नि व ११ ।

**जलत्वचा** । स्त्री । वृक्षे । छाग । हारा ।

**जलद** । पु । मुस्तके । च द वा व्या वि एला दितैले । पीतवालके । পীত বালা । कास्मरवृक्षे कुडिला গাছ । भा ।

**जलदागमः** । पु । वर्षाकाले । रा नि व ११।

**जलदागन.** । पुं । शाके । शालवृक्षे । श.च ।

**जलधर** । पु । मुस्तायां । श्रम । च द चिकित्सा चि कचगादि । तिनिशवृक्षे । रा नि व ८ ।

**जलधराधार.** । पुं । पीतीमीरे । वै निघ ।

**जलनकुल.** । पु । जलमार्जारे । উদবিড়াল । त्रिका. ।

**जलनीलिका (स्त्री)** । स्त्री । शैवाले । रा नि.व ८ । भा.४भ.नाडीव्रणे ।
**जलनेत्रः** । पु । जलमधूके । वै.निघ ।
**जलपत्रिका** । स्त्री । पद्मिन्याम् । पद्मेर झाड़ । वै निघ. ।
**जलपक्षी** । पु। हंसादिजलचरपक्षिषु । तन्मांस स्निग्धं हिम गुरु वृष्य वातहरञ्च । रा.नि व १७ ।
**जलपाकः** । पुं । वारिपाके निष्क जल । "कर्षं गृहीत्वा द्रव्यस्य क्वाथयेत्प्रास्थकेऽम्भसि । अर्द्धं मत प्रयोक्तव्य जलपाके त्वय विधि. ॥" वा. चि.२भ. ।
**जलपादपः** । पुं । हरौ । वै निघ. । [१८ ।
**जलपारावतः** । पु । जलकपोते । रा नि.व.
**जलपिप्पली** । स्त्री । महाराष्ट्रीक्षुपे । काँचड़ा घास । हि पानिपिपरी, जलपिपरी । रा.नि व ४ । गुणा.—जलपिप्पलिका हृद्या चक्षुष्या शुक्रला ल घु. । सग्राहिणी हिमा रुचा रक्तदाहव्रणापहा । कटुपाकरसा रुच्या कषाया वह्निवर्द्धिनी ॥" भा पू गुणव. । कटु तीक्ष्णा कषाया मलशुद्धिकरी व्रणकीटादिदोषरसदोषघ्नी च । रा.नि.व.४ ।
**जलपुष्पम्** । क्ली । जलजातपुष्पे । यथा—"अ ष्टधा कमलानि सुजलवासी पतुष्पदा । जल जीवी च कुम्भीका जलपुष्पगणस्त्वयम् ॥" चर्क. ।
**जलपृष्ठजा** । स्त्री । शैवाले । श.च. ।
**जलमद्रः** । पु,क्ली । पीतवालके । वै.निघ. ।
**जलप्राणी** । पुं । जलजन्तौ । वै.निघ. ।
**जलप्रायम्** । क्ली । अनूपदेशे । श्रम ।
**जलप्रियः** । पु । धन्याके । रा.नि.व ६ । चा- तकपक्षिणि । श.र. । मत्स्ये । श.च. । स्त्री । हिलमोचिकायां । हिंचे । प सु । [हारा. ।
**जलप्लवः** । पु । जलमार्ज्जारे । उँदिडाल ।
**जलफलम्** । क्ली। शृङ्गाटके । पानिफल। भा ।
**जलफेनः** । पुं । समुद्रफेने । वै.निघ. ।
**जलबन्धः (बन्धुः)** । पुं । मत्स्ये । श.च. ।
**जलब्रह्मी** । स्त्री । ब्राह्म्याम् । सोमराज । वै.निघ. । हिलमोचिकायां । हिंचे । .त्रिका. ।

**जलभूः** । पुं, क्ली । कचटे । काँचड़ा । श च. ।
**जलमण्डपिका (पी)** । स्त्री । शैवाले । वै. निघ. । वारिपर्ण्याम् । पाना । रस की.ज्वाला- मुखरसे । [हारा. ।
**जलमद्गुः** । पुं । मत्स्यरङ्गपक्षिणि । माछराङा ।
**जलमधु(धू)कः** । पु । जलजातमधूकवृक्षे । जलमउया । गुणा.—मधुरः व्रणघ्न. रानिघ्नः बलशुक्रवर्द्धन रसायन. शीतलश्च । रा.नि व.११ । "मधूकपुष्प मधुर शीतल गुरु वृंहण । बलशुक्र- कर प्रोक्त वातपित्तविनाशनम् । फलगुणा —शीतं गुरु स्वादु शुक्रल वातपित्तनुत् । अहृद्यं हन्ति पिपासादाहश्वासक्षतक्षयान् ॥" भा. ।
**जलमक्षिका** । स्त्री । वारिमक्षिकायाम् । जलकमी । त्रिका. । [त्रिका. ।
**जलमार्जारः** । जलविडाले । उँदिड़ाल ।
**जलमूर्त्तिका** । स्त्री । करकायाम् । श.च. ।
**जलमीनः** । पुं । मत्स्यभेदे । वै.निघ. ।
**जलमुस्तम्** । क्ली । जलजमुस्तायाम् । वै.निघ ।
**जलमोदम्** । क्ली । उशीरे । रा नि.व.१२ ।
**जलयष्टिः** । पुं । वशीयष्टिमधुनि । वै.निघ. ।
**जलरङ्कः (ङ्ग.)** । पुं । वकपक्षिणि । वक पाखी । हे.च ।
**जलरङ्कुः** । पु । हरिणे । वै.निघ. । दात्यूहप- क्षिणि । डाक पाखी । हारा. ।
**जलरण्डः** । पुं । जलसर्पभेदे । जलविन्दौ । हे.च. । श.र. । [वर्षे । चारलवणे । हारा. ।
**जलरसः** । पुं । लवणे । हारा. । सौवर्चल-
**जलरुट् (हम्)** । क्ली । पद्मे । हे.च. ।
**जलरुहा** । स्त्री । कुङ्कमाली । टैरमस्ति क धाड्विशेष । रा.नि.व.१६ ।
**जलरूपः** । पुं । मकरे । त्रिका. ।
**जलवरण्टः** । पुं । जलवसन्तरोगे । पानवस- न्त । हारा । [हारा. ।
**जलवल्कलः** । पुं । कुम्भिकायां । पाना ।
**जलवल्ली** । स्त्री । शृङ्गाटके । पानिफल । रा. नि.व.

**जलवायसः** । पुं । जलकाके । পানকৌড়ি । हे.च. ।

**जलवासः (सा:)** । पुं । विष्णुकन्दे । रा.नि.व.७ । गुण्डासिनीतृणे । रा.नि.व.८ । क्ली । उशीरे । रा.नि.व.१२ ।

**जलविक्रमा** । स्त्री । मलकीटके । रा.नि.व [११ ।

**जलविड़ालः** । पुं । जलमार्जारे । উদ্বিড়াল । हारा. । [रा.नि.व.१४ ।

**जलविन्दुजा** । स्त्री । यावनालीशर्करायाम् ।

**जलविल्वः** । पुं । कर्कटे । पद्माट्टे । जलवल्कले । পানা । हारा. । [মাছ । हारा. ।

**जलवृश्चिकः** । पुं । दृश्चाकमत्स्ये । এঁচলা

**जलवेतसः** । पुं । जलजातवेतसविशेषे । জলবেত । म वञ्चल । कं वैसियमरण । प.मु. । गुणा.—तिक्तशीतलः व्रणशोधन- कफरक्तपित्तघ्न सग्राही कषायी रक्षोघ्नश्च । रा.नि.व.८ ।

**जलव्यधः** । पुं । कङ्कत्रोटमत्स्यभेदे । কাঁকিলা মাছ বা গান্দাড়া । हारा. ।

**जलव्यालः** । पुं । जलसर्पे । अम ।

**जलशिरीषः (षिका)** । पु, स्त्री । शिरीषभेदे । हिं टिटिनी । "त्रिदोषविषकुष्ठार्शोहरी वारिशिरीषिका ।" भा. ।

**जलशुक्तिः** । स्त्री । शम्बूके । শামুক, ঝিনুক । जलशिपी इति च ख्याते । गुणाः—"कटु स्निग्धा दीपनी गुल्मशूलविषदोषहरी रुच्या पाचनी बल्या च ।" रा.नि.व.१३ ।

**जलशुचिः** । पुं । शृङ्गाटके । পানিফল ।

**जलशूकम्** । क्ली । शैवाले । हे.च ।

**जलशूकरः** । पुं । शिशुमारे । শুশুক । हारा. । कुम्भीरे । हे.च । [—श्यामाकवत् ।

**जलश्यामाकः** । पुं । वन्यधान्यविशेषे । गुणा

**जलसर्पिणी** । स्त्री । जलौकायाम् । জোঁক । हे.च । [यैन जलं दृष्ट्वा चलति । वा.चि. ।

**जलसन्त्रासः** । पुं । कुक्कुरदंशजरोगविशेषे ।

**जलसम्भवः** । पुं । जलवेतसे । रा.नि.व.८ ।

**जलसूकरः** । पुं । कुम्भीरे । वनशूकरे । वै.निघ. ।

**जलसूचिः** । पुं । कङ्कपक्षिणि । कङ्कत्रोटमत्स्ये । जटा. । शृङ्गाटके । शिशुमारे । मे. । काके । हे च. । स्त्री । जलौकायाम् । জোঁক ।

**जलस्था** । स्त्री । गण्डदूर्वायां । रा.नि.व.८ ।

**जलहासः** । पुं । समुद्रफेने । त्रिका. । [श.र. ।

**जलाका** । स्त्री । जलौकायाम् । জোঁক ।

**जलाखुः** । पुं । जलमूषके । त्रिका. । -

**जलाख्या** । स्त्री । जलमधूकवृक्षे । वै.निघ. ।

**जलाञ्चलम्** । क्ली । शैवाले । শেওলা । मे. ।

**जलाटनः** । पुं । कङ्कपक्षिणि । কাঁক পাখী । स्त्री (नी) । जलौकायाम् । मे. । रा ।

**जलाण्टकः** । पु । शिशुमारे । नक्रराजे । हारा.

**जलाण्डकम्** । क्ली । रोहितादिशिशौ । মাছের পোনা । हारा ।

**जलालिका** । स्त्री । जलौकायाम् । श.र. ।

**जलाधारम्** । क्ली, पुं । पीतोशीरे । वै निघ. । जलाशये । अम. ।

**जलाबु(म्बु)का** । स्त्री । जलौकायां । वै.निघ. ।

**जलामोदम्** । क्ली । उशीरे । रा.नि.व १२ ।

**जलायु(वु)का** । स्त्री । जलमस्या आयुरिति जलौकायाम् । জোঁক । म जलू । सु.सू.१३अ. । सा द्वादशविधा । सविषाः षट्, तावत्य एव निर्विषा. । तत्र सविषाः कृष्णा कर्बुरा अलगर्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति । तासु अञ्जनचूर्णवर्णा पृथुशिराः कृष्णा । वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा । रोमशा महापार्श्वा कृष्णमुखी अलगर्दा । इन्द्रायुधवदूर्ध्वराजिभिश्चित्रिता इन्द्रायुधा । ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभूताकृतिः अणुमुखी गोचन्देनेति । ताभिर्दष्टे श्वयथुरादिर्भवति । निर्विषाः—कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति । तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला । किञ्चिद्रक्ता वृत्तकाया पिङ्गाशुगा च पिङ्गला । यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी । मूषिकाकृतिवर्णा अनिष्टगन्धा च मूषिका । मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा

पुण्डरीकसुखी। स्निग्धा पद्मपत्रवर्णाऽऽदशाङ्गुलप्र माणा सावरिका पञ्चधैं। सु सू १३ष ।

**जलार्द्रः (र्द्रा)** । पु स्त्री । आर्द्रवस्त्रे । भिजे कापड । चिका । हि च. । आर्द्रतालवृन्ते । माघ।

**जलार्व्वुद** । पु । वातकफजीव्ररोगे । "जलबु द्वुदवद्वातकफादीष्टं जलार्व्बुदम् ।" वा उ ११ष ।

**जलालु** । पु । पानीयालुके । रा नि व ७।

**जलालुकम्** । क्ली । पद्मकन्दे । भा पू १भ गा क व ।                [च टी भ ।

**जलालु(लौ)का** । स्त्री । जलौकायाम् । अ र ।

**जलाशय.** । पु । सरोवरे । शृङ्गाटके । क्ली । उशीरे । चम । लामज्जके । गन्ध (वेणा । रा नि व ८। स्त्री । गुण्डासायाम् । रा नि व ५ ।

**जलाश्रय** । पु । शृङ्गाटके । रा नि व ७। गुण्डतृणे । रा नि व ८ । ईृहामृगे । रा नि व १८। स्त्री । गर्भाटिकाह्वये गुल्मभेदे । रा नि व.८ । क्ली । लामज्जके । रा नि.व ११ ।

**जलाष्ठीला** । स्त्री । पुष्करिण्याम् । हारा ।

**जलाह्व(य)म्** । क्ली । बालके । बाला । उत्प ले । शुन्दि फूल । रा नि व १० ।                [अ र ।

**जलाच्ची** । स्त्री । जलपिप्पल्याम् । पाणिसगा ।

**जलिः (का)** । स्त्री । जलौकायां । च टी भ ।

**जलु(लू)का** । स्त्री । जलौकायाम् । अ र । हे च । चर्म्मचटिकायाम् । चा उ ६च ।

**जलेच्छया** । स्त्री । हस्तिशुण्डीवृक्षे । अ र. ।

**जलेजात(रुह)म्** । क्ली । पद्मे । अ र. ।

**जलेरुहा** । स्त्री । कुटुम्बिनीक्षुपे । रा.नि व ५।

**जलेवाह.** । पु । जलकुक्कुटे । वै निघ. ।

**जलेशयः** । पु । जलचारिमत्स्यादौ ।

**जलोका** । स्त्री । जलायुकायां । हारा । चम ।

**जलोदरः** । पुं, क्ली । तन्नामकोदररोगभेदे । पान् उदरी । निदानञ्चास्य यथा—"य स्नेहपी तोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरू ढ । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दूष्यन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथवापि तेषूदकोदरं पूर्ववदभ्युपैति । स्निग्धं महत्तत्परिवृत्तनाभि समाततं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ॥ जन्मैवोदरं सर्व्वं प्राय कृच्छ्रतमं मतं । बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥" इति । मा नि ।

**जलोदरारिरसः** । पु । जलोदराधिकारे र स । रसगन्धकौ प्र. २ तो. (मतान्तरे गन्धक ४ तो ) मन शिला हरिद्रा जयपालबीज त्रिफला त्रिकटु चित्रकमूलं एषां प्रति १ तो दन्तीरसेन स्नुहीक्षीरेण (सिजूर आठा) भृङ्गराजरसेन च ५ थक् ७ भावयित्वा सशोष्य च वटीं कुर्य्यात् । माधा २ र. ।

**जलोद्भव** । पु । शङ्खे । शाँक । वै निघ । स्त्री । लघुब्राह्मीशाके । कुडुमशाली । रा.नि व ४।१६ ।

**जलोद्भूता** । स्त्री । गुण्डासायाम् । रा नि व ५।

**जलोरगी** । स्त्री । जलौकायाम् । जोंक । च टी ।

**जलोलूका** । स्त्री । पद्मबीजे । रा नि व १० ।

**जलौकः** । पुं । जलवेतसे । वै निघ । स्त्री,(का) । जलायुकायाम् । हारा. ।

**जलौकाविधिः** । पु । तथा रक्तमोक्षणका र्ये । जोंक धरान । "अथ जलौकावसेकसाध्य व्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमव काशं मृद्गोमयचूर्णैर्यद्यरुज स्यात् । गृहीताश्च ता सर्षपरजनीकल्कोदकप्रदिग्धगात्री सलिल सरकमध्ये मुहूर्त्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत् । सूक्ष्मशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृतं कुर्यादगृह्णन्त्यै क्षीरबिन्दु शोणितबि न्दु वा दद्याच्छस्त्रपदानि वा कुर्वीत । यद्येवमपि न गृह्णीयात् तदान्यां ग्राहयेत् । यदा च निवि शतेऽश्वखुरवदाननं कृत्वोन्नमय्य च स्कन्धं तदा जा नीयात् गृह्णातीति गृह्णन्तीं चार्द्रवस्त्रावच्छन्नां धार येत् सेचयेच्च ।' इत्यादि । तत्र गुणा —"शीता धिवासा मधुरा जलौका वार्य्युद्भवा । तस्मान्नि त्तोपघाटे तु हिता सा सुखोषणा ॥" सु सू १३ष ।

**जलौदनम्** । क्ली । पक्वभक्ते । भा.कृत कि. ।

**जवनः** । पु । वेगे । शीघ्रगामिहरिणे । रा नि. व १८ ।

**जवनाल** । पुं, क्ली । यावनाले । धना १ ।

तद्वीजगुणा—स्वादु शीतलं वातल कफपित्त घ्नञ्च । राज. ।

**जवली** । स्त्री । कषायफलवृक्षे । जओयाव । त स्या फलगुणा —"कषाय कफपित्तघ्न किञ्चिति क्त रुचिप्रदम् । हृद्य सुगन्धि विशद जवलीफलमु च्यते ॥" सु ।

**जवसम्** । क्ली । तृणे । घास । अ र ।

**जवसाह्वा** । स्त्री । यमान्याम् । मद व २ ।

**जवा** । स्त्री । ओड्रपुष्पवृक्षे । जवाफुलेर गाछ । रा नि व १०। घृतभर्जितजवापुष्पम् भार्गवकरम् । च द ।

**जवादि** । क्ली । गन्धद्रव्ये । गन्धनाड़, थाटोनी। मं जवादीकस्तूरी । गुणा.—स्निग्धसुख सुखकर वातहितञ्च । तल्लक्षण—"जवादि नील सुस्निग्ध शीतवीर्य सुगन्धिद । आतपे बहुलामोद राज्ञा योग्य न चान्यथा ॥" रा नि व १२।

**जवानी** । स्त्री । यमान्याम् । मद व १ ।

**जवापुष्पम्** । क्ली । ओड्रपुष्पे । जवा फुल। अ र ।

**जवाह्वा** । स्त्री । यमान्याम् । मद व २ ।

**जविन:** । पु । विलेशयमृगविशेषे, कोकड़मृगे । रा नि व १८ ।

**जवी (इन्)** । पुं । अश्वे । उष्ट्रे । रा नि व १८ ।

**जसदम्** । क्ली । यशदे । दस्ता । वै निघ ।

**जह्वा** । स्त्री । मुण्डितिकायां । मुण्डीरी । अ च।

**जह्नवम्** । क्ली । भचके । रा नि व १० ।

**जक्ष्म. (क्ष्मा (न्))** । पु । क्षयरोगे । यक्ष्मा रोग । च टी भ । See यक्ष्मा ।

**जागत:** । पु । सोमलताभेदे । सु चि २९च ।

**जागर (णम) (री)** । पु, क्ली, स्त्री । निद्रा भावे । जागिया थाका । च.स. ।

**जागुडम्** । क्ली । कुङ्कुमे । रा नि व १२ ।

**जाघनी** । स्त्री । कटौ । त्रिका. ।

**जाङ्गमद्रव्यम्** । क्ली । जङ्गमजातद्रव्यविशेषु, म धुगोमूत्रपित्तवसामज्जामृग्मांसविण्मूत्रचर्मरेतोऽस्थि स्नायुशृङ्गनखखुरकेशरोमरोचनादीनाम् । च सू १ च ।

**जाङ्गल:** । पुं । कपिञ्जलपक्षिणि । गौर ति तिर पाखी । त्रि । मरुप्रायवातलदेशे । मरु प्राय देशो देश । "मरुप्रायस्तु यो देश स चोक्तो जाङ्गलाभिध ।" रा नि व २ । 'अल्पोदकोऽल्प वृक्ष पित्तरक्तामयान्वित । ज्ञातव्यो जाङ्गलो दे श ॥" गुणा —वातपित्तकर उष्ण रुक्षश्च। राज । अपिच—"आकाशशुभ्र उच्चश्च नतश्च स्व ल्पपादप । शमीकरीरबिल्वार्कपीलुकर्कन्धुसङ्कुल । हरिणैणर्क्षपृषतगोकर्णखरसङ्कुल । सुस्वादुफलवा-न्देशो वातलो जाङ्गल स्मृत ॥" भा. । तन्मांसगु णा —स्वादु त्रिदोषघ्न रुच्य पथ्यम् आयुर्बलवीर्य पुष्टिकान्तिकरञ्च । रा नि.व १४ । स्वल्पशरवर्ये । सोऽष्टविध यथा—जङ्घाला विष्किरा प्रतुदा गु हाशया प्रसहा पर्णमृगा विलेशया ग्राम्याश्च। तत्र जङ्घालविष्किरौ प्रधानतमौ तावेवहरिणर्श्य कुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्कारमृग मातृकाप्रभृतयो जङ्घाला कषाया मधुरा लघवश्च। "शशलावकवाताटा गोधा हरिणकूटका । विष्क रायाश्चशाखाश्च तित्तिराद्याश्च कूर्चका । भारद्वा जास्तथा श्येना मूषका वरवारणा । इत्येते जाङ्ग ला जीवा ये जलेन विना स्थिता ॥" अत्रि १० च । क्ली । मांसे । रा नि व १७।

**जाङ्गलमांसम्** । क्ली । शिखिखरादिजन्तुमां से । रा नि व १७ ।

**जाङ्गलयकृत्** । क्ली । जाङ्गलपशुयकृति । तच्च रक्तपित्तहरम् । वा चि २च । [जाङ्गुली । मि ।

**जाङ्गला (ली)** । स्त्री । शुकशिम्ब्याम् । आ

**जाङ्गुडम्** । क्ली । कुङ्कुमे । त्रिका. ।

**जाङ्गुलि:** । पु । विषवैद्ये । साँपुड़े । अ र । (ली) स्त्री । विषविद्यायाम् । है च. ।

**जाङ्घिक. (काङ्घय')** । पु । शीघ्रगामिनि । त्रि । उष्ट्रे । रा नि व १८ । त्रि । जङ्घाजीविनि ।

**जाजी** । स्त्री । जीरके । भा म अ मद चि । "दधा जीवर्धन जाजी ।"

**जाटलि:** । पु । पटोलसतायाम् । च.म. ।

**जाठर:** । पु । जठराग्नौ । वै निघ ।

**जाठरग्रन्थि:** । पुं । गुल्मरोगे । रा नि व.१० ।

**जाद्यम्** । क्ली । अनुष्ठत्वताम् । रा नि,व १०।

**जाद्यारि** । पु। जम्बीरवृक्षे । গোঁড়া নেবুর গাছ। रा नि व ११ ।

**जातकध्वनि** । पु। अलीकायाम् । वै निघ।

**जातकर्म्म** । क्ली । शिशौ भूमिष्ठे कर्त्तव्ये कर्म णि। नाडीच्छेदन। सूतिकापूजादौ।

**जातघ्नी** । स्त्री। पुत्रघ्नीनामयोनिदोषे। वा उ ३३अ । See पुत्रघ्नी। [कूर्ं। चम।

**जातरूपम्** । क्ली। सुवर्णे। रा नि व १३ । सु

**जातरूपप्रभम्** । क्ली । हरिताल । वै निघ ।

**जातवेदा.** । पु। अग्नौ । चित्रकवृक्षे । अम ।

**जातसारा** । स्त्री। जिङ्गियाम् वै.निघ.।

**जातापत्या** । स्त्री । प्रसूतायां स्त्रियि । अम।

**जाति** । स्त्री । जन्मनि । आमलक्याम् । माल तीपुष्पलतायाम्। जातीफल । मे । च चि ९अ गुञ्जाराचन्याम्। काम्पिल्लके। কমলাগুঁড়ি। विश्व । रोगसम्प्राप्तौ। मा नि । जातीपुष्पवृक्षे। च द वा व्या चि ।

**जातिकोश(ष)म्** । क्ली । जातीपत्रां। জয়িত্রী। जातीफले। भा। सु सू ४६अ । हे च ।

**जाति(ती)कोशा (षी)** । स्त्री। जातीप त्राम्। জয়িত্রী। रा नि व १२ । वै निघ २भ सुदर्शनचूर्णे।

**जातिजम्** । क्ली। जातीफले। वै निघ ।

**जाति(ती)पत्र(क)म्** । क्ली। जातीफले। "जातीपत्रसुपत्रपत्रकयुत ।" भा उ वाजी चि । वै.निघ २भ वा व्या चि एरण्डपाके। जातीवृक्ष पत्रे। চামেলীর পাতা। रस र बाल चि ।

**जातिपत्रिका (त्री) (र्त्री)** । स्त्री । जा तीफलत्वचि। জয়িত্রী। हि जावत्री। क जाइपत्री। गुणा – कटुतिक्तसुरभि कफजाड्य हरी मुखवैसद्यजननी च। रा नि व ११। दुर्ग न्धहरी । राज.। "जातीफलस्य त्वक् प्रोक्ता जा तीपत्री भिषग्वरै। जातीपत्री लघु स्वादु कटू ष्णा रुचिवर्णकृत्। कफकासवमिश्वासतृष्णाकृमि विषापहा।" भा ।

**जाति(ती)प्रवालः** । पु । जातिकिसलये। জাতিপাতা। च,सू ५म,।

**जातिफलम्** । क्ली । जातीफले। जयिफल। हे च ।

**जाति(ती)फलत्वक्** । स्त्री । जातीपत्राम्। জয়িত্রী। वै निघ । [न। वै निघ.।

**जाति(ती)रस.** । पु । रक्तबोले। निशाद

**जाति(ती)शस्यम्** । क्ली। जातीफले। জায় ফল। रा नि व १२। वै निघ २भ अतिसा चि. मोचरसपुटपाके । [नि व १२ ।

**जाति(ती)सारम** । क्ली। जातीफले। रा

**जाति(ती)सुत** । पु। जातीफले। वै निघ।

**जातिहिङ्गुलकम्** । क्ली। हिङ्गुल। वै निघ।

**जाती** । स्त्री। (Jasminum Grandiflo rum) स्वनामख्यातपुष्पवृक्षे। জাতি বা চামি লী ফুলের গাছ। हि चम्बली, स्वर्णजाती। म लाइ। क जाजि। गुणा —शीता तिक्ता कफघ्नी मुखपाकघ्नी च। तत्कुसुम नत्ररोगघ्न व्रणविस्फो टकघ्न कुष्ठघ्न। रा नि व १०। "जातीयुग तिक्त मुष्ण तुवर लघु दोषजित्। शिरोऽक्षिमुखदन्ता र्तिविषकुष्ठानिलास्रजित्॥' भा । मालत्याम्। सु सू ३६अ । जातीफलवृक्ष। वै निघ.।

**जातीकन्द** । पु जातीमूले। सु सू मिश्र च।

**जातीको(श)षम्** । क्ली। जातीफले। हे च।

**जातीकोषफलम्** । क्ली। जातीपत्राम् जातीफले च। জৈত্রী জায়ফল। वै निघ च क्षीर्णचि वह्निरसे। [निघ.।

**जातीजातम्** । क्ली। जातीकोषफले। वै.

**जातीतैलम्** । क्ली। कर्णरोगाधिकारे। "जा तीपत्ररसे तैलं विपक्व पूतिकर्णजित्।" कटुतैल ४ श जातीपत्ररस १६ श (वृन्दोपदेशात्) क ल्क यं जातीपत्र १ श । सा कौ ।

**जातीदलम्** । क्ली। जातीकोषे। জৈত্রী। वै निघ २भ रक्तपि चि कर्पूरादिचूर्णे। जातीपत्रे।

**जातीद्वयम्** । क्ली। जातीकोषफले। জায় ফল, জয়িত্রী। जीवकद्वयमिति तालीशादिचूर्णे वृन्दोपदेश । [कोषे। भा उ वाजीकरणे।

**जातीपत्रिका (त्री) (र्त्री)** । स्त्री । जाती

प्रत्येकं चत्वारि चत्वारि सङ्ख्यया षोडश भवन्ति । भा । चारके । जालि कुञी । मे ।

**जालकम्** । क्ली । कुष्माण्डाद्यतिक्षुद्रफले । जालि । सा.सु । कुटुम्बिनीक्षुपे । वै निघ. । मो चकफले । मे. । [हे.च. ।

**जालकारकः** । पुं । मर्कटे । माकडशा ।

**जालकिनी** । स्त्री । मेष्याम् । चिका. ।

**जालगर्द्दभः** । पु । क्षुद्ररोगविशेषे । अग्नि दाह । तस्य लक्षण यथा—'विसर्पवत्सर्पति यो दाहज्वरकरस्तनु । अपाक श्वयथु पित्तात्स ज्ञेयो जालगर्द्दभ ॥'' सु ।

**जालपात्** । पु । हंसे । चिका ।

**जालमोटा** । स्त्री । शुक्लयूथिकायां । वै.निघ ।

**जालवर्व्वूरकः** । पुं । वर्व्वूरकवृक्षभेदे । बाब् ला विशेष । गुवड, जालि । गुणा —कच्छ या तरोगघ्न पित्तक्लेषाघोषा कफघ्नत् दाहकरश्च । रा.नि व ८ । [निघ ।

**जालवव्वूलिका** । स्त्री । बव्बूलविशेषे । वै.

**जालविन्दुजा** । स्त्री । यावनालीशर्करायां । रा नि.व.१४ ।

**जालसंज्ञकः** । पु । शुक्लगतनेत्ररोगविशेषे । চক্ষে জালি পড়া । लक्षण —"जालाभ कठिन शिरोमहान् सरक्त सन्तान स्मृत इह जालसंज्ञितन्तु ।'' सु.उ ४अ. ।

**जालक्षीरम्** । क्ली । तन्नामकवृक्षस्य क्षीररूप विषे । सु.कल्प २अ । See क्षीरविष ।

**जालिः** । स्त्री । खाद्यद्रव्यविशेषे । क्षालि । छि नारी । "मासमाषफल पिष्ट राजिकालवणान्वितं । भ्रष्टहिङ्गुयुत पूतं घोलित जालिरुच्यते ॥'' गुणा —जिह्वाकण्ठघ्नी कण्ठशोधनी रोचनी दीपनी च । भा. । [शा । हे च. ।

**जालिकः (कारः)** । पुं । मर्कटे । माकड़

**जालिका (की)** । स्त्री । कोषातक्यां । झि-ঙা । रा.नि व ३ । जलौकायां । श्रीहे । वस्त्र भिदि । मे. ।

**जालिनी** । स्त्री । महाकोषातक्यां । ঝিঙা । रा नि.व.३ । वै.निघ,क्रामला चि. । घोषालता

याम् । ঘোষালতা । र मा । सु चि र४ । दैवे दाल्याम् । দেয়াতাড়া । दारुहरिद्रायाम् । वै. निघ । प्रमेहपिटिकाभेदे । लक्षण —"जालिनी तीव्रदाहा तु मांसजालसमावृता ।'' सु नि६अ. । असाध्यलूताभेदे । सु कल्प.८अ. । See लूता ।

**जालिनीफलम्** । क्ली । घोषाफले । ঘো-ষাফলের বীচি বা ঝিঙের বীচি । च द.पाण्डु चि । गुणा —शिरोरोगपाण्डुरोगहर वमकरञ्च । ऋषि. ।

**जाली** । स्त्री । पटोललतायाम् । रा नि व.७ । घोषायाम् । प सु । ज्योत्स्नाम् । ঝিঙা । अम. ।

**जावकः** । पु । अलक्तके । वै निघ. ।

**जापकम्** । क्ली । कालीयचन्दने । পীত চন্দন । अ टी सा. ।

**जाहकः** । पु । कृकलासे । কান গিরগিট্ । रा नि व १८ । गोनाससर्पे । जलौकायाम् । वै. निघ । विडालि । श.र. । चिका. । घोङ्गे । ঘোং । मे । [कायां । জোঁক ঝারা ।

**जाहकध्वनि.** । पु । घोङ्गे । ঘোংগ । जलौ-

**जिगत्नु** । पु । उच्छ्वासे । प्राणवायौ । उणा. ।

**जिघत्सा** । स्त्री । क्षुधायाम् । हे च ।

**जिङ्गिनी** । स्त्री । गुड़मञ्जनिकायाम्, गुलदुली इति ख्याता । भैष योनिव्यापच्चि. । सु सू. लोध्रादि. । "जिङ्गिनी कृष्णशाल्मली ।' श सू १५ अ.रोध्रादि , च.वि ८अ. । गुणा —"मधुरा सीता कषाया योनिशोधनी । कटुका व्रणहृद्रोगवातातीसारहृत्पट् । तमालस्तालवद्देयो दाहविस्फोटहृत् पुन ॥'' भा वटादि ।

**जिङ्गिः (ङ्गी)** । स्त्री । मञ्जिष्ठायाम् । प सु. कन्दर्पसारतैले । च.द.मेह चि. । गुड़मञ्जनिकायाम् । सु सू.३८अ. ।

**जिज्ञासा** । स्त्री । परीक्षायां । यथा—"भेषजपरीक्षोत्तरकालमुपदेक्ष्यति ।'' च.वि.८अ. ।

**जितेन्द्रियाह्वः** । पुं । कामदहिनामक्षुपे । रा नि व ४ ।

**जिनयोनिः** । पुं । हरिणे । श.र. ।

**जिभ्ममोहनः** । पुं । भेके । श.र. ।

**जिभगल्य** । पु । खदिरे । रा नि व ८ ।

**जिभा (भ्भिका)** । स्त्री । जृम्भिकायाम् । शाई । रा नि व २० ।

**जिवाजिव** । पु । जीवञ्जीवपक्षिणि । अ र

**जिष्णि** । पु । पक्षिणि । उणा ।

**जिह्मम्** । क्ली । तगरपादुके । प मु । रा नि व १० । ज द १२५ । पिण्डीतगरे । वै निघ । पुं स्त्री । जिह्वायाम् । भटी भ ।

**जिह्मग** । पु । सर्पे । जिह्वकसन्निपाते ।

**जिह्वक** । पु । तन्नामकसान्निपातज्वरविशेषे । लक्षणम्—"श्वसनकासप्रतापविह्वल कठिनक एटकवतोऽतिजिह्वक । वधिरमूकबलहीनलक्षणो भवति कष्टतरसाध्य एव वै । वै निघ । अस्य तन्नामरीतलक्षण भावप्रकाश मृग्यम् ।

**जिह्वा** । स्त्री । रसनेन्द्रिये । जिभ । रा नि व १८ सा च उदरे पच्यमानकफशोणितमांसमार भूता । सु शा ४ष । तद्दोषा यथा—वातेन—शाकपत्रनिभा रूक्षा स्फुटना च । पित्तेन—रक्ता श्यावा च । कफेन सिरा आर्द्रा धवला च । त्रिदोषेण—परिदग्धा खरस्पर्शा तथा च । दोष दयाधिक्येन दोषहितयलक्षणा च । भा ।

**जिह्वानिर्लेखनम्** । क्ली । जिह्वामलहरद माकुलकशिकायाम् । चियडि जिह्वछोला इति लोके । "जिह्वानिर्लेखन रौप्य सौवर्ण वाक्षमेव च । तन्मलापहरं शस्त मदुश्लक्ष्णं दशाङ्गुलम् ।' सु चि २४ष । "निहन्ति वक्त्रवैरस्य जिह्वादन्ता श्रित मलम् । आरोग्य रुचिसाधने सद्यो दन्तवि शोधनम् । राज १प ।

**जिह्वाप** । पु । विडाले । कुक्कुरे । भल्लूके । श र. । चित्रव्याघ्रे । विश्व ।

**जिह्वाप्रबन्ध** । पु । जिह्वामूले । वा उ,२१ष ।

**जिह्वामलम्** । क्ली । रसनामले । चिकि. ।

**जिह्वारद** । पु । पक्षिणि । हारा. ।

**जिह्वारोग** । पुं । जिह्वागतरोगे । जिदेर रा प्रकृति । नि । स पञ्चधा—"वातज पित्त कफादि कफजोपजिह्वक । उपजिह्विका च वदा जिह्वाया पञ्च कीर्तिता । जिह्वानिल्न स्फु टिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा । पित्तात्स दाहैरुपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च । कफेन गुर्वी बहुलाचिता च मांसोच्छ्रयैः शाल्म लिकण्टकाभैः । जिह्वातले य श्वयथुः प्रगाढ सो ऽलाससज्ञ कफरक्तमूर्त्तिः ।" इत्यादि । मा नि । अधिजिह्विकोऽपीति पठितमाह वाभट यथा—"शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता । जि ह्वा पित्तात्सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता । शाल्म लीकण्टकाभैस्तु कफेन बहुला गुरु । कफपित्ता दध शोफो जिह्वास्तम्भकृदुन्नत । मत्स्यगन्धिर्भवेत्स च सोऽलसो मांसशातन प्रबन्धनेऽधो जिह्वा या शोफो जिह्वायसन्निभ । साङ्कुर कफपित्तास्रै र्लालोषास्तम्भवान् खर । स अधिजिह्व सरक्तर्र्वा क्याहारविघातकृत् । तादृगेवोपजिह्वस्तु जिह्वाया उपरिस्थित ॥ वा उ २१ष ।

**जिह्वालिट्** । पु । कुक्कुरे । वै निघ ।

**जिह्वास्तम्भ:** । पु । तन्नामवातव्याधौ । त्रिङ एडाम्न शा १९ा । "वाग्वाहिनीशिराम स्थो जिह्वा स्तम्भयतेऽनिल । जिह्वास्तम्भ स तेना न्नपानवाक्यस्वनीशता जिह्वास्तम्भ यथावस्थ वात व्याधिचिकित्सितम् । सामान्योता क्रियायाश्च हितस्यापि हिता मता ॥' भद्रस्य मुखरोगे । ज द २८ष । See मुखरोग ।

**जीन** । पु । वृद्धे । रा नि व १८ ।

**जीमूत (क)** । पु । मुस्तायाम् । भद्रा । रा नि व ६ । पीतदेवदाल्याम् । भा । देवदाल्याम् । (देवताड़ा । रा नि व ३ । घोषकलतायाम् । (घे या लता । इ च । क्ली । घासफल । च न १ष ।

**जीमूतकतैलम्** । क्ली । कोशातकीतैले ।

**जीमूतमूलम्** । क्ली । मुस्ताम् । प मु ।

**जीमूताह्वा** । स्त्री । देवदाल्याम् । (देवताडा ड़ा । जलमुस्तायाम् । वै निघ ।

**जीर (क) (ण)** । पु क्ली । (Cuminum cyminum) Cumin seed तन्नामख्या तद्रूपे । दड़ छो ट, भाला छोड । हिं जीरा । तै जीलकर । गुणा,—कटुत्व वातघ्न दीप न गुल्माध्मानातिसारघ्न ग्रहणीकृमिहृत् । रा नि व ६ । जीरका पञ्च तत्र श्वेतकृष्णशुक्लमन्या कटुर्वा, कश्मीरक इति मत । भावप्रकाश

र्निर्भेदामाह शुक्लकृष्णकश्मीरजीभेदेन । गुणाः—दीपनं पाचनम् उष्णलाद्बलशोधकं ग्राहि च । शार्ङ्ग.। लघु संग्राहि गर्भाशयशुद्धिकरं ज्वरघ्नं पाचनं वृष्यं बल्यं रुच्यं कफघ्नं चक्षुष्यमतिसारघ्नञ्च । भा. । त्रिशेषाः पर्याये द्रष्टव्याः । "एतत्तैलं निषितैलगुणं ज्ञेयम् । अत्रि. ।

**जीरकद्वयम्** । क्ली । शुक्लपीतजीरके । गुणाः —"तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम् । कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥" सु.सू. ४६अ. । [वातपित्तघ्नी । अत्रि.१५ ।

**जीरका** । स्त्री । शालिधान्यविशेषे । सा च

**जीरकादिमोदकः** । पुं । ग्रहण्यधिकारे । जीरकचूर्णं ८ प. घृतभर्ज्जितसिद्धिबीजचूर्णं ४ प. लौहम् अभ्रं वङ्गं मधुरिका तालीशपत्रं जयित्री जातीफलं धान्यकं आमलकी हरीतकी विभीतकं गुडत्वक् तेजपत्रम् एला नागकेशरं लवङ्गं शैलजं सारचन्दनं रक्तचन्दनं जटामांसी द्राक्षा शटी टङ्कणक्षारः कुन्दुरुखोटी यष्टिमधु वंशरोचना काकोली वालकं गोरक्षी गन्धी पिप्पली मरिचं धातकीपुष्पं बिल्वपेशी अर्ज्जुनत्वक् शलुका देवदारु कर्पूरं प्रियङ्गुः जीरकं मोचरसं कटुकी पद्मकाष्ठं मल्लिका एषां प्रतिचूर्णं २ तो. सर्व्वचूर्णद्विगुणा शर्करा एकत्र पचेत् । मात्रा १ तो. ।

**जीरकाद्यघृतम्** । क्ली । ग्रहणीयाधिकारे । "जीरकपक्वं पश्चाग्निकृच्चमस्र्म्मरमभिघ्नितं हन्ति । घृतमभ्यङ्गात्पावकदम्भमद्दु ष्टं यथाईन ॥" गव्यघृतं ४ श. पाकार्थजलं १६ श. । कल्कार्थजीरकं ८ प.। सिद्धे सिक्थमर्म्मरयोः (मम ७ धुना) ४ प. प्रक्षेपः । अन्यत् अम्लपित्ताधिकारे—"पिप्पलीजीर्णं मधान्याकां घृतःम्यं विपाचयेत् ।" गव्यघृतं ४ श. कल्क. १ श. जलं १६ श. । च.द. ।

**जीरिका** । स्त्री । वंशपत्रीतृणे । रा नि.व.८ ।

**जीर्णः** । पुं। जीरके । रा.नि.व ६। क्ली। शैलजे । रा.नि.व.१२ । त्रि । वृद्धे । पक्वे । रा.नि.व.१८ ।

**जीर्णज्वरः** । पुं। पुरातनज्वरे । पुराअन ज्वर। द्वादशदिवसातीते वा तद्द्विगुणातीते वा एकविंशदिवसातीते वा तनुभावं गतो यो ज्वरः काये तिष्ठति । तत्र द्वादशदिवसातीते ज्वरः जीर्ण. इति भावप्रकाशः । एकविंशदिवसातीते इति सि. यो. । र.सा.सं.। "त्रिसप्ताहे व्यतीते तु ज्वरोऽयस्तनुतां गतः । प्लीहाग्निमान्द्यं कुरुते स जीर्णज्वर उच्यते ॥" "यो द्वादशभ्यो दिवसेभ्य ऊर्द्ध्वं दोषत्रयक्षद्विगुणेभ्य ऊर्द्ध्वं । तथा तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एष जीर्णः ॥" भा ।

**जीर्णदारुः** । पुं । वृद्धदारकविशेषे । दान दिचडाडक । बीजगुणाः—गौल्यं पिच्छिलं कफवातकासामदोषघ्नं बल्यञ्च । रा.नि व.३ ।

**जीर्णपत्रः** । पुं । पट्टिकारोध्रे । रा नि.व ६ ।

**जीर्णपत्रिका** । स्त्री । वंशपत्रीतृणे । रा नि. व.८ । [त्रिका. । पुरातनपत्रे ।

**जीर्णपर्णः** । पुं । पट्टिकारोध्रे । कदम्बवृक्षे ।

**जीर्णफञ्जी** । स्त्री। कृष्णवृद्धदारके। रा.नि.व.३।

**जीर्णवाल्नः (लुकः)** । पुं । कृष्णवृद्धदारके । रा.नि.व३ । स्थूलजीरके । रा.नि.व.६ ।

**जीर्णवु(त्र)ध्नः** । पुं । पट्टिकारोध्रे । शाठिश्यालाकोन । रा.नि.व.६ । मुस्तायाम् । वै निघ. ।

**जीर्णवुध्नकम्** । क्ली । परिपेलवृक्षे । (देउटे नुडा । रा नि.व.८ ।

**जीर्णवज्रम्** । क्ली। वैक्रान्तमणौ। रा नि.व.१३।

**जीर्णा** । स्त्री । स्थूलजीरके । रा.नि.व.६ ।

**जीर्णाहारः** । पुं । आहारस्य जीर्णावस्थायां । आहार परिपाक अवस्था । लक्षणं—"उद्गारशुद्धिरुत्साहो वेगोत्सर्गौ यथोचितः। लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥" भा. ।

**जीर्विः** । पुं । शरीरे, काये । शब्दम उषा. ।

**जीवः** । पुं । जीवकवृक्षे । त्रिवृद्रकृष्टे । प.मु. । प्राणिनि, अग्नौ । त्रिका. । कर्णे । धरणिः । जीविते । मे. ।

**जीवकः** । पुं । (Pentaptera tomentosa) A medicinal plant, commonly called jivaka. अष्टवर्गान्तर्गतस्वनामख्यातवृक्षरूपे । जीवक । हिं जीवक । तं वैद्गिमपुचिटु । गुणाः—मधुरः शीतः रक्तपित्तघ्नः वातघ्नः क्षयदाहज्वरघ्नः शुक्रश्लेष्मवर्द्धनश्च । रा.नि.व.५ । See ऋषभकः । एतदभावे गुडूची ग्राह्या। क्षपणके । सेवानिन । तन्नामकनर्त्तकविशेषे । मे. ।

बलादियुक्त । प्रकोपकाली नियतश्च यत्र देवा दिजकः मनसो विकारः ॥'' भा. ।

**देश्या** । स्त्री। सुरामांसां । ब्राह्मीक्षुपे । वै निघ.।

**देशः** । पुं । स्थाने । स त्रिविध , आनूपजाङ्गल मिश्रभेदेन । विशेषा पर्याये द्रष्टा । [निघ.।

**देशसमाख्यबीजम्** । क्ली । इन्द्रयवे । वै.

**देशिनी** । स्त्री । तर्जन्याम् । श.र ।

**देहः (कः)** । पुं क्ली । लेपने । शरीरे । रा नि. व.१८। स स्थूलकृशमध्य इति त्रिविध —'कर्षये द्बृंहयेवापि सदा स्थूलकृशौ नरं। रक्षणचैव मध्यस्य कुर्व्वीत सततं भिषक्। यस्मादलवत सर्व्वक्रियाप्र तिषत्याहलमप्रधानमधिकरणानाम् । केचित्कृशा मांसवन्त स्थूलाश्चाल्पबला नराः । तस्मात् स्थिरत्व व्यायामैर्बल वैद्य प्रतर्कयेत् ॥'' सु.सू.३५प्र. ।

**देहकोपः (चर्म्म)** । पु । त्वचि । चामडा, त्वक् । वै.निघ । पक्षे । पाथो । श्र.च. ।

**देहत्वक्** । स्त्री । चर्म्मणि । वै निघ. ।

**देहदः** । पु । पारदे । रा नि व १३ ।

**देहदुर्गन्धता** । स्त्री । शरीरदौर्गन्ध्ये । गात्रे दुर्गन्धः । तन्नाशकौषधं यथा—अर्ज्जुनपुष्प जम्बूपत्र लोध्रचेति समभागं लिपेत् । पुराणम् ।

**देहधारक(ण)म्** । क्ली । अस्थनि । हे च. । आहारे । वै निघ ।

**देहधिः** । पु । पक्षे । पाथो । श्र च.।

**देहपम्** । पु । वायौ । वै.निघ ।

**देहभृत्** । पु । जीवे, प्राणिनि । वै.निघ ।

**देहयात्रा** । स्त्री । गमने । यत्रे । भोजने । त्रिका. ।

**देहला** । स्त्री । सुरायाम् । वै.निघ. ।

**देहवल्कलम्** । क्ली । वचायाम् । छल्लि । रा नि व १८ ।

**देहसारः** । पुं । मज्जायाम् । रा.नि व.१८ ।

**देहक्षयः** । पु । रोगे । श.च. ।

**देहिका** । स्त्री । उपजिह्विकाकीटे । पोका । त्रिका. ।

**देही (हिन्)** । त्रि । शरीरिणि । त्रिका. ।

**दैत्यः** । पुं । जीवे । रस रत्नसमुच्चये । -

**दैत्यग्रहः (त्योन्माद)** । असुरग्रहे । तल्लक्षणं यथा—"जिह्मदृष्टि दुरात्मानं गुरुदेवद्विजद्विषं। निर्भयं मानिनं शूरं क्रोधनं व्यवसायिनं। रुद्र स्क न्दो विशाखोऽहमिन्द्रोऽहमिति वादिनं । सुराणां मद्यचि विद्यात् दैत्यग्रहगृहीतकम् ॥" वा उ.४ व्या.चि । दैत्यावेशजन्योन्मादरोगे । तल्लक्षणं— "सस्वेदो द्विजगुरुदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः । सन्तुष्टो भवति न चान्नपानजातै दुष्टात्मा भवति स दैत्यजुष्टः ॥" भा ।

**दैत्यमेदजः** । पु । भूमिजगुग्गुलौ । महिषा क्षगुग्गुलौ । रा.नि.व.१२ ।

**दैत्यरक्तकम्** । क्ली । हिङ्गुले । र.सा सं ।

**दैत्या** । स्त्री । सुरामांस्याम् । रा नि व.१२ । म द्ये । त्रिका । यमानीभेदे । वै निघ. ।

**दैत्येन्द्रः** । पु । गन्धके । भैष पञ्चाननरसे ।

**दैत्येन्द्ररक्तम्** । क्ली । हिङ्गुले । सा कौ.वि दोषमौद्गाररसे ।

**दैन्यम्** । क्ली । जीवविषण्णतायाम् । भा ।

**दैर्घरात्रिकः** । त्रि । मारात्मके । च चि ६४।

**दैवम्** । क्ली । पूर्व्वकृतकर्म्मणि । "दैव पुरा यत् कृतमुच्यते तु ।'' च.शा.२प्र. ।

**दैवच्छिद्रम्** । क्ली। कर्म्मच्छिद्रे । वा उ.१४४ ।

**दैवदारु** । क्ली । देवदारुणि । र.सा. ।

**दैवदीपः** । पु । लोचने । त्रिका. ।

**दैवबलप्रवृत्तः** । पुं । व्याधिदैविकरोगेषु । वै देवद्रोहादभिशस्तका अथर्व्वकृता उपसर्गकृता । तेऽपि द्विधा,विद्युदशनिकृता. पिशाचादिकृताश्च । सु सू.२४प्र. ।

**दैवव्यपाश्रयः** । त्रि । मणिमन्त्रौषधपूर्व्वक कारकपौषधवाचके । च.वि ८प्र. ।

**दैवी** । स्त्री । बलिपूजादिकृते चिकित्साविशेषे । यथा—"आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता ।'' वैद्यकम् ।

**दैवोदासिः** । पुं । दिवोदासापत्ये । श नि. ।

**दोः** । पुं । बाहौ । रा.नि.व.१८ ।

**दोःशिखरम्** । पुं । स्कन्धे । रा.नि.व.१८ ।

**दोण्डिका (ण्डी)** । स्त्री । तरदीलतायाम् कोषातक्याम् । वै.निघ. ।

**दोधः** । पुं । गोवत्से । (छन्दःशास्त्रम्) ।

**दोर्गडुः** । त्रि । बाहुकुब्जे । दूलो । त्रिका. ।

**दोर्दण्डः** । पुं । बाहौ । भूरिप्र. ।

**दोर्मध्यम्** । क्ली । बाहुमध्यभागे । হাতের বা জু । शब्दार्थकल्प ।

**दोर्मूलम्** । क्ली । बाहुमूले । बगल । वै.निघ. ।

**दोला (लिका)** । स्त्री । नीलीवृक्षे । वै.निघ. । क्रीडार्थं काष्ठादिमये हिन्दोलके । হিঁদলা । तद्भ्रमणगुणाः—वातकोपनत्वम् भङ्गस्थैर्यबलाग्निकारित्वञ्च । राज. ।

**दोलायन्त्रम्** । क्ली । रसस्वेदनार्थं यन्त्रविशेषे । तस्य लक्षणम्—"निबद्धमौषधं मूतं भूर्जे तन्त्रिगुणे वरे । रसपोटलिका काष्ठे दृढं बद्धा गुणेन हि । सन्धानपूर्णकुम्भान्तः स्वावलम्बनसंस्थितम् । अधस्ताज्ज्वालयेदग्निं तत्तदुक्तक्रमेण हि । दोलायन्त्रमिदं प्रोक्तं स्वेदनाख्यं तदेव हि ॥" भा. । "द्रवद्रव्येण भाण्डस्य पूरितार्द्धोदरस्य च । मुखे तिर्य्यक्कृते दण्डे द्रव्यं सूत्रेण लम्बयेत् । स्वेदयेदान्तरगतं दोलायन्त्रमुदीरितम् ॥" अत्रि. ।

**दोषः (कः)** । पुं । वातपित्तकफरजस्तमोरूपेषु । श.च । तत्र आद्यास्त्रयः शारीरदोषाः । द्वितीयौ मानसौ तत्र त एव धातुमलपदवाच्याः । "तेषु क्रमादमी दोषाः कफपित्तानिलाः स्थिताः ।" रा.नि. व २१ । "मानसः पुनरुद्दिष्टो रजश्च तम एव च ।" च सू ४अ. । तन्निरुक्तिः—"वातश्च मलाश्चापि दुष्यन्त्येभिर्यतस्ततः । वातपित्तकफा एते त्रयो दोषा इति स्मृताः । ते धातवोऽपि विद्वद्भिर्गदिता देहधारणात् । मलाश्च ते रसादीनां मलिनीकरणान्मताः ॥" भा. । उक्तञ्च यथा—"दोषधातुमलमूलं हि शरीरम्... । तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति । सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्य्यकृत् श्लेष्मा पञ्चधा प्रविभक्त उदककर्म्मणानुग्रहं करोति । रागपक्त्योजस्तेजोमेधोष्मकृत्पित्तं पञ्चधा विभक्तम् अग्निकर्म्मणानुग्रहं करोतीति । एषां विधिवत् परिरक्षणं कुर्व्वीत । एषां त्रयो मन्दचेष्टता मन्दोष्मता-रूक्षतादिदेहहानिरायाति । तत्र स्वयोनिवर्द्धनद्रव्याण्येव प्रतीकारः । एषां वृद्धौ त्वक्पारुष्यादिकं भवति । तेषां यथास्वं संशोधनं क्षपणञ्च चयादविरुद्धैः क्रियाविशेषैः प्रतिकुर्व्वीत ॥" सु सू. १५अ. । गोवत्से । श. र । [प.मु. ।

**दोषकरः** । पुं । लकुचवृक्षे । মান্দার গাছ ।

**दोषघ्नः** । पुं । वैद्ये, चिकित्सके । हे.च । त्रि । दोषवेत्तरि । [कफे च । रा.नि.व.१२ ।

**दोषत्र(त्रित)यम्** । क्ली । मिलितवातपित्तकफे च ।

**दोषपाचनः** । पुं । कपित्थवृक्षे । प.मु. । त्रि । दोषपाचके ।

**दोषप्रकृतिः** । स्त्री । दोषाणां स्वमार्गसञ्चारे । भा.ज्व.चि । वातादीनां यथाक्रमं वर्षाशरद्वसन्तप्रकोपे वसन्तशरत्कोपे वा । "यथर्त्तुकुपितो दोषो दोषप्रकृतिरुच्यते ।" वि.र. ।

**दोषबलप्रवृत्तः** । पुं । रोगविशेषे । ते च ते रोगा ये आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च । तेऽपि पुनः द्विधा आमाशयोत्थाः पक्वाशयोत्थाश्च । एतएवाध्यात्मिकरोगाः कथ्यन्ते । सु.सू २४अ. ।

**दोषलः** । त्रि । दोषयुक्ते ।

**दोषशमनवस्तिः** । पुं । निरूहवस्तिभेदे । यथा—"प्रियङ्गु मधुकं मुस्ता तथैव च रसाञ्जनम् । सक्षीरं शस्यते बस्तिः दोषाणां शमनः परम् ॥" भा. ।

**दोषहरवस्तिः** । पुं । तन्नामकनिरूहवस्तौ । "शताह्वा मधुकं विल्वं कौटजं फलमेव च । सकाञ्जिकः सगोमूत्रो बस्तिर्दोषहरः स्मृतः ॥" भा. ।

**दोषा** । स्त्री । बाहौ । रा.नि.व.१८ ।

**दोषा(षात्)क्लेशी** । स्त्री । वनवर्वरिकायाम् । বন বাবুই । रा नि.व.१० ।

**दोषातिलकः** । पुं । दीपे । त्रिका. ।

**दोषान्धः** । पुं । दृष्टिरोगभेदे । लक्षणं—"अर्केऽस्तमस्तकन्यस्तगभस्तौ शम्भुमागते । व्यक्तायन्ति हतं दोषाः दोषान्धः स गदोऽपरः ॥ दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः । विनीनलीना यच्छन्ति व्यक्तमत्राक्षि दर्शनम् ॥" अत्र रोगिणो दिवादर्श पश्यन्ति । वा.उ.१२अ. ।

दीपिकः । पुं । रोगे । श.च. । [निघ ।
दोहः । पुं । दोहने । दोहनपात्रे । दुग्धे । वै.
दोहजम् । क्ली । दुग्धे । शब्दार्थकल्पतरु. ।
दोहदः (लः) । पुं । गर्भिणीदोहदे । सोध । हे.च. । गर्भचिह्ने । भरतघृतकोषान्तरम् ।
दोहदलक्षणम् । क्ली । गर्भधारणे । गर्भे । वय.सन्धौ । मे ।
दोहदवती । स्त्री । गर्भवत्यां स्त्रियां । हे च.।
दोहनम् । क्ली । स्तनाद्दुग्धनि सारणे । (मे ना । [नभाख्ये । विका. ।
दोहनी । स्त्री । धातकीवृक्षे । वै.निघ । दोह
दोहलवती । स्त्री। दोहदवत्यां। शब्दार्थकल्प.।
दोहली । स्त्री । अशोकवृक्षे । रा.नि.व १० ।
दोहापनयः (पयनम्) । पुं,क्ली । गव्यदुग्धे । विका. । वै निघ. । [ल । वा.उ.१७अ ।
दौग्धिकम् । क्ली । दुग्धिकामूले । थिवाईमू
दौण्डिका । स्त्री । कोषातक्यां । वै निघ. ।
दौर्गन्ध्यम् । क्ली । दुर्गन्धताकफपित्तजरोगविशेषे । दुर्गंकता । तन्नाशकतैलं —"चन्दनं कुङ्कुमं मांसी कर्पूरं जातिपत्रिका । जातीकक्कोलपूगानां लवङ्गस्य फलानि च । अगुरुगौरकाश्मर्यं कुष्ठ तगरमालिका । गोरोचना प्रियङ्गुश्च चोल मदनकं नखं । सरल. सप्तपर्णश्च लाक्षा चामलकी तथा । कर्चूरकः पद्मकञ्च एतैस्तैलं प्रसाधितम् ॥" गारुडे प्रतिद्दम् ।
दौर्बल्यम् । क्ली । दुर्बलतायाम् । वै निघ ।
दौर्वीणम् । क्ली । दृष्टपर्णे । दुर्वारसे । मे ।
दौर्हृदम् । क्ली । गर्भे । दोहदे । हे.च ।
दौलेयः । पु । कच्छपे । हे.च । [निघ. ।
दौष्कुलेयः । पुं। शमिपर्णवृक्षे। (गोंटेला । वै.
द्युकः । पुं । पेचके । वै.निघ. ।
द्युकारिः । पुं । काके । वै निघ ।
द्युगः । पुं । पक्षिणि । रा नि व १८ ।
द्युतरुः । पुं । कल्पतरौ । वै निघ. ।
द्यु(ति)मणिः । पु । सर्ककवृक्षे । अग. । र.सा, स विद्याधररसे । मारितताम्रे । मा म.१भ.ज्व.चि. त्रिपुरभैरवरसे । "द्युमणिरकमार्दकमर्दितम् ।"
द्युम्नम् । क्ली । बले । मे. ।
द्यूतबीजम् । क्ली । कपर्दके । विका. ।
द्योतनम् । क्ली । दर्शने । हे च ।
द्योभूमिः । पुं । पक्षिणि । श च. ।
द्योवम् । क्ली । वीजे । उणा. ।
द्रङ्क्षणम् । क्ली,पुं । टङ्कद्वयमाने । (इति कालिङ्गमानम्) । "सुवर्णैरटकश्चापि द्रङ्क्षणः स निगद्यते । आषौ वी द्रङ्क्षण ।" (इति मागधमानम्) प.प्र १ख. । तोलके । श मा ।
द्र(द्रा)प्स[प्सा]म् । क्ली । तरलदधनि । वप्रा दहे । अम । अ.टी.भ. ।
द्रवः । पु । तक्रे । रा नि.व १५ । तरले । पातला । गुणा —क्लेदकर. व्यापकत्व, शुष्क. विपरीतगुण । भा. । रसे । विश. । क्ली । जले । सि.यो. उन्मा चि मज्जापैशाचघृते ।
द्रवजः । पु । शर्करायाम् । गुडे । रा नि.व.१४।
द्रवत्पत्री । स्त्री । गिमड़ीवृक्षे । रा नि.व.४।
द्रवद्द्रव्यम् । क्ली । तरलद्रव्ये ।
द्रवन्तिका (न्ती) । स्त्री। (Anthericum tuberosum) स्वनामख्यातक्षुपे । मुशली लता, बुड़िशुआपान, मूषाकाणी । मं मोंपती । कं वल्लिहर्द । तें एलुकचेविचेट्टु । गुणा.—मधुरा शीता रसवश्यकरी ज्वरक्रमिशूलघ्नी च । रा.नि. व ५ । क्षणदन्तीक्षुपे । र.मा । बृहद्दन्त्याम् । चौरितपत्रदन्तीभेदे । च मृ १५. । सु मृ.१९७. । सुतश्रेणीनामकक्षुपे । ईन्द्रुरमाशी । रा नि व ४ । कुष्माण्डकर्णीलतायाम् । रा.नि.व.१ । वा.मृ हेमा. टी.१५.प्रमादि । "श्यामा दन्ती द्रवन्ती ।" क्षुद्रदन्त्याम् । च मृ.१५. ।
द्रवरसा । क्ली । लाक्षायाम् । रा.नि व.६ ।
द्रवशूलः । पु । अन्नद्रवशूले ।
द्रवस्वेदः । पु । वातहरस्वेदविशेषे । स च द्रव्यक्वाथपूर्णे कटाहे, दरुविनिर्मितकुण्डायामोल्लापयुक्ते चतुष्कोणे सौवर्णादिकोष्ठके वा अवगाह्योपविश्य च गृह्यते । "द्रवस्वेदस्तु वातघ्नो द्रव्यक्वाथेन पूरि-

ते । कटाहे कोष्ठके वापि सुपविष्टोऽवगाहयेत् ।
सौवर्णं राजतं वापि ताम्रं लौहञ्च दारुजम् ।
कोष्ठकं तत्र कुर्व्वीतोच्छ्राये षड्‌विंशदङ्गुलं । आ
यामे वा तदेव स्यात्तत्कोणन्तु विवर्णम् ॥" भा. ।

**द्रवा ।** स्त्री । मेदायाम् । रा.नि.व.५ ।

**द्रविड़ी ।** स्त्री । एलायाम् । वै.निघ.१भ,वा.
व्या.चि.शतावरीतैले । [मे. ।

**द्रविणम् ।** क्ली । सुवर्णे । रवे । बले । अम. ।

**द्रविणनाशनः ।** पुं । शिग्रुवृक्षे । नक्तिना
गाछ । श.र. ।

**द्रवीकरणम् ।** क्ली । तरलतापादने ।

**द्रव्यम् ।** क्ली । वस्तुनि । पित्तले । मद्ये । जले ।
विलेपने । जतुके । ला । मे. । औषधोपकरणे ।
औषधे । विका. । तत्र द्रव्यमात्रं पृथिव्यादिभूत
समुदायादुत्पद्यते । तदुत्कर्षस्याभिव्यञ्जकत्वात्, त
त्पञ्चविधं—पार्थिवम् आप्यं तैजसं वायव्यमाकाशी
यञ्च । तत्र "स्थूलसारसान्द्रमन्दखरगुरुकठिनगन्ध-
बहुलमीषत्कषायम्प्रायशो मधुरम्पार्थिवम्, तच्च
स्थैर्य्यबलादिकरं विशेषतश्चाधोगतिस्वभावम् । य
त्तु द्रव्यं शीतस्निग्धगुरुसरसान्द्रं पिच्छिलंषत्कषा
याम्ललवण मधुररसप्राय तदाप्यम्, तच्च स्नेहनाह्ला
दनादिकरम् । यद्रूपगुणबहुलम् ईषदम्ललवणं क
टुरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावं तत्तैजसं, तच्च
दहनपचनदारणादिकरम् । सूक्ष्मरूक्षखरविशदं
स्पर्शबहुलमीषत्तिक्तं विशेषतश्च कषायं वायव्यम्,
तच्चैवलाघवादिकरम् । श्लक्ष्णसूक्ष्ममृदुव्यवायिवि-
विक्तमव्यक्तरसं शब्दबहुलमाकाशीयम्, तच्च मा-
र्द्दवलाघवादिकरम् । अनेन निदर्शनेन नानौषधी-
भूतं जगति किञ्चिद्द्रव्यमस्तीति कृत्वा तं तं युक्ति
विशेषमर्थं चाभिसमीक्ष्य स्ववीर्य्यगुणयुक्तानि द्रव्या
णि कार्म्मकराणि भवन्ति । तानि यदा कुर्व्वन्ति स
'काल', यत्कुर्व्वन्ति तत्कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यं,
यत्र कुर्व्वन्ति तदधिकरणं, यथा कुर्व्वन्ति स उपा
यः, यन्निष्पादयन्ति तत्फलमिति । तत्र विरेचनद्र-
व्याणि पृथिव्यम्बुगुणभूयिष्ठानि पृथिव्यापो गुर्व्व्यो
गुरुत्वादधोगच्छन्ति तस्माद्विरेचनमधोगुणभूयिष्ठ-
मनुमानात् । वमनद्रव्याण्यग्निवायुगुणभूयिष्ठान्यग्नि-
वायू हि लघू लघुत्वाच्च तान्यूर्द्ध्वमुत्तिष्ठन्ति तस्माद्
वमनमप्यूर्द्ध्वगुणभूयिष्ठमुक्तम् । उभयगुणभूयिष्ठमुभय
तोभागं । आकाशगुणभूयिष्ठं संशमनं । संग्राह-
मनिलगुणभूयिष्ठमनिलस्य शोषणात्मकत्वात् । दी-
पनमग्निगुणभूयिष्ठं । लेखनमनिलानलगुणभूयिष्ठं ।
बृंहणं पृथिव्यम्बुगुणभूयिष्ठं । एवमौषधकर्म्माण्यनु-
मानात्साधयेत् । भवन्ति चात्र—भूतेजोवारिजैर्द्र-
व्यैः शमं याति समीरणः । भूम्यम्बुवायुजैः पित्तं
क्षिप्रमाप्नोति निर्वृतिं ॥ खतेजोऽनिलजैः श्लेष्म
शममेति शरीरिणां । वियत्पवनजाताभ्यां वृद्धिमा-
प्नोति मारुतः ॥ आग्नेयमेव यद्द्रव्यं तेन पित्तमुदी-
र्य्यते । वसुधाजलजाताभ्यां बलासः परिवर्द्धते ॥
एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितं । द्विशो
वा बहुशो वापि ज्ञात्वा दोषे विचारयेत् ॥" सु.सू.
४१अ । दोषशमनधातुदूषणस्वस्थहितत्वात् द्रव्यं
त्रिविधमाह चरकः ॥ तच्च पुनस्त्रिविधं जाङ्गमौ
द्भिदपार्थिवभेदात् । तत्र जाङ्गममूलविधयः भौ-
म विशतिः, उद्भिदष्टकं । तच्च चतुर्विधं वनस्प-
तिवीरुद्वानस्पत्यौषधयः । इति । च.सू.१अ. । द्रव्यं
पुन. द्विविधं शुष्कमार्द्रञ्चेति । तयोः शुष्कद्रव्यापेक्ष-
यार्द्रस्य द्विगुणा मात्रा ग्राह्या । "शुष्कद्रव्ये तु या
मात्रा चार्द्रस्य द्विगुणा हि सा ।" तदपवादमाह
—"वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरी
वर्षाभूकुटजाश्वगन्धसहिताः ता. पूतिगन्धामृता ।
मांसीनागबलाकुरण्टकपुरोहिङ्गार्द्रकं चैवकं चा-
च्छात्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता गणाः ॥"
इन्दीवरी शतावरी । पूतिगन्धा प्रसारणी । कुरण्ट
क· पीतझिण्टी । इक्षुजाता गुडादय. । गणा. द-
शमूलादय· । "वासाकुटजकुष्माण्डशतपुष्पासहाम्ब
ता. । प्रसारण्यश्वगन्धा च नागाह्वा निम्बवासता. ।
नित्यमार्द्रा. प्रयोक्तव्या. न तासां द्विगुणो भवेत्.।"
शार्ङ्ग. । "शुष्कं नवीनं द्रव्यञ्च योज्यं सकलकर्म्मसु ।
आर्द्रञ्च द्विगुणं विद्यादेष सर्व्वत्र निश्चयः ॥ द्रव्या-
ण्यभिनवान्येव प्रशस्तानि क्रियाविधौ । ऋते घृत
गुडक्षौद्रधान्यकृष्णाविडङ्गत. ॥" च.भ.१ख. ।

**द्रव्यकल्कः ।** पुं । दृषदि पेषितद्रव्ये ।

**द्रव्यगुणाकरः, द्रव्यरत्नावली** । पुं,स्त्री । द्रव्यगुणसंग्रहविशेषे ।

**द्रव्यसङ्ग्रहः ।** पुं । करचरणहरीतक्यादिद्रव्य-
संक्षेपे । च.सू.१अ. । [दृष्टे ।

**द्रव्याभिधानम् ।** क्ली । औषधादीनां नामसं-

**द्राघिष्ठम्** । क्ली । दीर्घरोहिषतृणे । बड़ गन्ध- तृण । रा.नि.व ८ ।

**द्राघिष्ठास्यः** । पुं । भल्लूके । रा.नि.व.१९ ।

**द्राणः** । त्रि । सुप्ते ।

**द्रापः** । पुं । पङ्के । शब्दार्थकल्प. ।

**द्रावः** । पुं । उष्णतायाम् वै.निघ. ।

**द्रावकम्** । क्ली । सिक्थके । रा.नि.व १९ । लौहद्रावके । वै.निघ. । भौद्धौषधविशेषे । महाद्रावकादौ । पुं । प्रस्तरविशेषे । चन्द्रकान्तमणि । मे. रसविशेषे । श.र. ।

**द्रावककन्दः** । पुं । तैलकन्दे । रा.नि व.७ ।

**द्रावकरम्** । क्ली । श्वेतटङ्कणे । (सोहागा । रा. नि.व ६ ।

**द्रावकवर्गः** । पुं । द्रवकरद्रव्यपञ्चके । यथा— "गुञ्जाटङ्कणमध्वाज्यगुडा द्रावकपञ्चका. ।" र. सा.सं. । [ला । र मा. ।

**द्रावण(फल)म्** । क्ली । कतकफले । निर्म्म-

**द्रावणकः** । पुं । टङ्कणक्षारे । वै.निघ. ।

**द्राविका** । स्त्री । लालायाम् । लाल, थूतू । श र. ।

**द्राविड़ः (कः)** । पु । वेधमुख्ये । शिग्रुश्वेतार्थे ... । मे. । गन्धशट्याम् । प मु. । आमहरिद्रायाम् । काँचा हलुद । श र. । क्ली । बिडलवणे । रा नि.व.६ ।

**द्राविड़भूतिकः (मिजः)** । पु । आमहरिद्रायाम् । काँचा हरिद्रा । श र. ।

**द्राविड़ी** । स्त्री । सूक्ष्मैलायाम् । प.मु. । भा.म. ४भ.सौभाग्यशुण्ठीमोदके । "द्राविडीनां पलम् ।" सु मू.३८भ. ।

**द्राविड़ोद्भवः** । पुं । सुगन्धतृणे । सुगन्धप्रियङ्गौ । (वा) स्त्री । एलायाम् । वै.निघ. ।

**द्राविणः** । पुं । टङ्कणे । सोहागा । र.सा सं ।

**द्राविणी** । स्त्री । काकजङ्घायां, काकमाच्यां । वै.निघ ।

**द्रावी (विन्)** । पुं । टङ्कणक्षारे । र सा.स टङ्कणशोधने । श्वेतसे । वै निघ । . . . .

**द्राक्षा** । स्त्री । (Vitis vinifera.) Dried fruits called Kismis स्वनामख्यातलतायाम् । किसमिस, मनेका । हिं दाख, श्राङ्गुर । मं द्राक्षा । तें द्राक्षपोण्डु, द्राक्षचेट्टु । ता.कोडिम- ण्डिरिप्पझाम् । गुणाः—पक्का सा सरा शीता चक्षुष्या बृंहणी । अपक्का स्वल्पगुणा गुर्वी च । अम्ला सा रक्तपित्तकृत् । "द्राक्षा पक्का सरा शीता चक्षुष्या बृंहणी गुरुः । स्वादुपाकरसा स्वर्या तुवरा सृष्टमूत्रविट् । कोष्ठमारुतकृद्वृष्या कफपुष्टिरुचिप्रदा । हन्ति तृष्णाज्वरश्वासवातवातासकामलाः । कृच्छ्रास्रपित्तसम्मोहदाहशोषमदात्ययान् । अम्ला स्यादौसती द्राक्षा गुर्वी च कफपित्तकृत् । अस्यी जात्या स्वल्पतरा गोस्तनीसदृशी गुणे । द्राक्षा पर्वतजा लघ्वी साम्ला श्लेष्माम्लपित्तकृत् । द्राक्षा पर्वतजा यादृक्तादृशी करमर्द्दिका ॥" भा. द्राक्षाव. । "द्राक्षाफल मधुरमम्लकषाययुक्तं चारेण पित्तमरुतौ कफहारि शीघ्रम् । शेषं निहन्ति रुधिरामयदाहशोषमूर्च्छाज्वरश्वसनकासविनाशकारि । कषायाम्ला विपाके च द्राक्षा चैव कफे हिता ।" अत्रि. १७अ. । एतदभावे गाम्भारीफल ग्राह्यम् । सि.यो. ज्व.चि.पिप्पल्यादौ । वा.सू.१५अ.परूषकादिः । "परूषक वरा द्राक्षा" । च.द.वा.ज्व.चि. पिप्पल्यादिः । वा.ज्व.चि. द्राक्षादिः । रसालायां । रा नि.व २२ ।

**द्राक्षादिः** । पुं । वातज्वरे कषायः । "द्राक्षागुडूचीकाश्मर्य्यत्रायमाणाः सशारिवाः । निष्क्वाथ्य सगुड क्वाथम् .. ।" च.द.वा.ज्व.चि. । अन्यः— द्राक्षाभयापर्पटकाब्दतिक्ताकृत. कषायः पैत्तिकज्वरे प्रलापमूर्च्छाशमनः' । च.द.पि.ज्व.चि. ।

**द्राक्षाफलः** । पुं । पियालवृक्षे । वै.निघ. ।

**द्राक्षायणी** । स्त्री । दन्तीवृक्षे । प.मु. ।

**द्राक्षारिष्टः** । पुं । यक्ष्माधिकारे अरिष्टविशेषे । पाठः—"द्राक्षातुलार्द्धं द्विद्रोणे जलस्य विपचेत् सुधीः । पादशेषे कषाये च पूते शीते विनिक्षिपेत् । गुडस्य द्वितुलां तत्र त्वगेलापत्रकेसरं । प्रियङ्गुमरिचकृष्णा विडङ्गेति विचूर्णयेत् । पृथक् पलोन्मितैर्भागैर्घृतभाण्डे निधापयेत् । समन्ततो घट्टयित्वा पिबेज्जातरसं तत. ॥" भैष. ।

**द्राक्षासम्भूतः** । पुं । द्राक्षासवे । वै निघ. ।

**द्राक्षासवः** । पुं । द्राक्षाकृतासवे । गुणाः—रोचनो दीपनो हृद्यः बल्यः पित्ताविरोधी विबन्धघ्नः कफघ्नः लघुः स्वल्पमारुतश्च । च.सू.२७अ. ।

**द्राक्षासुरा** । स्त्री । द्राक्षाकृतमद्ये । पोर्ट । च.सू.२७अ ।

**द्राक्षोत्थः** । पुं । द्राक्षासवे । वै.निघ. ।

**द्रुकिलिमम्** । क्ली । देवदारुणि । प.मु. । ×

**द्रु(द्रू)घनः** । पुं । भूमिचम्पकवृक्षे । भूंईचाँपा । श.च ।

**द्रु(द्रू)णः** । पुं । भ्रमरे । वृश्चिके । भूम्याटपक्षिणि । फिंगे । हे.च. । मधुमक्षिकायां । वै.निघ.।

**द्रुणी** । स्त्री । कर्णजलायुकायाम् । कानकोटारि । कच्छपिकायाम् । श्रम.अ. ।

**द्रुतः** । पुं । हरिणे । शशके । वृक्षे । परवि ।

**द्रुतमांसम्** । क्ली । शशादिहरिणादयः स्वयं द्रुतगमनात् द्रुतसंज्ञकाः स्मृताः, तेषां मांसे । गुणाः—पथ्यं बल्यं लघु वीर्यकारि च । रा.नि.व.१७ ।

**द्रुनखः** । पुं । कण्टके । काँटा । त्रिका. ।

**द्रुपदी** । स्त्री । वन्दाके । मान्दड़ा । वै निघ. ।

**द्रुमः** । पुं । वृक्षे । त्रिका. । कुटजवृक्षे । आरग्वधवृक्षे । च.द.कुष्ठ-चि.गण्डीरादितैले । पारिजातवृक्षे । मे. ।

**द्रुमकिलः** । पुं । देवदारुवृक्षे । वै निघ. ।

**द्रुमगः** । पुं । स्वल्पभल्लटे । वै निघ. ।

**द्रुमत्वक्** । स्त्री । कुटजवल्कले । च द कुष्ठ चि. ।

**द्रुमध्वजः** । पुं । तालवृक्षे । वै.निघ. ।

**द्रुमनखः** । पुं । कण्टके । धारा. । पारिजातवृक्षे । मे. । [काँटा । वै.निघ. ।

**द्रुमनिर्यासः** । पुं । वृक्षनिर्यासे । गाछेर

**द्रुमरः** । पुं । कण्टके । धारा. ।

**द्रुमव्याधिः** । पुं । लाक्षायाम् । रा.नि.व.६ ।

**द्रुमश्रयः** । पुं । वानरे । वै.निघ. ।

**द्रुमश्रेष्ठः** । पुं । तालवृक्षे । वै.निघ. ।

**द्रुमामयः** । पुं । लाक्षायाम् । प.मु. ।

**द्रुमारिः** । पुं । हस्तिनि । वै.निघ. ।

**द्रुमारुहा** । स्त्री । कैवर्तमुस्तायां । रा.नि.व.६.

**द्रुमाश्रयः** । पुं । सरटे । गिरगिटे । रा.नि.व.१९ ।

**द्रुमेश्वरः** । पुं । तालवृक्षे । रा.नि.व.११ ।

**द्रुमोत्पलः** । पुं । (Abroma augusta) कर्णिकारवृक्षे । उलट् कम्बल । श्रम. । ऋतुशूलघ्नः ।

**द्रुवयम्** । क्ली । परिमाणे । वै.निघ. । [र. ।

**द्रुसल्लकः** । पुं । पियालवृक्षे । पेयाशाल । श.

**द्रूः** । स्त्री । स्वर्णे । वै.निघ. ।

**द्रेकः (का)** । पुं,स्त्री । निम्बविशेषे । घोड़ानिम् । हिं बकायनिम्ब । भा.म.४भ.महामरुकादिके । भोकड़ा इति ख्याते क्षुपे । च.द.दार्व्यादिकषाये । "सरलाद्रेकामृतादारुकैः ।"

**द्रोणः** । पुं । ४०० धनु परिमितजलाशये । काकविशेषे । दाँड़ काक, डोम काक । मे. । द्रोणपुष्पवृक्षे । घनरसे । वृश्चिके । रा.नि.व.१९ । पुं,क्ली । आढकमाने । ८ सेर । खारीषोडशांशे । नीलावत्यां । आढकचतुष्टये (३२ श.) । "चतुर्भिराढकैर्द्रोणः ।" प.म.१ख. । क्ली । हरिचन्दने । द्रोणीलवणे । वै.निघ. । [काक । श्रम. ।

**द्रोणकाकः** । पुं । तन्नामककाके । डोम

**द्रोणकुम्बिका** । स्त्री । देवकुम्बायाम् । देवद्रोण्या । बड़ घलघसाविशेष । वै निघ. ।

**द्रोणगन्धिका** । स्त्री । रास्नायाम् । जटा. ।

**द्रोणपर्णी** । स्त्री । द्रोणपुष्प्याम् ।

**द्रोणपुष्पिका** । स्त्री । द्रोणपुष्प्याम् । घलघसा । वै.निघ. ।

**द्रोणपुष्पी** । स्त्री । घलघसा दण्डकलस इति ख्याते क्षुपे । द्रोणपुष्पीति भाषा । र.मा. । म कुंबा । क तुंबे । हिं गुम्मा, गूमा । तै एतुमतुम्मि । गुणाः—कटूष्णा रुच्या वातकफघ्नी अग्निमान्द्यकरी पथ्या च । रा.नि.व.५ । च द.वि षो.काम.चि.पञ्चमे । "कल्कं नामनोर्णां द्रोणपुष्पीरसे घ्नः । द्रोणपुष्पीरसोऽथवं निहन्ति विषमज्वरान् ।" शार्ङ्ग.म.ख.१अ. । क-

फार्श.कामलाह्नक्रिमीघ्नी। राज.। द्रोणपुष्पी गुरू. स्वादुपाका रूक्षी-भेदिनी कफामकामलाशोथतमकश्वासक्रमिघ्नी च। भा.।

**द्रोणपुष्पीदलम्** । क्ली । द्रोणपुष्पीपत्रे । घलवमेव पात्रा। गुणाः—स्वादु रूक्षं गुरु पित्तकरं भेदनं कामलाशोथमेहज्वरहरं कटु च । भा. पू.१भ.शा.व. ।

**द्रोणा** । स्त्री । द्रोणपुष्प्याम् । घलवमा । भा. वा.उ२६ष. । इन्दीवरालतायाम् । वै.निघ. ।

**द्रोणिः** । स्त्री । सूर्यदयमाने । १२८ श. । प.प्र. १ख. ।

**द्रोणिका** । स्त्री । नील्याम् । श.र. । [व.६।

**द्रोणि(णी)जम्** । क्ली । द्रोणीलवणे । रा.नि.

**द्रोणिनी** । स्त्री । उत्तरिण्याम् । वै.निघ २भ. मञ्जिष्ठायष्टे ।

**द्रोणी** । स्त्री । इन्दीवर्याम्, इन्दीवरायाम् । रा.नि.व.३ । द्रोणीलवणे । श.र. । नील्याम् । सूर्यदयमाने । १२८ श. । "सूर्याथाद भवेद्द्रोणी ।" प.प्र.१ख. । [छ दारा. ।

**द्रोणीदलः** । पुं । केतकीपुष्पवृक्षे । केया गा-

**द्रोणोलः** । पुं । केतकवृक्षे । वै.निघ. ।

**द्रोणीलवणम्** । क्ली । वारिलवणे । भं दो-बीमेमौट । कं दोबीय उपु । गुणाः—भेदनं स्निग्धं शूलघ्नं नातिपित्तलं पाके नात्युष्णम् । रा.नि.व.६ ।

**द्रोणेयम्** } **द्रौणम्** } क्ली । वारिलवणे । रा.नि.व.६ ।

**द्रन्द(न्द्व)म्** । क्ली । मिथुने । युगले । सुसदृशादौ । पुं । रोगभेदे । श.र. ।

**द्रन्द्वगः** । पुं । चक्रवाके । वै.निघ. ।

**द्रन्द्वगदः** । पुं । द्रन्द्वजरोगे ।

**द्रन्द्वचरः (भारी)** । पुं । चक्रवाकपक्षिणि । वै.च । विका. । [वै.निघ. ।

**द्रन्द्वचरीसहायः** । पुं । चक्रवाकपक्षिणि ।

**द्रन्द्वजः (दोषोत्थः)** । पुं । विषमज्वरे । रा.नि.व.२० । द्विदोषरोगे । वि । द्विदोषोत्थे । मा. अ.नि. ।

**द्रयाग्निः** । पुं । चित्रकवृक्षे । चिता । श.च. ।

**द्वादशपत्रिका** । स्त्री । मतान्तरीयपुष्पे । गुल्फा गाछ, मउरी ।

**द्वादशाङ्गक्वाथः** । पुं । सन्निपातज्वरे कषायः । दशमूलीकषायस्तु पिप्पलीपौष्करान्वितः । सन्निपातज्वरे देयः श्वासकासमन्विते ॥ भा.म.१भ. ।

**द्वादशाङ्गुलः** । पुं । वितस्तौ । दिगट । धर्म. ।

**द्वादशात्मा** । पुं । सूर्ये । अर्कवृक्षे । धर्म. ।

**द्वादशायसकः** । पुं । ऊरुस्तम्भाधिकारे रसः । त्रिनेत्राख्यरस एव । रस.र. । See त्रिनेत्ररसः वातरक्ते ।

**द्वादशायुः** । पुं । कुक्कुरे । श.मा. ।

**द्वारम्** । क्ली । उपाये । निर्गमे । विका. ।

**द्वारका** । स्त्री । कार्पासाम् । वै.निघ. ।

**द्वारदारुः** । पुं । शाकवृक्षे । वै.निघ. । भूमीसहवृक्षे । भा. ।

**द्वारबलिभुक्** । पुं । काकविशेषे । विका. ।

**द्विकः** । पुं । काके । विका. । चक्रवाके । मे. ।

**द्विककारः** । पुं । काके । श.र. ।

**द्विककुत्,द्विकपृष्ठः** । पुं । उष्ट्रे । वै.च. ।

**द्विकाकोली** । स्त्री । काकोलीक्षीरकाकोल्योः । वा.उ.१५. ।

**द्विखुरी (रन्)** । पुं । गोखुरवत् द्विधाविभक्तखुरायमात्रे । "द्विखुरं गोखुराकारद्वैधविदारितम् ।" अथवा क्षीवगोपुमेभिःमण्येतु निर्दिशेत् ॥" अ.द.१ष. । [गो.चाग्रिमा.चि. ।

**द्विचित्रकम्** । क्ली । श्वेतरक्तचित्रकयोः । नि.

**द्विजः** । पुं । दन्ते । रा.नि.व.१८।११ । तुम्बुरुवृक्षे । रा.नि.व.११ । ब्राह्मणे । क्षत्रिये । वैश्ये । मे. । खगे । अण्डजे । धर्म. ।

**द्विजकुत्सितः** । पुं । बहुवारवृक्षे । टानिटा गोछ । रा.नि.व.११ ।

**द्विजकेतुः** । पुं । अश्मोत्थविशेषे । वै.निघ. ।

**द्विजन्मा (न्मन्)** । पुं । पक्षिणि । दन्ते । अ.र. । आर्द्रकाण्डे । भौतिके । अण्डजे । वै.निघ. ।

**द्विजप्रिया** । स्त्री । सोमलतायां । रा.नि व ३।

**द्विजभक्त** । त्रि । वैद्ये भक्तिमति (रोगिणि)। वै निघ. ।

**द्विजयष्टिः (ष्टिका)** । स्त्री । भार्ग्याम् । बामुनहाटी । वै निघ २भ.वा.व्या.चि. ।

**द्विजश्रम** । पुं । राजमाषे । वर्वटी । श च ।

**द्विजस्नेहः** । पु । पलाशवृक्षे । वै निघ ।

**द्विजा** । स्त्री । रेणुकायां । रेणुक । रा.नि व. ६ । भार्ग्याम् । मे । जीवान् इति ख्याति गन्धद्रव्ये । वै निघ. । पालक्यशाके । श च. ।

**द्विजाङ्गिका (ङ्गी)** । स्त्री । कटुकायाम् । कटुकी । रा.नि व.६ । [मे. ।

**द्विजाति** । पु । दन्ते । अण्डजी । पक्षिणि ।

**द्विजायनी** । स्त्री । यज्ञोपवीते । त्रिका. ।

**द्विजालय** । पु । तरुकोटरे । श च. ।

**द्विजिह्वः** । पु । सर्पे । श्रम । अधिजिह्वनामक कण्ठरोगे । आलजिह्वेर रोग । सु नि १६ श ।

**द्विजेन्द्रक** । पु । निम्बूवृक्षे । लेबुर गाछ । वै निघ. । [टी हेमा सुश्रुतादि ।

**द्वितिक्ता** । स्त्री । कटुक्या, करञ्जिकायाञ्च । वा

**द्वितीयत्रिफला** । स्त्री । द्राक्षाखर्ज्जूरगाम्भारीफलेषु । किस्मिस, खेजुर, गामार फल । वै निघ ।

**द्वितीयाभा** । स्त्री । (Curcuma zanthorrhiza.) वृक्षविशेषे । दारुहरिद्रायाम् । श च ।

**द्विदलः** । पुं । अश्मन्तकवृक्षे । आपटा इति ख्याते । आवुटा । वै निघ. । क्ली । विदलमात्रे । वद्यगुणा —"यूष श्रमी द्विदलानामष्टादशगुणे ऽम्भसि । स एव सत्रिकटुक सर्पि सैन्धवसंयुत । भवेद्धृततरश्चैव कृतमित्येव तं विदु । त्रिभिर्द्रव्यैर्विनासिद्धमकृतन्तु लघु स्मृतम् । फलाम्लधान्यसकैय कृता गुरुतरा मता । वातघ्ना रुचिदा मोक्ता पूर्व्वपाकविशारदै ।" द्रव्यगुण ।

**द्विधागतिः** । पु । शिशुमारे । शुशोक । वै निघ. । कुम्भीरे । कुमीर । हे.च ।

**द्विधातुः** । त्रि । द्विप्रकृतिके ।

**द्विधात्मकम्** । क्ली । जातीफले । वै निघ. ।

**द्विधालेख्यः** । पु । हिन्तालवृक्षे । हेंताल गाछ । रा नि व ९ । [र.मा. ।

**द्विपः** । पु । हस्तिनि । प मु । नागकेसरवृक्षे ।

**द्विपत्रक** । पु । चण्डालकन्दे । रा.नि व.७ ।

**द्विपद** । पु । मनुष्ये । पक्षिणि । प्रश्नसारः ।

**द्विपबला** । स्त्री । नागबलायां । वै निघ वा. व्या.चि शतावरीतैले ।

**द्विपमदः** । पु । करिमदजले ।

**द्विपर्णी** । स्त्री । शालपर्णी पृश्निपर्णी चेति द्वये । शालपाणि, चाकुलिया । च.द ग्रह चि. ।

**द्विपाख्यः** । पुं । नागकेशरवृक्षे । प मु. ।

**द्विपादिकः** । पु । नागकेशरवृक्षे । प मु. ।

**द्विपायी (इन्)** । पुं । करिणि । हारा. ।

**द्विपिनखः** । पुं । व्याघ्रनखे । नखीविशेष । रा नि व.१२ ।

**द्विपी (इन्)** । पुं । चित्रकभेदे । च वि.८म ।

**द्विपुटः** । पु । (Impotiens Balsamina.) पुष्पक्षुपविशेषे । दोपाटी । श चि. ।

**द्विपुटी** । स्त्री । मल्लिकायां । मे. ।

**द्विपुनर्नवम्** । क्ली । शुक्लरोहितलताभेदेन पुनर्नवाद्वये । श्वेतपुष्पा, गादापुष्पा । सि यो. काम चि व्योषाद्यघृते । "त्रिफला द्विपुनर्नवम् ।"

**द्विब्राह्मी** । स्त्री । ह्रस्वदीर्घब्राह्मीद्वये । छोट ओ बड ब्राह्मी । सु मा १०म ।

**द्विमाषम्** । क्ली । मुद्गपर्णीमाषपर्ण्यौ । मुगानी ओ माषाणी । च द उन्मा चि महाकल्याणघृते ।

**द्विमुख (खाहि.)** । पु । द्विमुखसर्पविशेषे, राजसर्पे । राजसाप, दुमुखो साप, शांखिनी साप । वम दुदुल । हला । रस र विष.चि. । त्रि । मुखद्वययुक्ते ।

**द्विमुखा** । स्त्री । मारिकायां । गाड़ु । जलौकायाम् । जोंक । हला ।

**द्विमुखोरगः** । पु । द्विमुखसर्पे । शटा ।

**द्विरजनी** । स्त्री । हरिद्रायां दारुहरिद्रायाञ्च ।

द्विग्रिप्रा, मारुद्विग्रिप्रा। चि.यी.काम चि.थीया यच्छते।

**द्विरदः** । पुं। हस्तिनि। प सु.।

**द्विरदपिप्पली** । स्त्री। गजपिप्पल्याम्। वै. निघ.२भ.वा.व्या.चि.द्वात्रिंशकगुग्गुलौ।

**द्विरदान्तः (कः)** । पु। सिंहे। रा नि.व १८। [स। वै निघ.।

**द्विरदारातिः** । पुं। शरभे। সিংহ বিশে

**द्विरदाशनः** । पुं। अश्वत्थवृक्षे। वै निघ.।

**द्विरर्व्वुदम्** । क्ली। अर्व्वुदभेदे। तस्य लक्षण —"यद्द्वन्द्वजातं युगपत् क्रमाद्वा द्विरर्व्वुदं तच्च भवेदसाध्यम्।" सु.नि.११अ.।

**द्विरसनः** । पु। सर्पे। त्रिका.।

**द्विरापः** । पु। हस्तिनि। अ.मा.।

**द्विरेताः** । पु। गर्द्दभे। वै निघ। स्त्रीपुंचिह्न युक्ते। "वीजात्समांशादुपतप्तवीजात् स्त्रीपुंसलिङ्गी भवति द्विरेता।" च.शा २अ.।

**द्विरेफगणसम्म(म्मि)ता** । स्त्री। पुष्पवृक्ष भेदे। বন শেঁউতী। वै निघ.।

**द्विलग्नकः** । पुं। दुयम्मथि। दे.ध.।

**द्विवर्णा (र्णिका)** । स्त्री। विदाथन्या गवि। अम.। दे प.।

**द्विवार्त्ताकी** । स्त्री। वृहतीद्वये। বৃহতী, কণ্টিকারী। भा.म.४भ.वात चि। "द्विवार्त्ताकी फलरसम्।"

**द्विविषम्** । क्ली। पाण्डुकृष्णातिविषायां। শ্বেত ও কৃষ্ণ আতইচ। वै निघ २भ.वा व्या चि.।

**द्विवृन्तः** । पुं। नखरञ्जकवृक्षे। মেঁদী গাছ। प सु.।

**द्विवृहती** । स्त्री। कण्टकारिकावृहत्यौ.। কণ্টিকারী ও বৃহতী। चा सू.१५अ.। "द्विवृहत्यौ विकरञ्जयावयम्।"

**द्विशफः** । त्रि। द्विखुरपशुमात्रे। "गौरजो मद्विष लक्ष्य शूकरो गवयो रुरु। द्विशफा पशवश्चेमे अविरुष्ट्र...॥" भागवतम्।

**द्विशृङ्गिका** । स्त्री। मेषशृङ्ग्याम्। নেড়াশিঙী। वै.निघ.।

**द्विशृङ्गी** (इन्) । पु। मत्स्यविशेषे। শিঙী মাছ। वै.निघ।

**द्विषा** । स्त्री। एलायाम्। वै निघ.।

**द्विष्टम्** । क्ली। ताम्रे। अ.टी.सा.।

**द्विस्विन्नान्नम्** । क्ली। सिद्धतण्डुले। সিদ্ধ চাউল। पुराणम्।

**द्विहृदया** । स्त्री। गर्भवत्यां स्त्रियां। वै.निघ.।

**द्विक्षारम्** । क्ली। यवसर्ज्जिक्षारयोः। चि यी. अग्निमा चि।

**द्विक्षीरम्** । क्ली। गव्याजदुग्धयोः। গাইদুগ্ধ ও ছাগদুগ্ধ। च.द यक्ष्म चि सर्पिर्गुडे।

**द्वीपः** । पुं। काकोलवृक्षे। वै निघ। क्ली। व्याघ्रचर्म्मणि। भ.। [नि.व १२।

**द्वीपकर्पूरः (जः)** । पुं। चीनकर्पूरे। रा.

**द्वीपखर्ज्जूरम्**<br>**द्वीपजम्** } क्ली। महापारेवते, द्वीपान्तरखर्ज्जूरे। रा.नि.व.११।

**द्वीप(पि)शत्रुः** । पु। शतावर्य्याम्। रा नि व. ४। जटा।

**द्वीपसम्भवः** । पुं। काकोलवृक्षे। बैंदृना। जीरके। (वा) स्त्री। महाखर्ज्जूरवृक्षे। वै.निघ.।

**द्वीपान्तरवचा** । स्त्री। तीर्पचिनीति ख्याते मूले। गुणा —"द्वीपान्तरवचा किञ्चित्तिक्तोष्णा वह्निदीप्तिकृत्। विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी। वातव्याधीनपस्मारमुन्माद तनुवेदनाम्। व्यपोहति विशेषेण फिरङ्गामयनाशिनी।" भा.।

**द्वीपिका** । स्त्री। अजमूल्याम्। रा.नि.व ४।

**द्वीपिनखः** । पुं। व्याघ्रनखे। नखी। वै.निघ.।

**द्वीपिनी** । स्त्री। वटपत्रपाषाणभेदे। वै.निघ.।

**द्वीपिपलाशः** । पुं। हस्तिकर्णपलाशे। चा. सू १५अ मुष्ककादि.। "मुष्ककस्नुक्पलाशद्वीपिपलाशधवशिंशपा।" [रा नि.व ८।१८।

**द्वीपी** (इन्) । पुं। व्याघ्रविशेषे। चित्रकवृक्षे।

**द्वीप्यः** । पुं। काके। क्ली। काकोले। वै.निघ.।

**द्वीप्या** । स्त्री। शतावर्य्याम्। रा नि.व.४। पिण्डीखर्ज्जूरवृक्षे। रा नि.व ११।

**हेषः** । पुं । अश्वशब्दविशेषे । रघु.र स्त्रीरी चि ।

**हेष्यम्** । क्ली । कङ्कोले रा नि व १२ ।

**हैमातृक** । पु । नदीद्वयम्बुपालिते देशे । रा नि व २ ।

**हैपणीया** । स्त्री । नागवल्लीविशेषे । होसयली इत्यैव इति क्षीरसमुद्रदेशे ख्याता । हैसनीया इति पुस्तकान्तरे पाठ । रा नि व ११ ।

**ह्रास्तर** । पुं । जातिद्वयसम्भूते सर्पे । দোআঁসলা সাপ । सु कल्प टी ।

**ह्रास्टम्** । क्ली । ताम्रे । श्रम । [रे । मा नि. ।

**ह्राह्निक. (हीन.)** । पु । एकदिनान्तरज्वरे

## ध

**धटः (का)** । पु । धवद्रुमे । ধাওয়া গাছ । वै निघ । तुलामाने । তরাজু । ধাড়া । श्रम । १४ वल्लमाने । ৪২ রতি । लीलावती ।

**धटी** । स्त्री । वल्कले । वै निघ । जीर्णवस्त्रखण्डे । ধড়ি । मे ।

**धत्तूरः** । पु । धुत्तूरवृक्षे । रा नि व १० ।

**धनम्** । पु, क्ली । मरिचे । अर्थे । वै निघ. । स्नेहपाने । भ र ।

**धनकम्** । क्ली धान्यके । ধনিয়া । वै निघ. २भ सन्नज्व.चि गुडूच्यादि ।

**धनच्छ. (च्छू)** । पु, स्त्री । पक्षिविशेषे । ধানেস পাখী, কর্কটিয়া পাখী । त्रिका. ।

**धनञ्जयः** । पुं । अर्जुनवृक्षे । रा नि व.९ । वै निघ १भ अजी चि पञ्चाग्निचूर्णे । अग्नौ । श्रम । चित्रकवृक्षे । र मा. । [ठान्तरात् ।

**धनद** । पुं । हिज्जलवृक्षे । रा नि व ८ । पा

**धनदाची** । स्त्री । पाटलवृक्षे । रा नि व १० । घनाकरवृक्षे । रा नि व ८ । [त्रिका । हारा ।

**धनपिशाची (चिका)** । स्त्री । तृष्णायां ।

**धनप्रिया** । स्त्री । काकजम्बूवृक्षे । বন জাম । रा नि व ११ । [वै निघ ।

**धनसुः** । पु । धूम्राटपक्षिणि । ফিঙে পাখি ।

**धनस्य(स्व)क.** । पुं । गोक्षुरकवृक्षे । भ.प ।

**धनहर.** । पुं । ग्रन्थिपर्णवृक्षे । গেঁঠেলা । पारसीकयमान्याम् । वै निघ. ।

**धनह(हा)री** । स्त्री । पारसीकयमान्याम् । ग्रन्थिपर्णभेदे । श्रम. ।

**धनहृत्** । पु । वन्यसूरणकन्दे । वै निघ. ।

**धना (नी)** । स्त्री । आर्द्रधान्यके । वै निघ, । धान्यके । वै निघ.२भ.वा व्या चि षडशीतिगुग्गुलौ । अत्रि २स्थान २अ ।

**धनिक** । पु । धान्यकक्षुपे । ধনে গাছ । रा नि व ६ । क्ली । धान्यके । ধনে । च द शि ग्रौ. सन्निपातज्व अष्टाङ्गकषाये । "तिक्तेन्द्रवीजधनिके" ।

**धनिका** । स्त्री । धान्यके । ধনে । अत्रि २स्थान । प्रियङ्गुलतायाम् । श.च । [धनिया । श र ।

**धनीयकम्** । क्ली । आर्द्रधान्यके । धान्यके ।

**धनु (नुः)** । पु । भल्लातकवृक्षे । चारवृक्षे । পিয়াশাল । मे. । [११ । श्रम. ।

**धनु प(ष्प)ट.** । पु । प्रियालवृक्षे । रा नि.व

**धनु शाखा** । स्त्री । मूर्व्वायां । মুর্গা । श च ।

**धनु श्रेणी** । स्त्री । मूर्व्वायाम् । प सु । महेन्द्रवारुण्यां । বড মাকাল, বাখালশশা । रा नि. व ३ ।

**धनुर्गुणा** । स्त्री । मूर्व्वायाम् । श च. ।

**धनुर्द्रुमः** । पु । वंशे । বাঁশ । रा नि व ७ ।

**धनुर्माला** । स्त्री । मूर्व्वायाम् । श.च ।

**धनुर्य्यासः** । पु । दुरालभायाम् । प सु. ।

**धनुर्लता** । स्त्री । सोमवल्ल्याम् । সোমলতা । रा नि व ३ ।

**धनुर्वातः** । पुं । वातव्याधिविशेषे यत्र सर्व्वसन्धिषु वेदनाऽधिका भवति । "अनिष्टव्यसनी यस्तु उपभुङ्क्ते परस्त्रियं । बलादाक्रम्य स नर सर्व्वसन्धिषु वेदना । तीव्रामाप्नोत्यरुचिमान् धनुर्वातयुतो भवेत् ।" इति कर्म्मविपाके ।

**धनुर्वीज.** । पु । भल्लातकवृक्षे । रा नि व ११ ।

**धनुर्वृक्षः** । पुं । धन्वनवृक्षे । धामनि गाछ । र मा. । रा नि.व ९ । वंशे । भल्लातकवृक्षे । अश्वत्थवृक्षे । रा.नि.व ११ ।

**धनुष.** । पु । कुकुरे । वै निघ ।

**धनुष्यः** । पु । वंशे । बाँश । रा.नि व.७ ।

**धनुस्तम्भः** । पुं । वातव्याधिविशेषे । धनुष्टङ्कार । स बाह्याभ्यन्तरायामभेदाद्द्विविधः । लक्षणं —"धनुस्तुल्यो नमेद्यस्तु स धनुस्तम्भसंज्ञित । विवर्णवदन स्तस्ताङ्गो नष्टचेतन । प्रस्विद्यंश्च धनुस्तम्भी दशरात्र न जीवति ॥" मा.नि. । [भ ।

**धनेयकम्** । क्ली । धन्याके । धनिया । अ टी

**धनैषणा** । स्त्री । एषणासु नरस्य द्वितीयैषणायाम् । धनप्रार्थना । 'प्राणेभ्यो ह्यनन्तरं धनमेव पर्येष्टव्यं भवति । तदुपकरणानि च कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि । यानि चान्यान्यपि सतामविगर्हितानि कर्माणि वृत्तिपुष्टिकराणि विद्यात् ।' च सू ११ अ ।

**धन्यः** । पुं । अश्वकर्णशाले । शता शाल । रा नि.व ९ । क्ली । द्रव्ये । वै निघ । कैवर्त्तमुस्तायां । च द १२ अ. ।

**धन्यवृक्षः** । पु । अश्वत्थवृक्षे । वै निघ. ।

**धन्या** । स्त्री । धन्याके । धने । हि च । उपमातरि । वै निघ. । आमलक्याम् । अ । निर्जलप्रदेशे । वै निघ ।

**धन्याकम्** । क्ली । (Coriandrum sativum) Coriander plant. स्वनामख्यातद्रव्ये । प ञ । धने । हि धनिया । तें कोत्तिमिरवीट्टु, धनियालु । ता कोत्तमल्लि । च द भग्नपातज्वरचि नागरादिः । "धन्याकं बृहतीद्वयम् ।" पि ज्व.चि. । "व्युषित धन्याकजलम् ।" पि श्लेष्म ज्व चि गुडूच्यादि । गुणा —तुवर स्निग्धम् अवृष्यं मूत्रल लघु तिक्त कटूष्णवीर्यं दीपनं पाचन ज्वरघ्न रोचक ग्राहि स्वादुपाकं त्रिदोषघ्न तृष्णादाहवमिश्वासकासकार्श्यक्रिमिघ्न । आर्द्र तत् तद्गुणसम्पन्न स्वादु विशेषत पित्तघ्न । भा पु १भ. मद व.९ ।

**धन्य.** । पु । दुरालभायाम् । वै निघ ।

**धन्वकः.** । पु । धामनवृक्षे । च.द मेह चि । "पाठार्जुनधन्वकानां ।"

**धन्वङ्गः** । पु । धामनवृक्षे । धामना गाछ । गुणा —"धन्वङ्ग कफपित्तास्रकासहृत्तुवरो लघु । बृंहणो बलकृद्रुच्य सन्धिकृद्व्रणरोपण. ॥" भा म.२ भ प्रमे चि. । वंशे । वै निघ ।

**धन्वचारी** । त्रि । निर्जलदेशचारिणि । वा. चि ७अ. ।

**धन्वतरु.** । पु । सोमवल्काम् । वै निघ. ।

**धन्वदुर्गम्** । क्ली । निर्जलदेशे । पुराणम् ।

**धन्वन.** । पु । धामनवृक्षे । धामना गाछ । र. मा । हिं धामिनी । म धमणु । क उदुवे । गुणा —कटु उष्ण कषाय कफघ्न दाहशोषकर संग्राही कण्ठदोषघ्नश्च । रा नि व.९ । एतत्फलं कषाय हिम स्वादु वातकफघ्नञ्च सु सू ४६ अ. ।

**धन्वन्तरि** । पु । वैद्ये । क्षितौ आयुर्वेदप्रवर्त्तरि देवताभेदे । तत्प्रादुर्भाव —"एकदा देवराजस्य दृष्टिर्निपतिता भुवि । तत्र तेन नरा दृष्टा व्याधिभि परिपीडिता ॥ तान् दृष्टा हृदय तस्य दयया परिपीडितम् । दयार्द्रहृदय शक्रो धन्वन्तरिमुवाच ह ॥ धन्वन्तरे सुरश्रेष्ठ भगवन् किञ्चिदुच्यते । योग्यो भवसि भूतानामुपकारपरो भव ॥ उपकाराय लोकानां केन किं न कृतम्पुरा । त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान् ॥ तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव । प्रतीकाराय रोगाणामायुर्वेदम्प्रकाशय ॥ इत्युक्त्वा सुरश्रेष्ठ सर्वभूतहितस्तदा । त्रयस्त्रिंशत्सुधी पदधन्वन्तरिमुपादिशत् ॥ अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरि पुरा । आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि ॥ नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ । बाल एव विरक्तोऽभूच्चचार सुमहत्तप ॥ यत्नेन महता ब्रह्मा तं काशीशंकरोन्नृपम् । ततो धन्वन्तरिर्लोके काशिराजोऽभिधीयते ॥ हिताय देहिनां म्नौय संहितां विहितामुना । अथ विद्यार्थिनो लोकान् संहितामध्यापयत् ॥" भा. । चिकित्सादीपकनिदाननिघण्ट्वादिप्रणेतरि । [भ थ. ।

**धन्वन्तरिग्रस्ता** । स्त्री । कटुका । कट्की ।

**धन्वन्तरिपञ्चकम्** । क्लीं । धन्वन्तरिकृतग्रन्थविशेषे ।

**धन्वन्तरिभाग** । पुं । औषधकरणार्थे वैद्यलभ्यौषधादिभागे । सिद्धरसानां १० म तैलघृतलेहानां ८ म लेहवटिकानां ७ म । वै निघ ।

**धन्वमांसम्** । क्लीं । निर्जलदेशपशुमांसे । वा चि १२ अ । See जाङ्गलमांसम् ।

**धन्वयवासः (क)** / **धन्वयासः** । पुं । दुरालभायाम् । रा नि व ४ । सि यो रक्तार्शे चि । "धन्वयवासा सनागरा क्वथिता ।" । च सू ४ अ । सि यो सन्निपात ज्व चि अष्टादशाङ्गकषाये । [चि १ अ ।

**धन्वा (न्)** । पु । मरुभूमौ । रा नि व २ । च

**धन्वामिषम्** । क्लीं । जाङ्गलपशुमांसे ।

**धन्वी (इन्)** । पु । दुरालभायाम् । रा नि व ४ । अर्जुनवृक्षे । रा नि व ९ । बकुलवृक्षे । रा नि व १० ।

**धमनः** । पु । नलवृक्षे । नल गाछ । रा.नि व ८ । निम्बवृक्षे । निम गाछ । रा नि व ९ ।

**धमनि (नी)** । स्त्री । पृश्निपर्ण्याम् । ठाकुल । रा नि व.४ । उत्तरापथप्रसिद्धनलिकानामगन्धद्रव्ये । भा । हे च । नखीनामगन्धद्रव्ये । हरिद्रायाम् । शिरायाम् । रा नि व १८ । शिराविकार एव धमनी । धमन्यश्च नाभिजा तत्संख्या च २४ । तेषु दशोर्ध्वगा, शेषास्तिर्य्यग्गाश्च । तेषूर्ध्वगा रूपरसगन्धस्पर्शशब्दप्रश्वासोच्छ्वासजृम्भक्षुतहास्यभाषणरोदनगाभादिकर्म्म सम्पादयन्तो देहं धारयन्ति । ताश्च हृदयं गत्वा प्रत्येकं शाखात्रयं विस्तारयन्त्य ३०संख्या भवन्ति । तासु प्रत्येकं द्वे द्वे कृत्वा दश धमन्यो वातपित्तकफशोणितरसान् वहन्ति । अष्टौ च रूपादीनि गृह्णन्ति । शिष्टासु द्वादशसु ताभ्यां वाङ्मूच्छति, ताभ्यां घोषणं, ताभ्यां निद्रा, ताभ्यां जागरणं, ताभ्याञ्च रक्तवहनं भवति । शिष्टेन स्तनसंश्रितेन द्वयेन च स्त्रियाः स्तन्यवहनं पुंसश्च शुक्रवहनं स्तनाभ्यां भवति । अधोगास्तु दश पित्ताशयमधिगम्य त्रिंशत्सङ्ख्या । तासु द्वे द्वे वातपित्तकफरक्तरसान् वहतः । शिष्टास्वपि द्वे अन्नमाश्रित्यान्नं वहतः । द्वे जलं वहतः, द्वे वस्तिमाश्रित्य मूत्रं वहतः । द्वाभ्यां पुरुषस्य शुक्रं स्त्रियः आर्त्तवञ्च प्रादुर्भवति, द्वे च तद्द्वयं निःसारयतः । द्वे स्थूलान्तनिबद्धे मूत्रपुरीषं निःसारयतः । अवशिष्टाश्चाष्टौ तिर्य्यग्गामिन्यो स्वेदं निःसारयन्ति । एताश्चाधोगा धमन्यः पक्वाशयकटिमूत्रपुरीषगुह्यवस्तिमेढ्रपादप्रभृतीन्याश्रित्य तेषां पोषणं सम्पादयन्ति । तिर्य्यग्गाश्च धमनीचतुष्टयं प्रत्येकमसङ्ख्यशाखाविभक्तं देहं रन्ध्रमूयिष्ठं करोति । एतासाञ्च मुखानि प्रतिलोमकूपसलग्नानि । तेभ्यश्च मुखेभ्यः स्वेदा निर्गच्छन्ति, देहरसो बहिरन्तश्च सन्तर्पयति । अभ्यङ्गादिना च तैलादिवीर्य्यमन्तः शरीरं प्रविश्य त्वक्पाकादिकं करोति तेनैव च शुभाशुभस्पर्शज्ञानं भवति ।" सुं. शा ९ अ । भा ।

**धमिः** । स्त्री । अग्नौ । धमन्याम् । हारा ।

**धयनम्** । क्लीं । पाने । रा नि व २० ।

**धर** । पु । कार्पासतूलके । मे ।

**धरणः** । पु । तुलायां । स्तने । धान्ये । हे च । तण्डुले । वै निघ । क्लीं । कालिङ्गचतुर्माषमिते माने । प प्र १ ख । पञ्चदशमांषे । २४ रक्तिकामाने । रौप्यषोडशमाषे । वै निघ ।

**धरणी** । धारणीकन्दे । रा नि व ७ । शिरायां । रा नि व १८ । खदिरवृक्षे । रा नि व २३ । पुनर्नवायाम् । मेदायाम् । वै निघ । शाल्मलिवृक्षे । श च ।

**धरणीकन्द** । पु । धारणीकन्दे । रा नि व.७ ।

**धरणीधर.** । पु । पर्व्वते । कच्छपे । रा.नि. व.१८ ।

**धरणीबन्धः** । पु । अरिष्टबन्धने । सर्पादिदंष्टबन्धनविशेषः । स शाखादष्टस्य दंशदेशाच्चतुरङ्गुले न्याय्यः । यदाह वाभट —"दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले । क्षौमादिभिर्वालिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥" च.द विष.चि. ।

**धरा** । स्त्री । शिरायाम् । नाड्याम् । रा नि.व. १८ । वसायाम् । गर्भाशये । मे ।

**धराकदम्बः (क)** । पु । कदम्बवृक्षे । हारा ।

**धराङ्कुर** । पु । भूकुष्माण्डे । वै निघ. ।

**धराजकुष्माण्डः** । पुं । भूमिकुष्माण्डे । भुँइ कुमड़ा । चि.क्र.क.स्त्रीरो.चि. ।

**धरिमा** (न्) । पुं । तुलायाम् । उराजू । का करे । वै.निघ. ।

**धरुणः** । पुं । जले । मे. ।

**धर्त्तूरः** । पुं । शुक्लधुस्तूरे । वै.निघ. ।

**धर्म्मः** । पुं । स्वभावे । आचारे । गुणे । मे. ।

**धर्म्मघ्नः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**धर्म्मणः** । पुं । धमन्यवृक्षे । धामना गाछ । र. मा. । सर्पभेदे । ঢেমনা সাপ । मे. ।

**धर्म्मद्वेषी** (न्) । पुं । विभीतकवृक्षे । वै.निघ. ।

**धर्म्मपत्तनम्** । क्ली । मरिचे । रा.नि.व.६ ।

**धर्म्मपत्रः** । पुं, क्ली । उदुम्बरवृक्षे । श.च. ।

**धर्म्मवृक्षः** । पुं । अश्वत्थवृक्षे । रा.नि.व ११ ।

**धर्म्मसूः** । पुं । धूम्याटपक्षिणि । अ.र. ।

**धर्म्मिणी** । स्त्री । रेणुकायाम् । রেণুক । रा. नि.व.६ । [ऑंकोड । श.च. ।

**धलण्डः** (कः) । पुं । स्वनामख्यातवृक्षे । धला

**धर्षः** (र्षितम्) । पुं, क्ली । मैथुने । त्रिका. । आधौ ।

**धवः** । पुं । (Anogeissus latifolia Syn. Conocarpus latifolia.) स्वनामख्यातवृक्षे । धाओया गाछ । र.मा. । मं धावोडा । कं दिंडिग । तैं शारिकचेट्टु । गुणाः.—कटुः कषाय. कफघ्न वातघ्नः पित्तकोपनः रुच्य. दीपनश्च । राज. । "धवः शीत. प्रमेहार्शः पाण्डुपित्तकफापहः । मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक् ॥" भा. । अन्यच्च —"धवः कषायः कटुकः कफघ्नोऽनिलनाशनः । पित्तप्रकोपनो रुच्यो विशेषो दीपन परः ॥" फलमीषन्मधुरम् । रा.नि.व.८ । क्वाके । त्रिका । मनुष्ये । शब्द । खदिरे । र.सा.सं मञ्जुघ्नमलीहे ।

**धवनी** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । वै. निघ. ।

**धवलः** । पुं । धववृक्षे । धाओया गाछ । रा.नि. व.८ । श्वेते । चीनकर्पूरे । रा.नि.व.१२ । धातकी वृक्षे । वै.निघ । क्ली । श्वेतमरिचे । रा.नि.व.६ । त्रि । श्वेते । सुन्दरे । त्रिका. ।

**धवलपक्षः** (क्षी (न्)) । पुं । हंसे । रा. नि.व.१९ । [शांकन । रा.नि.व १० ।

**धवलपाटली** । स्त्री । शुक्लपाटल्याम् । শ্বেত

**धवलमृत्तिका** । स्त्री । खटिकायाम् । खड़ि । रा.नि.व.१३ ।

**धवलयावनालः** । पुं । श्वेतवर्णयावनालवृक्षे । शादा जनार । मं श्वेतजुवारी । कं बिलि यजोल । अयं शिम्बीधान्ये वर्त्तते । गुणाः—शैत्यः बल्य. त्रिदोषघ्न. वृष्य. रुचिप्रद. श्रमघ्नः पथ्य. गुल्मव्रणघ्नश्च । रा.नि.व.१६ ।

**धवलशारिवा** । स्त्री । शुक्लशारिवायाम् । অনন্তমূল । वै.निघ. ।

**धवला** । स्त्री । श्वेतशारिवायाम् । See अनन्ता श्वेतशारिवा च । भा.पू.१भ. । गवि । গাই গরু । त्रिका. । वचायाम् । श्वेतापराजितायाम् । र.चि. पापरोगाश्मकरसे ।

**धवली** । स्त्री । शुक्लगवि । अम. ।

**धवलेक्षुः** । पुं । श्वेतेक्षौ । रा.नि.व.१४ ।

**धवलोत्पलम्** । क्ली । कुमुदपुष्पे । नागफूल, হালা ফুল । रा.नि.व.१० ।

**धवित्रम्** । क्ली । मृगचर्म्मनिर्म्मितव्यजने । अम. ।

**धाकः** । पुं । वृषे । क्ली । अन्ने । स्तम्भ । उणा ।

**धातकी** । स्त्री । (Woodfordia floribunda. Grislea tomentosa.) स्वनामख्यात पुष्पवृक्षे । धाइ फुलेर गाछ । हिं धावड़, धाओला । मं धायटी । तैं धारिपुष्पु, जार्गि । उत्. धातिकी । गुणाः—कटुः उष्णा मदकृद्विषघ्नी प्रवाहिकातिसारघ्नी विसर्पव्रणघ्नी च । रा.नि. व.६ । "धातकी कटुका शीता मदकृत्तुवरा लघुः । तृष्णातिसारपित्तास्रविषक्रिमिविसर्पजित् ॥" भा. । शीता रक्तपित्तघ्नी च । राज. ।

**धातकीकुसुम(पुष्प)म्** । क्ली । धातकीपुष्पे । धाइ फुल । सु.सू.३८अ.अम्बष्ठादिः । च.सू. ४अ. ।

**धातक्यरिष्टम्** । क्ली । धातकीपुष्पकृतारिष्टभेदे । गुणाः—हृद्यं बल्यं रोचनं दीपनञ्च । च.सू.२७अ. ।

**धातक्यादिचूर्णम्** । क्ली । बालरोगाधिकारे औषधम् । पाठः—"धातकीबिल्वधन्याकलोध्रेन्द्रयववालकम् । लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित् ॥" धाइफुल, বেলশুঁটা, ধনে, লোধ, ইন্দ্রযব, বালা প্রত্যেক চূর্ণ সমভাগ মধু দ্বারা লেহন । भा की ।

**धाता** । पुं । स्रष्टरि । शरीरादिसंयोगस्य धारणहेतौ । सु.शा.१अ. ।

**धातुः** । पुं । खनिजेषु स्वर्णादिसप्तविधाष्टविध नवविधपदार्थेषु । धातु । यथा—काञ्चनं रजतं ताम्रं कांस्यं पित्तलं नागं वङ्गं लौहमेत्यष्टौ । रा.नि.व.१८ । स्वर्णरौप्यताम्रवङ्गयशदसीसलौहानीति सप्त । भा. । तथा—"हेमतारारनागाश्च ताम्रवङ्गे च तीक्ष्णकम् । कांस्यकङ्कान्तलौहञ्च धातवो नव कीर्तिता ॥" सुखबोधः । "त्रिविधन्तु सुवर्णं स्यादष्टधा रजतं भवेत् । पञ्च प्रकारकं ताम्रं वङ्गन्तु द्विविधं स्मृतम् । यशदं त्रिविधं प्रोक्तं भवेन्नागस्तु षड्विधः । अष्टधा लौहमुद्दिष्टमेते सप्तैव धातवः ॥" अर्क.चि. । गुणाः—"वलीपलितखालित्यकार्श्याबल्यजरामयान् । निवार्य्य देहं दधति नृणां ते धातवो मताः ॥" भा.पू.१भ.धातुव. । देहधारकवस्तुविशेषे । स च वातपित्तकफरूपः देहस्य धारणात्तस्य धातुशब्दवाच्यता । यथा—"धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रयः ।" वैद्यकम् । गैरिकमनःशिलाद्यश्मविकारे । प.मु. । शरीरस्थसप्तधातुषु रसरक्तमांसमेदोऽस्थिमज्जशुक्रेषु । "रसादस्रं ततो मांसं मांसान्मेदोऽस्थि तद्भवं । अस्थ्नो मज्जा ततः शुक्रमित्येषां विनिष्क्रमः ॥" रा.नि.व.१८। धातूनाञ्च कर्म्माणि प्रीणनजीवनलेपस्नेहधारणपूरणगर्भोत्पादनानि । गिरिमृत्तिकायां । रा.नि.व.१३।

**धातुक(ज)म्** । क्ली । शिलाजतुनि । वै.निघ. ।

**धातुकाशीष(सीस)म्** । क्ली । काशीसे । हिरेकम् । रा.नि.व.१३ ।

**धातुकी** । स्त्री । धातकीवृक्षे । वै.निघ. ।

**धातुग्राही (इन्)** । पुं । खर्परे । वै.निघ. ।

**धातुघ्नम्** । क्ली । काञ्जिके । हे.च. ।

**धातुचेतनकरम्** । क्ली । दुग्धे । आमलके । हिदली । वै.निघ. ।

**धातुद्रावकम्** । क्ली । टङ्कणक्षारे । সোহাগা । वै.निघ. ।

**धातुनाशनम्** । क्ली । काञ्जिके । चिका. ।

**धातुपः** । पुं । शुक्रे । रसे । श.च. ।

**धातुपाकः** । पुं । रसादिधातुक्षये । तल्लक्षणम्—"निद्रानाशो हृदिस्तम्भो विष्टम्भो गौरवारुची । अरतिर्बलहानिश्च धातूनाम्पाकलक्षणम् ।" वैद्यकम् । [प.मु । भा. ।

**धातुपुष्पिका (ष्पी)** । स्त्री । धातकीवृक्षे ।

**धातुमलः** । पुं । सीसके । रसादिमलेषु । स्वर्णादिव मल । "मलिनीकरणान्मलाः ॥" वैद्यकम् । "कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च । नेत्रविट् त्वक्च च स्नेहो धातूनां क्रमशो मलाः ॥" भा ।

**धातुमारिणी** । स्त्री । टङ्कणक्षारे । श.च ।

**धातुमारी (इन्)** । पुं । गन्धके । वै निघ. ।

**धातुमाक्षिकम्** । क्ली । स्वर्णमाक्षिके । रा.नि.व.१३ । धातुकाशीषे । हिरेकम् । वै.निघ. ।

**धातुराजः (कम्)** । पुं, क्ली । वीर्य्ये । शुक्र । वै.निघ. । श च. । [प मु. ।

**धातुवल्लभम्** । क्ली । टङ्कणे । সোহাগা ।

**धातुवादी (इन्)** । पुं । खनिजविद्याभिज्ञः ।

**धातुविट्** । स्त्री । सीसके । वै निघ ।

**धातुविषम्** । क्ली । हरितालादौ । र.सा.सं. ।

**धातुवृद्धिः** । स्त्री । रसादिवृद्धौ, रसादिधातुसाम्ये । च.सू १२अ । [आमुपलीमवर्ष्यादौ ।

**धातुवृद्धिकरः** । पुं । धातुवर्द्धकद्रव्ये, अश्वग-

**धातुवैरी (इन्)** । पुं । गन्धके । श च. ।

**धातुवैषम्यम्** । क्ली । विकारागमरूपकार्य्ययोनौ । च वि ८अ. ।

**धातुशेखरम्** । क्ली । Green sulphate of Iron. धातुकाशीषे । हिरेकम् । हे.च. ।

**धातुशोधनम्** । क्ली । सीसके । वै.निघ. ।

**धातुशोधनकरी** । स्त्री । हरीतक्याम् । वै. निघ. ।

**धातुसम्भवम्** । क्ली । सीसके । वै निघ ।

**धातुसाम्यम्** । क्ली । विकारोपशमरूपकार्य्ये । च वि ८ अ । आरोग्ये । च सू १ अ । [निघ ।

**धातुस्तम्भनकरम्** । क्ली । आलीफल । वै

**धातुहा (न्)** । पु । गन्धके । वै निघ ।

**धातुक्षयकास** । पु । धातुक्षयकरकासरोगे । क्षयकास । निदा । [निघ ।

**धातूपल.** । पु । खडिकायाम् । খড়ি वै

**धात्रिका** । स्त्री । आमलक्याम् । रा नि व.११।

**धात्री** । स्त्री । आमलक्याम् আমলা । रा नि व ११ । भा पू १भ । See अकरा । उपमातरि । দাই। तल्लक्षण—"पीताय यदि बालस्य विदध्यादुपमातरम् । सुविचार्य्य गुणान् दोषान् कुर्य्याद्धात्रीं तदीदृशीम् । सवर्णां मध्यवयसां स कुलीनां मुदितां सदा । शुद्धदुग्धां बहुक्षीरां सत्त्व सामतिवत्सलाम् । स्वाधीनामल्पसन्तुष्टां कुलीनां सज्जनात्मजाम् । कैतवेन परित्यक्तां निजपुत्रवदर्थ मिमौ ॥" भा । धात्रीकर्म्म । यथा—"धात्री तु यदा स्वादु बहुलशुद्धदुग्धा स्यात्, तदा स्नातानु लिप्ता शुक्लवस्त्रं परिधाय ब्राह्म्याद्यौषधं धारयन्ती कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेत् ।" इत्यादि । सु शा १०अ. । [आमलकीपत्र ।

**धात्रीपत्रम्** । क्ली । तालीशपत्रे । रा नि.व ६।

**धात्रीफलम्** । क्ली । आमलकफल । আমলা । मद व १ । (ला) स्त्री । आमलक्याम् । আমলা গাছ । रा नि व ११ ।

**धात्रीलौहम्** । क्ली । शूलाधिकारे । प्रथम पाठ—शतमूलूर ६ प यव ४ प पाकार्थजल २ श शे ॥०अ । शतावरीरस ८ प आमलकी स्वरस ८ प दधि ८प दुग्ध ८प भूमिकुष्माण्ड स्वरस ४ प घृतं ४ प इक्षुरस ४ प । एकत्र पक्वा पाके सिद्धे प्रक्षेप —जीरकचूर्णं धान्यकचूर्णं त्वक्चूर्णं तेजपत्रचूर्णम् एलाचूर्णं गजपिप्पलीचूर्णं मुस्ताचूर्ण हरीतकीचूर्णम् अभ्रभस्म लोहभस्म रेणु कचूर्णं त्रिफलाचूर्णं तालीशचूर्णं नागकेशरचूर्णं प्रत्येकं । শতমূলী ৬প যব ৪প পাকার্থ জল ২শ শে ॥০ শ। শতমূলীরস ৮প আমলকীরস ৮ প. দধি ৮ প দুগ্ধ ৮ প. ভূমিকুষ্মাণ্ডের রস ৪ প. ঘৃত ৪ প ইক্ষুরস ৪প । একত্র পাক সিদ্ধ হইলে প্রক্ষেপ—জীরা, ধনে, গুড়ত্বক্, তেজপত্র, এলাইচ, গজপিপুল, মুতা হরীতকী, অভ্র, লৌহ, রেণুক, ত্রিফলা, তালীশপত্র, নাগেশ্বর প্রত্যেক চূর্ণ ২তো.। र सा स । सा कौ । द्वितीय —धात्रीचूर्णं ८ प. मण्डूरचूर्णं ४ प यष्टिमधुचूर्णं २ प गुडूचीक्वाथे समवारं भावयेत् । भावनाक्वाथार्थं क्वाथ्यद्रव्यम् औषधतुल्यमादाय अष्टगुणे वारिणि साधयेत् । আমলকীচূর্ণ ৮ প. মণ্ডূরলোহচূর্ণ ৪প যষ্টিমধুচূর্ণ ২ প । গুলঞ্চকাথে সপ্তাহ ভাবনান্তে শুষ্ক করিয়া ঘৃতভাণ্ডে রাখিবে। ভাবনার কাথ ঔষধের তুল্য লইয়া ৮ গুণ জলে প্রস্তুত করিবে। तृतीय पाठ—आमलकलौहत्रिकटुमनःशिलाचूर्णं मधु घृतं शर्करा प्र. समम् । আমলাচূর্ণ, লৌহ ত্রিকটু, মনছাল, মধু, ঘৃত চিনি প্রত্যেকে সমান। चतुर्थं वाजीकरणे—आमलकचूर्णं ८ प त्रिफलाक्वाथेन २१ भावयित्वा अथ मृतलौहमधुघृतशर्करा प्र. २ प मिश्रयेत् । আমলাচূর্ণ ৮ প ত্রিফলাকাথে ২১ ভাবনা দিবে। মৃতলৌহ ২ প মধু ২ প ঘৃত ২ প শর্করা ২ প একত্র মিশ্রিত করিবে। रस र.। अन्य पित्तरोगे—"धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य । यष्टीमधुक रजश्च द्विपलं दद्यात् पुटे घृतम् । धात्र्याश्च क्वाथेन तच्चूर्णं भाव्यञ्च सप्ताह । चण्डातपेन संशुष्कं भूय पिष्टं घटे स्थितं । घृतेन मधुना युक्तं भोजनादौ मध्यतः । त्रीन् वारान् भक्षयेन्नित्यं ।" र. सा स ।

**धात्रीषट्पलकघृतम्** । क्ली । गुल्म घृतम् । "धात्रीफलानां स्वरसे षट्पलं विपचेद्घृतम् । शर्करा सैन्धवोपेतं तद्धितं सर्व्वगुल्मिनाम् ॥" धात्री रस घृतम । रस र । भैष.।

**धात्रेयि(यी)का** । स्त्री । आमलक्याम् । रा. नि व ११ । उपमातरि ।

**धात्र्यरिष्टम्** । क्ली । पाण्डुरोगे । "धात्रीफल सहस्रे द्वे पीडयित्वा रसन्तु तं । क्षौद्राष्टांगेन संयुक्तं कणार्द्धकुडवेन च । शर्कराऽर्द्धतुलोन्मिश्रं पक्षं स्निग्धे घटे स्थितं । अरिष्टमाशयेत् प्रात ।" च चि १०अ ।

**धात्र्यादि** । पु । चातुर्थिकज्वरघ्ने धात्रीमुस्ता मतचौद्रकृते कषाये । वा चि १४. ।

**धानक** । पु । माषपरिमाणे । च कल्प.१२ अ । क्ली । धन्याके । मद व २ ।

**धाना (ना)** । स्त्री । चिपीटके । चिंडे । प मु । भृष्टयवादौ भाजा यवादि । हि बहुडा । गुणा —विष्टम्भिनी रूचा तर्पणी लेखनी गुरुश्च । वा । 'यवादयश्च ये भ्रष्टा धानास्ते परिकीर्त्ति ता । रा नि व ६ । "धाना सुदुर्जरा रूचास्तृट्प्रदा गुरवश्च ता । तथा मेहकफच्छर्दिनाशन्य सम्प्रकीर्त्तिता ॥" धन्याके । धनियां । भा । ग्र स्फुटयवे । सु चि १० अ ।

**धानाकाः** । स्त्री । धान्याके । धने । वा सू. १५अ गुडूच्यादि । "धानाकारक्तचन्दनम् ।" (बहुवचनान्तो) । [दिव छातू । सु च ।

**धानाचूर्णम्** । क्ली । भृष्टयवादिचूर्णे । यवां

**धानिका** । स्त्री । धान्यके । धने । वै निघ च सा चि यवान्यादौ । [लुडचे । रा नि व ११ ।

**धानी** । स्त्री । धान्यके । धने । मद व २ । पी

**धानुष्का** । स्त्री । अपामार्गवृक्षे । आपा° गा छ । श.च ।

**धानुष्यः** । पु । वंशे । रा नि व ८ ।

**धानेय(क)म्** । क्ली । धन्याके । रा.नि व ६ । आर्द्रधान्यके । काँचा धनियां । वै निघ ।

**धान्धा** । स्त्री । एलायाम् । श च. ।

**धान्यम्** । क्ली । ४ तिलमाने । ६ गुञ्जामाने । धान्याके । धने । रा नि व ६।२३ । सूक्ष्मामलक्यां । रा नि व २३ । (Oryza sativa.) (ommou rice plant. शाल्यादिवृक्षे । सतुषतण्डुले । धां । धान्य त्रिधा शालिषष्टिकव्रीहिभिर्दत । यथा—"शालयो हैमनास्तत्र षष्टिका ग्रैष्मका च पि । व्रीहयस्त्वाशव ख्याता प्रावृट्कालसमुद्भवा ॥" राज १प । शूकशिम्बीतृणधान्यभेदेन त्रिधा । रा नि.व १६ । शालिव्रीहिशूकशिम्बी चुद्रधान्यभेदेन पञ्चविधम् । "शालयो रक्तशाल्याद्या व्रीहय षष्टिकादय । यवादिक शूकधान्य मुद्गाद्यं शिम्बिधान्यकम् । कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यं च तत्स्मृतमिति ।" भा पू १भ धा.व. । अष्टादशविधम् । यथा —"रक्तशालिर्महाशालि कलमा षष्टिकापरा । खञ्जरीटीपलाशी च नीर वाप्या कपिञ्जला । सौगन्धी शूकला चान्या तिलवासी कचोरका । गरुडा रक्तवल्ली च काल माल्या तथापरा । विलजा मागधी मौना ता अ ष्टादश शालय ॥ कङ्गुश्चतुर्विधं प्रोक्तं श्यामाक यौनक कट । कोद्रवो द्विविध प्रोक्तो वंशबीज यरोद्भव । कुसुम्भबीज तौली च मीनरी च गवेधुक दिजाङ्गला राजनी च चुद्रधान्यगणस्त्वयम् ॥" चुद्रधान्यम् । त्रिधा यवश्च गोधूमी मुद्ग षडिध ईरित । द्विविध प्रोच्यते माषी राजमाषस्त्रिधा मत । मकुष्ठस्तुवरी वेधा निष्पावकमसूरकौ । त्रिधा चणक उद्दिष्ट कलायश्च त्रिपुण्ड्रक ॥"अचि। एषां गुणा स्वस्वपर्याये ज्ञेया । शरज्जौषोद्भवधान्यगुणा — धान्य शरज्जौषभव पाकेऽम्ल पित्तकृद्गुरु ।" ऋतुसन्धिजधान्यगुणा —"ऋतुसन्धिभव चौष्ण पित्तल कफनाशनम् ॥" राज ३प. । स्थलजधान्यगुणा —"स्थलज कफपित्तघ्न कषाय कटुपाकि च । किञ्चित्तु तिक्तमधुर पव नानलवर्द्धनम् ॥" वापितावापितधान्यगुणा — "वापित गुरु तद्धान्य किञ्चिद्धीनमवापितम् ।" रोप्यातिरोप्यधान्यगुणा —"रोप्यातिरोप्ये लघुनी शीघ्रपाके गुणोत्तरे । अदाहिनी दोषहरे बल्ये मूत्रविवर्द्धने ॥" यच्छूकसमन्वितं व्रीह्यादिकं तच्छूकधान्यम्, शिम्बीनिगूढ मुद्गमकुष्ठकादि शिम्बीधान्यम् । तृणोद्भवतया तृणधान्यम् । इति । "पक्व हरितलूनञ्च धान्य सम्यग्गुणावहम् । शुष्कं लूनन्तु नि सारं रूच तत्स्तनाशनम् ॥" इति हरितलूनाद्यग्रकालूनाग्रगुणा । "कोमधान्य नवञ्चास्य मधुर वत्सरोषित । निर्दोष लघु पथ्यञ्च तद्वर्षाद चिरस्थवेत् । नव धान्यमभिष्यन्दि लघु संवत्सरोषितं । द्वाब्दोषितं लघु पथ्य त्रिवर्षादबलभवेत् ॥" इति नवधान्यजीर्णधान्यगुणा । धान्य वापितम् उत्तम, तदेव छिन्नोद्भव मध्यमम् । दग्धभूमौ वने वा वापित छिन्नोद्भव धान्य विष्टम्भकरम् । चारोदकक्षुपन्न शुरोगघ्नम् । सुखिन्धभूमिजम् चोजीवलकरम् । वालुकाभूमिजन्त्व लपुष्टिकरञ्च । रा नि व १६ ।

**धान्यकम्** । क्ली । स्वनामख्यातपण्यद्रव्ये । धने । हि कोथुमुरि । धनियां । मद व १ । गु

धा. — मधुरं शीतलं कषाय पित्तघ्नं ज्वरकासघ्न श्वासच्छर्दिकफघ्नं दीपनञ्च । रा.नि व ६ । च.सू ४ अ. । च द.ज्वराति चि. । "विल्वधान्यकनागरैः ।" पुं । माषमितमाने । ७ कुँच । प.प्र.१ख. ।

**धान्यकञ्चुकी (इन्)** । पु । धान्यत्वचि । धानेर खोसा । गुणा.—धान्यगुणयुक्त । रा नि. व.१६ ।

**धान्यकतण्डुलः** । पुं । कण्डितधान्याकतण्डुले । धनेर चाल । भा.म १भ अम्लकाञ्ज चि.धान्यकक्वाथे । "प्रातर्धान्यकतण्डुलक्वाथ ।"

**धान्यकल्कः** । पु । तुषे ।

**धान्यचतुष्कम्** । क्ली । अतीसारे धान्यशुण्ठक बालकविल्वकृतकषायविशेषे । वैद्यकश. । क्वा. ।

**धान्यचमसः** । पुं । चिपीटके । चिँडे । चि

**धान्यजम्** । क्ली । धान्ये । रा नि व ६ ।

**धान्यतुषोदम्** । क्ली । धान्यतुषकृतसन्धानविशेषे । एतदभावे काञ्जिकम् । सि.यो अजी.चि. ।

**धान्यतैलम्** । क्ली । गोधूमयावनालव्रीहियवादिजतैले । गुणा. — त्रिदोषशमनं कण्डूकुष्ठादिघ्नं चक्षुष्यञ्च । रा.नि व १५ ।

**धान्यपञ्चकम्** । क्ली । आमशूलादौ कषाये । "धान्यकं नागरं मुस्तं बालकं बिल्वमेव वा । आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥" वैद्यकशं. । पञ्चविधधान्येषु शालिव्रीहिशूकशिम्बीक्षुद्राख्येषु । "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकं । शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् ॥" भा. ।

**धान्यपटोलः** । पु, क्ली । पित्तश्लेष्मज्वरे योगविशेषे । अत्र धान्यस्य १० माषा. पटोलस्य च ६ माषा' । सि यो.ज्व.चि. ।

**धान्यपानकम्** । क्ली । धान्यकृतपानकविशेषे । धनेर पाना । तस्य साधनविधि —"शिलायां साधु सम्पिष्ट धान्यकं वस्त्रगालितं । शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतं । नूतने मृण्मये पात्रे स्थितं पित्तहरं परम् ॥" भा. ।

**धान्यपिप्पली** । स्त्री । आमज्वरे । ज्वरे दीपनी पाचनी च । धान्यादीनां प्रत्येक ६ माषा ४ रात । यो रत्ना ।

**धान्यमण्डः** । पुं,क्ली । धान्यकृतमण्डे । धानेर मण्ड । गुणाः—"धान्यमण्डं पित्तहरं श्रमघ्नमग्निदीपनं । वातलं रक्तशमनं ग्राहि सन्दीपनम्परम् ॥" अत्रि.१२अ. ।

**धान्यमद्यम्** । क्ली । धान्यकृतमद्ये । धेनो मद । गुणा' – गुरु विष्टम्भि च । रा नि व.१४ ।

**धान्यमाषः** । पुं । कलाये, माषे । वै निघ । षोडशसर्षपपरिमाणे । च.कल्प.१२अ. ।

**धान्यराजः** । पु । यवे । रा.नि.व १६।२३ ।

**धान्यवीजम्** । क्ली । धन्याके । रा नि व ६ ।

**धान्यवीरः** । पु । माषे । मांष कलाय वा विवि कलाय । रा.नि.व.१६ ।

**धान्यशाकम्** । क्ली । धन्याकशाके । धनेर शाक । र चि ८अ. । [ण्ड वा शीष । लटा ।

**धान्यशीर्षकम्** । क्ली। धान्यकणिशे । धानेर

**धान्यश्रेष्ठम्** । क्ली । हैमन्तशालिधान्यभेदे, वृषान्ने । हैमन्तिक धान्यविशेष । रा.नि व.१५ ।

**धान्यस्वेदः** । पु । धान्याम्ले स्वेदे । माषादिकोषधान्ये स्वेदे । सु.चि ३२अ ।

**धान्या** । स्त्री । धान्यके । अत्रि २स्थान १अ ।

**धान्याकम्** । क्ली । धान्यके । मद.२व. । वै. निघ.१भ.छर्दि.चि. ।

**धान्याग्रम्** । क्ली । धान्यकणिशे ।

**धान्याभ्र(क)म्** । क्ली । अभ्रकविशेषे । कृत्रिम अभ्रविशेष । तत्करणप्रणाली भावप्रकाशे— "पादांश शालिसंयुक्तमभ्रं बद्धा च कम्बले । त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेत्करैः । कम्बलाद्गलितं सूक्ष्मं वालुकारहितञ्च यत् । तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥" इति । तद्धप्रकरणम् —"धान्याभ्रं धर्मदुग्धेन तत. चीरे विनिक्षिपेत् । भिन्नपत्रन्तु तत् कृत्वा तण्डुलीयाम्बुयोद्रवैः । भावयेद्दण्डयामन्तर्दिव ग्ध्यति चाभ्रकम् । कृत्वा धान्याभ्रकं तत्तु शोषयित्वा तु मर्दयेत् । अर्कक्षीरैर्दिनं मर्द्यमर्कमूलद्रवेण वा । वेष्टयेदर्कपत्रैस्तु सम्यग्गजपुटे पचेत् । पुनर्मर्द्य पुन पाच्य सप्तवारं प्रयत्नत. । ततो वटजटाक्वाथैस्तद्वद्देय पुटत्रयम् ॥" र.चि,४अ ।

**धान्यास्वम्** । क्ली । मधुगम्भीरकृतसन्धान-

विशेषे। लेवुर आरक। मधुभाण्डमध्यीरसे रावुश्च धान्यराशौ मास स्थापयेत्। वै निघ।

**धान्याम्बु।** क्ली। धान्योदके। वा चि ६ष.।

**धान्याम्ल(क)म्।** क्ली। रसस्वेदनकाञ्जिकविशेषे। यथालब्धनिस्तुषधान्यानि जलेन भाण्डमध्ये तावद्दचेत् यावदम्लत्व नायान्ति। ततश्च तन्मध्ये भृङ्गराजमुण्ड्यपराजितासल्याचीसर्पाचीसहदेवीत्रिफलानीलापराजिताहसपादीचित्रक समूल यथालाभ कुट्टयित्वा देयम्। "नानाधान्यैर्यथाप्राप्तैस्तु पात्रेर्जलान्वितैः। मृद्भाण्ड पूरित रक्षेत् यावदम्लत्वमाप्नुयात्। तन्मध्ये भृङ्गरा मुण्डी विष्णुकान्ता पुनर्नवा। मीनाची चैव सर्पाची सहदेवी शतावरी त्रिफला गिरिकर्णी च हसपादी च चित्रक। स मूल कुट्टयित्वा तु यथालाभ विनि क्षिपेत्। पूर्वाम्लभाण्डमध्ये तु धान्याम्लकामद स्मृतम्। स्वेदनादिषु सर्वत्र रसराजस्य योजयेत्॥" भा २म। च द दच्या चि। काञ्जिके। काञ्जि। रा नि व १५। तत्साधनप्रणाली यथा—"धान्याम्ल शालिचूर्णश्च कोद्रवादिकृत भवेत्। धान्याम्ल धान्ययोनि लाघवपन लघु दीपन। अरुची वातरोगेषु स र्वेवास्थापनेषु च॥" भा पू २भ.।

**धान्यारि।** पु। वनमूषके। रा नि व १९।

**धान्यासव।** पु। धान्यकृतासवे। गुडधात्री धातकीसुरासौवीरकसैरेयमैदकधान्यासेषु षट्सु। च सू २५भ। [व.१४।

**धान्योत्तमम्।** क्ली, पु। शालिधान्ये। रा नि.

**धान्व:।** त्रि। जाङ्गले। वा चि ६ष.।

**धान्वन्तरघृतम्।** क्ली। प्रमेहाधिकारे घृतम्। गव्यघृत १६ श। क्वाथार्थ—दन्तीमूल चित्रकमूलम् एषां प्र ८ प हरीतकी २० प देवदारु कदम्ब केलिकदम्बत्वक् वरुणत्वक् आरग्वधत्वक आमलक पुनर्नवा कारस्करत्वक प्र ६ प दशमूल मिलित्वा ६४ प वारि चतुर्गुण शे. चतुर्थांश। "कल्क—पचलवण पचकोल प्र २ तो.। इति धन्वन्तरम्। सा को। घृत १६ श। क्वाथार्थ—दन्तीमूल, চিতামূল প্রত্যেকে ৮ প হরীতকী २० प. দেবদারু ৬ প. কদম্ব, কেলিকদম, বরুণ, সোঁদাল, আম্র, পুনর্নবা, কবঞ্জ প্রত্যেকের ছাল ৬ প দশমূল মিলিত ৬৪ প জল চতুর্গুণ শেষ চতুর্থাংশ। কল্কার্থ—পঞ্চলবণ, পিপুল, পিপুলমূল, চই, চিতামূল শুঁট প্রত্যেকে ২ তো। দ্বিতীয়ম্—গব্যঘৃত ৪ শ। क्वाथार्थ—दशमूल करञ्जद्वयस्य फल (तदभावे त्वक) देवदारु हरीतकी शलपुनर्नवा वरुणमूल दन्तीमूल चित्रकमूल पुनर्नवा कदम्बत्वक् केलिकदम्बत्वक कुटीत्वक् बिल्वत्वक् भल्लातक शटी पुष्करमूल कथामूलम् एषां प्र १० प. यवकोलकुलथानां प्र १६ प वारि २१० श. शे ५४ श ४ प। कल्कार्थ—हिज्जलमूल त्रिफला भार्गी रौहितकमूलं गजपिप्पली शुण्ठी वचा विडङ्ग गुण्डारोचनी एषां प्र ५॥० तो। च द। ঘৃত ৪ শ.। ক্বাথার্থ—দশমূল করঞ্জ, রক্তকরঞ্জ দেবদারু, হরীতকী, শ্বেতপুনর্নবা, বরুণ দন্তী, চিতা, পুনর্নবা, কদম্ব, কেলিকদম্ব, সিজু, বিল্ব, ভেলা, শঠী, পুষ্করমূল, পিপুলমূল প্রত্যেকে ১০ প যব, কুল, কুলথ প্রত্যেকে ১৬ প. জল ২১০ শ শেষ ৫৪ শ ৪ প.। কল্কার্থ—হিজলমূল, ত্রিফলা, বামুনহাটি বরনামূল, গজপিপুল, শুঁট, বচ, বিড়ঙ্গ, কমলাগুঁড়ি প্রত্যেকে ৫॥০ তো.। रस र.। [मि.।

**धाम (न्)।** क्ली। शरीरे। श्रम। जन्मनि।

**धामकम्।** क्ली। कर्षे। गन्धতৃণ বা রাগ কর্পূর। रा नि व ८। पु। माषपरिमाणे। "इ मथ धामकथैव।" प म।

**धामनी।** स्त्री। शोणितवाहिशिरायां। श च।

**धामार्गव:।** पु। पीतघोषायाम्। পীত ঘোষা। धुन्दुल। हि नेनुआ। प मु। सु सू ३८श.। च सू १।२श। अपामार्गे। रक्तापामार्गे। भा पू १ भ। महाकोषातक्याम्। ঝিঙ্গা। हि तारइ। ते एतरोिंच, चेतिबीर। रा नि.व.७। राजकोषातक्याम्। वा टी हेमा।

**धार।** पु। पाषाणविशेषे। सन्ततौ। द्रवद्रव्यमात्रे। क्ली। अम्बुदके। वृष्टिर जल। तच्च द्विविध गाङ्ग सामुद्रश्चेति। "धाराभि पतित ताय गृह्णीत स्फीतवाससा। शिलायां वसुधायां वा धौतायां पतितश्च यत्। सौवर्णे राजने तामे स्फटिके काच

क्षीरलतायाम् । বড লতাফটকী । काकोल्यां । रा नि व ३ । क्षीरकाकोल्याम् । वै निघ । शिग्रु पाठचे । শিশু গাছ । प मु । कृष्णशिंशपायां, কালশিশু বা কাল অগুরু । रा नि व ९ । शुक्लवचायाम् । कण्टकसेवत्याम् । वै निघ. । मद्य विशेषे । रा.नि व १४ ।

**धीरावी** । स्त्री । पीतशिंशपायाम् । वै निघ ।

**धीवरी** । स्त्री । शतमूल्याम् । रा नि व ४ ।

**धीहरा** । स्त्री । कुन्दुरौ । वै निघ. ।

**धुकः (का)** । पु, स्त्री । भूमिवदरवृक्षे । वै निघ. ।

**धुकन्धुकम्** । क्ली । वदरीफले । मद व ६ ।

**धुकी** । स्त्री । भूवदरे, हस्तिकोल्याम् । কাম-রাঙ্গা । मद व.६ । [गृहधूमे । ঝুল । मे. ।

**धुन्धुमारः** । पुं । इन्द्रगोपनामकीटविशेषे ।

**धुरणीफलः** । पु । शुद्रवृक्षे । प मु ।

**धुरन्धरः** । पु । धववृक्षे । प मु । र मा ।

**धुर्द्धर , धुर्य्य.** । पु । ऋषभके । रा नि.व.५ ।

**धुस्तु(स्तू)रः** । पु । (Datura fastuosa) कृष्णधुस्तूरे । (Datura elba) श्वेतधुस्तूरे । (Datura metel.) उपविषपर्य्यायस्वनामख्यातक्षुपे । धुतुरागाछ । र मा । हि धातुरा । मं धतूर । क मदकुणिगे । तें उम्मेत्तचेट्टु तान्न उन्मेत्त । ता. कारुउमत्ते । गुणा —कटुरुष्ण कान्तिकारी व्रणघ्न. त्वग्दोषखर्जूकण्डूज्वरघ्न भ्रमजनकश्च । रा.नि व १० । मूर्च्छाजनक अग्निघ्न पित्तघ्नश्च । राज. । ' धुस्तूरादेश्च यद्बीजमन्यच्चोप विषञ्च यत् । चौरेण पाचयेद्दोलायन्त्रेण शुद्धिमाप्नुयात् ।" इति शोधनम् । सा.कौ. । घण्टाकर्णक्षुपे । ঘেঁটু গাছ । रुद्रतेले । सा.कौ ।

**धुस्तूरतैलम्** । क्ली । कर्णरोगाधिकारे पक्वतैलम् । ' निशागन्धपलं पक्वं कटु तैलं पलाष्टकम् । धुस्तूरपत्रजरसे कर्णनाडीनिदुःखमम् ।" कटुतैलं ८ प धुस्तूरपत्ररस १६ प । कल्कार्थे—हरिद्रा गन्धकयोः प्रत्येक १ प. । सा कौ. । इदमेव रसरत्नाकरे गन्धकतैलम् । [निघ ।

**धूक.** । पु । वायौ । वकुलवृक्षे । विडाले । वै.

**धूनक (नः)** । पु । शालनिर्यासे । धूना । त्रिका । क्ली । कम्पने ।

**धूनराजः** । पु । वृक्षविशेषे । कृमिमलुधीति प श्चिमदेशे । गुणा सूचल ग्राही कफघ्न दन्त-रोगघ्नी बल्य मेहासृग्दरघ्नश्च । अचि. ।

**धूनिः** । स्त्री । कम्पने । व्याक ।

**धूप.** । पु । उष्णखेदे । ভাপরা । सुगन्धीकरणे गन्धद्रव्यात्थधूमे तद्वर्त्तौ च । हे च । माहेश्वरादौ । धूपार्थं द्रव्यगणो यथा —'द्विधागुर्देवदारुश्च गन्धपाषाणकस्त्रिधा । गुग्गुलु पञ्चधा सर्जो निर्यासः सरलस्य च । पद्मकाष्ठं मोचरसो निर्यासः सल्लकस्य च । राल नेपालकश्चेति गणोऽयं धूपसञ्ज्ञक ॥" अर्क.चि. ।

**धूपकम्** । क्ली । तूलकाष्ठे । रा नि व.९ ।

**धूपद्रुम.** । पु । रक्तखदिरे । रा नि व.८ ।।

**धूपनम्** । क्ली । धूपाधिवासने । धूपेन घर्षांकर्षणे । ভাপরা । Lumigation व्रणादीनां क्रियाविशेषे । শুকো গরম্ । स च व्रणशोधनानन्तरं विधेय । तद्द्रव्य यथा—"श्रीवेष्टके सर्जरसे सरले देवदारुणि । सारेष्वपि च कुर्व्वीत मतिमान् व्रणधूपनम् ॥" सु ।

**धूपनः** । पु । धूनके । धूना । श.मा. ।

**धूपवृक्ष. (क.)** । पु । रक्तखदिरवृक्षे । रा नि. व ८ । देवदारुवृक्षे । सरलवृक्षे । त्रिका । श.र ।

**धूपसरला** । स्त्री । धूपाङ्गसरलवृक्षविशेषे । वै निघ. । [१२ ।

**धूपाग(गु)रु** । क्ली । दाहागुरुणि । रा नि व

**धूपाङ्गः** । पु । श्रीवेष्टनामकसुगन्धकाष्ठे । টার্পেণ্টাইন্ গাছ । रा.नि व.१२ ।

**धूपार्हम्** । क्ली । कृष्णागुरुणि । रा नि व १२ ।

**धूप्यः** । पु । नखीनामगन्धद्रव्ये । रा नि व १२ ।

**धूमः** । पु । शिलारसे । गृहधूमे । ঝুল । मेघके । ধোঁওয়া । गुणा —"स्यात् श्लेष्मकरी धूमो नेत्रयो रहितो भृशम् । शिरोगौरवकृच्चापि वातपित्तप्रकोपयेत् ।" भा । वातपित्तवर्द्धक । राज १५ । अस्य पानार्थे पञ्चविध —प्रायोगिकः स्नेहन रेचन कासघ्न वामनीयश्चेति । पञ्चविधा एव धू

**धूमरजः** । क्ली । गृहधूमे। झूल । भैष.कर्णरो. चि. ।

**धूमसः** । पुं । माकतरौ । वै निघ. ।

**धूमसारः** । पुं । गृहधूमे । झूल । र.सा.सं. ।

**धूमसी** । स्त्री । मुद्गविदलादिकृतवटिकायाम् । पापड, डालवड़ि, चुकृनि । प्रणाली यथा—"माषाणां दालयस्तोये स्थापितास्त्यक्तकञ्चुका । आतपे शोषिता पश्चे पिष्टास्ता धूमसी स्मृता । धूमसीरुचिरा सैव प्रोक्ता सुमुंरिका बुधैः । सुमुंरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृता ।" भा ।

**धूमा(म्रः)** । स्त्री, पुं । कृष्णशिंशपायाम् । वै. निघ. । [सहजातीयपक्षिणि । च. ।

**धूमिका** । स्त्री । कुज्झटिकायां । त्रिका. । श

**धूमोत्थम्** । क्ली । वज्रक्षारे । रा.नि.व ६ ।

**धूमोद्गारः** । पुं । पित्तजरोगभेदे । भा. ।

**धूम्या(म्रा)टः** । पुं। कुलिङ्गपक्षिणि । फिঙে। श्रम. । [नि.व.१२ । चटके । घटा. ।

**धूम्रः (कः)** । पुं । सिह्लके । शिलारस । रा.

**धूम्रपत्रा** । स्त्री। स्वनामख्यातक्षुपे । तामाक । मं गांधानी । कं कत्तगिरि । धत्. धूयापतर। गुणाः—तिक्ता शोफघ्नी कृमिघ्नी उष्णा कासघ्नी रूक्षा दीपनी च । रा.नि.व.५ ।

**धूम्रपत्रिका** । स्त्री । धूम्रपत्रायाम् । रा.नि. व.१३ । गन्धद्रव्ये । गन्धद्रव्यभेदे । वै.निघ. ।

**धूम्रमूलिका** । स्त्री । यूलीतृणे । रा.नि.व.८।

**धूम्रलोचनः** । पुं । कपोते । रा नि.व.१८ ।

**धूम्रवर्णः (कः)** । पुं । सिह्लके । शिलारस । रा.नि.व.१२ । कोकड़नामविशेषपक्षी । रा.नि. व.१८ ।

**धूम्रवर्णा** । स्त्री । वराटिकाभेदे। रा.नि व.१३।

**धूम्रशूलः** । पुं । उष्ट्रे । वै.निघ. ।

**धूम्रा** । स्त्री । महाक्षुण्णां । रा.नि व.७।

**धूम्राह्वा** । स्त्री । धूम्रपत्रायाम् । रा.नि.व.५ ।

**धूम्राचिः** । स्त्री । धूम्रमुद्रायाम् । वै.निघ. ।

**धूम्रिका** । स्त्री । कृष्णशिंशपाये । कालशिंशु वा सत्रुक । रा.नि.व.९ ।

**धूर्त्तः** । पुं । श्वेतकृष्णधुस्तूरवृक्षे । प.मु । धर्त्तूनवृक्षे । कुष्माण्डे । वै.निघ. । चोरक नामगन्धद्रव्ये । गेंटेला । रा नि.व.१२ । क्ली । लौहकिट्टे । हेच । विड्लवणे । रा नि.व.६ । [श.र. ।

**धूर्त्तकः** । पुं । कौलिकदम्बे । प.मु । शृगाले ।

**धूर्त्तकृत्** । पुं । धुस्तूरवृक्षे । श मा. ।

**धूर्त्तजन्तुः** । पुं । मनुष्ये । श.च. ।

**धूर्त्तमानुषा** । स्त्री । रास्नायाम् । श.च. ।

**धूर्त्तरः** । पुं । पारदे । रा.नि.व.१३ ।

**धूर्त्ता** । स्त्री । शुक्लकण्टकार्याम् । वै.निघ. ।

**धूर्वरः, धूर्य्यः** । पुं । ऋषभके । वै.निघ. ।

**धूलकम्** । क्ली । विषे । श च. । [श्रम. ।

**धूलिः** । पुं । परागे । गर्द्दभे । पार्थिवरजसि ।

**धूलिका** । स्त्री । धूली । पुष्पपरागे । वै.निघ. । कुज्झटिकायाम् । श र. । [न । त्रिका. ।

**धूलिगुच्छः (कः)** । पुं। पिष्टातके । आबी-

**धूलिजङ्घः** । पुं । काके । काक । वै.निघ. ।

**धूलिपुष्पिका** । स्त्री । केतकीवृक्षे । केयां गाछ । रा.नि.व.१० । श्वेतकेतके । वै.निघ. ।

**धूलीकदम्बः (कः)** । पुं । कदम्बवृक्षविशेषे । धाराकदम्ब । मं धूलिकदंबु । कं धूळिगडब । गुणैः धाराकदम्बतुल्यः । रा.नि.व.१० । तिनिशवृक्षे । वरुणवृक्षे । मे. ।

**धूसरः** । पुं । गर्द्दभे । उष्ट्रे । वनघटके । कपोते । रा.नि व.१८ । शुक्रे । वै.निघ. । त्रि । पाण्डुवर्णे । मे. । [शुक्लपुष्परास्नायाम् । वै.निघ. ।

**धूसरच्छदा** । स्त्री । श्वेतबुह्नायाम् । प.मु. ।

**धूसरपत्रिका (त्री)** । स्त्री । वृश्चिकाल्याम् । विछाति । शिवमल्लीशाके । प.मु. । हस्तिशुण्डीनामक्षुपे । हातिशुंड़ । रा.नि.व.५ ।

**धूसरमुद्गः** । पुं । धूसरवर्णमुद्गविशेषे । मं धूसरमुद्गा क पीयरमुद्ग। गुणाः—रसवीर्यविपाकेषु हरिन्मुद्गसमः कषायः मधुरः रूक्षः पित्तकृत् वातविष्टम्भकृच । रा नि व.१६ ।

**धूसरा** । स्त्री। पाण्डुरफलीनामक्षुपे। रा.नि,व.४।

धूसराह्वयः । पुं । गर्दभे । वै.निघ. ।
धूसरी । स्त्री । गर्दभ्यां ।
धूस्तूरः । पुं । धुस्तूरक्षुपे । प.मु. । [ह्वि.च. ।
धृतराष्ट्रः । पुं । हंसभेदे । हंसजातीयपक्षिणि ।
धृतराष्ट्री । स्त्री । हंसविशेषपत्न्याम् । मे. ।
धृतिः । स्त्री । धैर्य्ये । वेगविघाते । भा.म ३भ. उदा.चि. ।
धृष्णुः । स्त्री । कक्षिकायां । कक्षि । श.च ।
धेनिका । स्त्री । धान्याके । धने । भा ।
धेनुः । स्त्री । दुग्धवत्या गवि । अम. ।
धेनुका । स्त्री । धान्यके । धने । मद.व.२ । हस्तिन्या । गवि । मे. ।
धेनुकारिः । पुं । नागकेसरवृक्षे । वै निघ ।
धेनुजिह्वा । स्त्री । गोजिह्वानामक्षुपे । रा.नि व ४ । [गोदुग्धे ।
धेनु(का)दुग्धम् । क्ली । चिर्भट्याम् । भा ।
धेनुदुग्धकरः । पुं । मञ्जरवृक्षे । रा.नि.व.८।
धेनुमक्षिका । स्त्री । गोमक्षिकायाम् । डाँश माछि । वै निघ. ।
धोड़ः । पुं । डुण्डुभे । ढोंडासाप । श.र. ।
धौतम् । क्ली । रौप्यधातौ । रा.नि व.१३ । नीलकाशीसे । नील हिराकस् । वै.निघ. ।
धौतकौशेयम् । क्ली । धौतकौषजे । पत्रोर्णे । श.र. ।
धौतखण्डी । स्त्री । खण्डशर्करायां । वै.निघ. ।
धौतशिलम् । क्ली । स्फटिके । शिका. ।
धौमतम् । क्ली । रक्तपीलौ । थूनथारापि । वै. निघ. ।
धौरः । पुं । धवक्षे । धाओआ गाछ । भा. ।
ध्माङ्क्षः । पुं । काके । बके । जलकाके । पानकोडी । अम । जलपक्षिभावे । तक्षके । वै निघ. ।
ध्मा(ध्वा)ङ्क्षजङ्घा । स्त्री । काकजङ्घायाम् । रा.नि.व ४ । [मदमू । रा.नि.व.११ ।
ध्मा(ध्वा)ङ्क्षजम्बूः । पुं । काकजम्बूवृक्षे । भ-
ध्मा(ध्वा)ङ्क्षतण्डुलफला । स्त्री । काकजङ्घायाम् । वै.निघ. ।
ध्मा(ध्वा)ङ्क्षतुण्डा (ण्डी) । स्त्री । काकादनीलतायाम् । काकनासालतायां । कूँच गाछ । रा.नि.व.३ ।
ध्मा(ध्वा)ङ्क्षदन्ती (नखी) । स्त्री । काकादनीलतायाम् । काकनासालतायाम् । रा.नि.व.३।
ध्मा(ध्वा)ङ्क्षनामा (नाम्नी) । स्त्री । कौदुम्बरिकायाम् । रा नि.व.११ ।
ध्मा(ध्वा)ङ्क्षनाशिनी । स्त्री । हवुषाभेदे हबुष फल । रा.नि व.४ । भा. ।
ध्मा(ध्वा)ङ्क्षनासा (सिका) । स्त्री । काकनासालतायाम् । कूँच गाछ । रा.नि.व ३ ।
ध्मा(ध्वा)ङ्क्षपुष्टः । पुं । कोकिले । धारा ।
ध्मा(ध्वा)ङ्क्षमाची । स्त्री । काकमाचीक्षुपे । रा.नि.व ४ । [रा नि.व.४ ।
ध्मा(ध्वा)ङ्क्षवल्ली । स्त्री । काकजङ्घायाम् ।
ध्मा(ध्वा)ङ्क्षादनी । स्त्री । काकादनीलतायाम् । रा.नि व.३ ।
ध्मा(ध्वा)ङ्क्षारातिः । पुं । पेचके । हला. ।
ध्मा(ध्वा)ङ्क्षी । स्त्री । काकोल्याम् । काँदुनी । मे. । काकजङ्घायाम् । वै.निघ. ।
ध्मा(ध्वा)ङ्क्षोली । स्त्री । काकोल्याम् । काँदुनी । प.मु. । रा.नि.व.३ ।
ध्मापनम् । क्ली । अग्निसन्धुक्षणे ।
ध्यामम् । क्ली । दमनकवृक्षे । मे. । कतृणे । ग्रामकर्पूरे । प.मु । सु.चि.११अ. । च.द.ग्नि पातञ्च.चि.अपराजिताधूपे । च.द.वा.व्या.१८अ ती प्रसारणीतैले । वै निघ १भ.गुग्गुल्वादिधूपे। मूलके । सु सू.३६अ. ।
ध्यामकम् । क्ली । कतृणे । ग्रामकर्पूरे । च सू। च.सू.५अ. । सु सू.१८अ.एलादिः । रौहिषे वा.सू १५अ.ईमा (अभावे तयोर्) । भा.म.३भ विष.चि. । "पिप्पली ध्यामकं मांसी ।" भा.म म.ज्व.चि । [वटवृक्षे । मद.व.५ । शिका.
ध्रुवः । पुं । धववृक्षे । धाओआ गाछ । र.मा.

ध्रुवा । स्त्री । शालपर्ण्याम् । रा नि व.४ । मूर्व्वायाम् । मे ।

ध्वंसः । पुं । मद्यविकाररोगे । लक्षणं यथा— "श्लेष्मप्रसेक कण्ठास्यशोष शब्दासहिष्णुता । तन्द्रानिद्राभियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥" च. ।

ध्वसी । स्त्री । मानविशेषे, त्रसरेणुपर्य्यायपर्य्याये मागधमाने । "त्रसरेणुस्तु पर्य्यायनाम्ना ध्वंसी निगद्यते ।" प स १ख । पु (इन्) । गिरिजपीलौ । श र. ।

ध्वजः । पु क्ली । शिश्ने । भा म ३.१ "ध्वजपतत्यती नृणां क्लैव्यं समुपजायते ।" "ध्वज चिह्ने पताकायां मेढ्रे ।" विश्व । तालवृक्षे । रा नि व ६।

ध्वजद्रुमः । पुं । तालवृक्षे । रा.नि व ६ ।

ध्वजप्रहरणः । पु । वायौ । श र ।

ध्वजभङ्गः । पु । छिन्नपातकृतक्लैव्यरोगविशेषे । ध्वजभङ्ग रोग । निदानलक्षणे यथा—"अति व्यवायशीलो यो न च वाजीक्रियारत । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुक । अत्यम्ललवणक्षारविरुद्धाजीर्णभोजनात् । अत्यम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् । दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् । कन्यानां गमनाच्चापि योनिगमनादपि । दीर्घरोमां चिरोत्सृष्टां तथैव च रजस्वलां । दुर्गन्धां दुष्टयोनिश्च तथैव च परिसुतां । ईदृशीं प्रमदां मोहात् यो गच्छेत् कामदर्पित । चतुष्पदादिगमनाच्छेफसश्चाभिघातत । अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् । काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात् । चेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते ॥" च । See क्लैव्यम् ।

ध्वजवृक्षः । पुं । माड इति कोङ्कणदेशख्यात-वृक्षे । रा.नि.व.६ । [पिं । मे ।

ध्वजी (इन्) । पुं । मयूरे । रा नि.व.१९ । स-

ध्वनिग्रहः । पुं । कर्णे । त्रिका ।

ध्वनिबोधक(न)म् । क्ली । सुगन्धरोहिषतृणे । वै निघ. । [श्रम । अत्यपचिमाचे ।

ध्वाङ्क्षः । पु । काके । बके । भक्ष्यादपक्षिणि ।

ध्वान्तवित्तः । पुं । खद्योते । श र. ।

ध्वान्तशात्रवः । पु । शोणाकवृक्षे । श.च. ।

ध्वान्तोन्मेषः । पु । खद्योते । जनाकि पोका । त्रिका. ।

---

# न

नः । पुं । रवे । ए.को. ।

नःक्षुद्रः । त्रि । ह्रस्वनासिके । थान्दा । हे.च. ।

नकुटम् । क्ली । नासिकायाम् । श मा. ।

नकुलः । पु । (The bengal mungoose, Viverra ichneumon.) स्वनामख्यातजन्तौ । नेउल । हिं बेजी । म मुंगूस । क मगुस । लक्षण —य स्थूलपुच्छो रक्तनेत्रो वसुदेह स नकुल । शालिहोत्र । नकुलमांसगुणा —पिच्छिल वातघ्न श्लेष्मपित्तघ्न । रा नि व १०। 'गुरुस्निग्धमधुरस्त्वलोपचयवर्द्धनम् । वृष्य पर वातहरम् . . ॥" च सू.२७ष. । [शा । रा नि.व.७ ।

नकुलाढ्या । स्त्री । गन्धनाकुल्याम् । शब्द ना

नकुलान्ध्यम् । क्ली । नेत्ररोगभेदे । लक्षण— "विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् । चित्राणि रूपाणि दिवा च पश्येत् स वै विकारो नकुलान्ध्यसंज्ञ ॥" मा म.४म. । नकुलान्ध्री दिवा चित्र पश्यति न तु निशि । चक्र. ।

नकुलारिः । पु । बिडाले । वै निघ. ।

नकुली । स्त्री । शङ्खिनीवृक्षे । वै निघ । शङ्खिन्याम् । धरणि. । कुङ्कुमे । हे च । नकुलपत्र्याम् । मांस्यां । जटामांस्यौ । कुक्कुट्याम् । मुर्गि । मे. ।

नकुलेष्टका (ष्टा) । स्त्री । रास्नायाम् । च ।

नक्तकः । पु । नेत्रपटले । वै निघ. । कर्पटे । लेकडा । श टी भ । [त्रिका. ।

नक्तचारी (इन्) । पु । पेचके । बिडाले ।

नक्तञ्चरः । पु । गुग्गुलौ । गुग्गुल । पेचके । जगा । सोमराज्यां । दुष्टुभे । रा.नि.व २३ ।

नक्तमालः । पु । करञ्जवृक्षे । डहरकरञ्ज । रा.नि व ६ । सु सू ३८ष करञ्जादिरिचनतौले । मि.यी उक्ता वि ।

**नक्तमूलकम्** । क्ली । करञ्जमूले । पुं । महा करञ्जे । वै.निघ. ।

**नक्ता** । स्त्री । लाङ्गलीक्षुपे । विषलाङ्गलिन्याम् । रा नि व.४ । तृणविशेषे । गुलवास इति लोके । गुणा.—सामला शीता गलगण्डहरी च । अपक्का न्या पर्य्यायौ । वै.निघ. ।

**नक्तान्ध:** । त्रि । रात्र्यन्धे । रातकाणा । रात्र्यान्ध्यस्य लक्षण यथा—"दिवा पश्यति य स्वच्छ रात्रौ नैव च पश्यति । नक्तान्ध इति तं विद्यात् विकारं पञ्चमीद्वयम् ॥" ज द.३०च. ।

**नक्तान्ध्यम्** । क्ली । रात्र्यन्धतारोगे । निदा. ।

**नक्ताह्व:** । पुं । करञ्जवृक्षे । मेघ ने.रो.चि. । "नक्ताह्वबीजवर्त्ति ।" च.द अ.श्री चि । भा वा र.चि.त्रिफलागुग्गुली ।

**नक्रम्** । क्ली । नासिकायाम् । मे. ।

**नक्र:** । पु । याहे । वै.निघ । कुम्भीरे । अम. ।

**नक्रराज: (ट्)** । पु । महाशिशुमारे, याहे । हाङ्गर । त्रिका. । [याम् । श.र. ।

**नक्रा** । स्त्री । मक्षिकादशमृत्याम् । नासिका

**नक्राण्डम्** । क्ली । कुम्भीराण्डे । च चि.२थ ।

**नखम्** । क्ली, पु । शरीरोपधातुविशेषे, करजे । नख । रा.नि व.१८ । तत् गर्भस्थस्य षष्ठे मासि भवति । सुखबोध । नखीनामगन्धद्रव्ये । नखी । तें नखमुचिप्य । च.द.चन्दनाद्यतैले । नखीभेदे । प सु. । च सू ५च. । क्षुद्रनिष्पावे । दवटी, छोट शिम् । वै निघ ।

**नखकुट्ट:** । पुं । नापिते । त्रिका. ।

**नखगु(पु)च्छ[ञ्ज]फला** । स्त्री । इत्तनिष्पाविकायाम् । श्वेत शिम्, श्वेत वर्वटी । रा नि.व.७ ।

**नखच्छेदनम्** । क्ली । नखस्य कर्त्तने । नख काटा । गुणा.—"पौष्टिक वल्यमायुष्य शौचरूप विराजनम् । केशश्मश्रुनखादीनां कल्पनं सम्प्रसाधनम् ॥" राज.१प ।

**नखच्छेद्या** । स्त्री । मेदायाम् । रा नि.व ५ ।

**नखनामा** । पु । नीलवृक्षे । वै निघ. ।

**नखनिकृन्तनम्** । क्ली । नखच्छेदनार्थे । नरुन । श चि. ।

**नखनिष्पाव: (विका)** । पुं,स्त्री । शिम्बी भेदे । छोट शिम्, श्वेत वर्वटी । रा.नि.व.७ । See निष्पावी । [रा नि व ५ ।

**नखपर्णी** । स्त्री । वृश्चिकालीक्षुपे । बिछाति

**नखपुष्ठी (ष्पी)** । स्त्री । स्पृक्कायां । पिड़िं । रा.नि व १२ ।

**नखपूर्व्विका** । स्त्री । शिम्बीधान्यविशेषे । इत्ति वर्वटी । रा नि व.७ । [च सू.२०च ।

**नखभेद:** । पुं । वातरोगभेदे । कुष्ठ्यादौ ।

**नखर:** । पुं । नखे । अम. ।

**नखरञ्जक:** । पु । नखरञ्जिनीवृक्षे । मेहेदी गाछ । "तिमिर कौकदन्ता च हिङ्गली नखरञ्जक ।" वै द्रव्याभि. ।

**नखरञ्ज(ञ्जि)नी** । स्त्री (Myrtus communis.) वृक्षविशेषे । मेहेदी गाछ । वै.द्रव्याभि. । नखकृन्तन्यां । नरुन । शब्द: ।

**नखरायुध:** / **नखायुध:** } पु । नखशस्त्रजन्तुमात्रे । सिंहे । ताम्रचूडे । व्याघ्रे । रा नि व १८ "शशकशल्लकीगोधामार्जाराद्या ।" चचि २०च. ।

**नखराह्व:** । पु । श्वेतकरवीरवृक्षे । रा.नि.व.१० ।

**नखरी** । स्त्री । नखीनामगन्धद्रव्ये । श मा । लघुशिम्ब्याम् । वै.निघ. । [चि. ।

**नखविष्किर:** । पु । नखायुधपक्षिमात्रे । श.

**नखवृक्ष:** । पु । नीलवृक्षे । रा नि.व.८ ।

**नखशङ्ख:** । पु । क्षुद्रशङ्खे । श र. ।

**नखशस्त्रम्** । क्ली । नखच्छेदनार्थम् पर्व्वकौशि कौधाराद्याकाराङ्गुलशस्त्रविशेषे । नरुन प्रभृति । "वडिशदन्तशङ्कुमुद्रिकोत्पलपत्रकार्द्धधाराश्चि हे दने भेदने च ।" सु सू.८च. । तस्य फल हाङ्गुलायामम् एकाङ्गुलविस्तृतम् । सु टी.ड. । तच्च छेदनभेदनयो. प्रशस्त नवाङ्गुलम् । तथाहि । "वक्रर्धधार द्विमुख नखशस्त्र नवाङ्गुल । सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छादलेखने ॥" इति ।

**नखाङ्कम्** । क्ली । नखीनामगन्धद्रव्ये । श.र. । नखपत्रे ।

**नखाङ्कुरः** । पुं । नखे । वै.निघ. ।

**नखाङ्गम्** । क्ली । नलीनामगन्धद्रव्ये । र.मा. ।

**नखाभ्यङ्गः** । पुं । नखे तैलमर्द्दने । "तद्विधो नखाभ्यङ्गः शिरोनासाक्षि(चि)तापजित् ।" प्रयोगपारिजातः ।

**नखालिः** । पुं । क्षुद्रशङ्खे । श.च ।

**नखालुः** । पुं । नीलीवृक्षे । रा.नि व.६ ।

**नखाशी** (इन्) । पुं । पेचके । त्रिका. ।

**नखी** । स्त्री । स्वल्पनखाख्यगन्धद्रव्ये । छोट नखी । "नख स्वल्पं नखी प्रोक्ता ।" भा. । सा र क्षोघ्नीति राजवल्लभः । नखीमात्रे । "नखी पञ्चविधा प्रोक्ता गन्धाढ्या गन्धवत् परैः । काचिदुत्पलपत्राभा तथोत्पलदलोपमा । काचिदश्वखुराभा च गजकर्णसमा तथा । वराहकर्णसङ्काशा पञ्चमी परिकीर्त्तिता ॥" च.द टी. । तत्र वराहकर्णाभा न ग्राह्या । सा द्विधा एका शङ्खनखा अन्या मत्स्याख्या वदरीच्छदा । र.मा. । सा. गुणा. – शङ्खश्लेष्मवातास्रज्वरकुष्ठघ्नी लघुः उष्णा वर्ण्या शुक्रला स्वादुः व्रणविषालक्ष्मीसुखदौर्गन्ध्यहरी पाके रसे च कटुः । भा. । उष्णा कटुः विषघ्नी कुष्ठकण्डूव्रणघ्नी भूतविद्रावणी च । रा.नि.व.१२ । शुद्धिः यथा—गोविट्क्वाथकचित्तसुस्विन्ना मधुपाचिता नखी शुध्यति । तद्भेपात् यथालाभं गोमयादिषु गोमयजले वा पक्तव्या । तद्धीपदेशेन घृतेन भर्जयित्वा चूर्णी कर्त्तव्या । तत..कुडुमादिगन्धद्रवेण भावना कार्या । सर्व्वेषा गन्धद्रव्याणां गन्धतोयेन प्रक्षालनमावनं कृत्वा रौद्रशुष्कं कर्त्तव्यम् । शा.कौ. । च.द. ।

**नखीद्वयम्** । क्ली । द्विविधनख्यां । नखी, उत्पलपत्राभा, अश्वखुराभा चेति । च.द वा ख्या.चि. महाराजप्रसारणीतैले ।

**नखीद्वयम्** । क्ली । कामगद, कुरकरालो, इति द्वये । च.द.वा.ज्व.चि । "विश्वप्रभनखीद्वयम् ।"

**नगः** । पुं । वृक्षे । पर्व्वते । अम. ।

**नगकर्णी** । स्त्री । श्वेतापराजितायां । वै.निघ. ।

**नगगन्धा** । स्त्री । रास्नायाम् । वै.निघ. ।

**नगजः** । पुं । हस्तिनि । च.टी,भा. ।

**नगजा** । स्त्री । क्षुद्रपाषाणभेदे । रा नि व.५ ।

**नगजित्** । पुं । पाषाणभेदके । रा.नि.व.५ ।

**नगणा** । स्त्री । पारावतपद्याम् । वनउच्छे..वा.. लताफटकी । र.मा. ।

**नगपतिः** । पुं । तालवृक्षे । वै.निघ. ।

**नगपर्य्यायकर्णी** । स्त्री । अपराजितायाम् । वै निघ. ।

**नगभित्** । पुं । पाषाणभेदे । पारवकुचि..। रा.नि.व.५ । करञ्जोडिपाषाणभेदे । वै.निघ. ।

**नगभूः** । पुं । पाषाणभेदे । रा.नि.व ५ ।

**नगभेदनः** । पुं । करञ्जोडिपाषाणभेदे । वै. निघ. । [लिङ्गत् । अर्क चिः ।

**नगमालः** । पुं । शालिधान्यभेदे । गुणा. शा-

**नगरघातः** । पुं । हस्तिनि । व्याकरणम् ।

**नगराह्वम्** । क्ली । गुण्ठ्याम् । शुँठ । रा नि. व.६ ।

**नगरीवकः** । पुं । काके । त्रिका. ।

**नगरोत्था** । स्त्री । नागरमुस्तायां । रा.नि.व ६।

**नगरौषधिः** । स्त्री । कदलीवृक्षे । श.च. ।

**नगवृत्तिकः** । पुं । गुडमल्लिकाया हरिकाल्या वा । सु चि.२०अ ।

**नगवृत्तिका** । स्त्री । सल्लकीवृक्षे । सु चि.१५ अ. । कल्प.५अ ।

**नगाटनः** । पुं । वानरे । त्रिका. ।

**नगाश्रयः** । पुं.। हस्तिकन्दनामके महाकन्दशाके । रा.नि.व ७ । [पचिपि । अम. ।

**नगौकाः** । पुं । सिंहे । मे. । काके । श.च. ।

**नग्नहूः** । पुं । स्फीतौ । नानाद्रव्यकृतसुरावीजे । वाखर इति लोके । भ. । [नि.व १८ ।

**नग्निका** । स्त्री । अनागतार्त्तवकन्यायाम् । रा:

**नटः** । पुं । अशोकवृक्षे । रा.नि.व.१०।१२। श्योनाकवृक्षे । अम. । लोध्रवृक्षे । देवनाले । जटा. । क्ली । परिपेलवृक्षे । रा.नि.व.८ ।

**नटपत्रिका** । स्त्री । वार्त्ताकुवृक्षे । वै.निघ. ।

**नटपर्णम्** । क्ली । लाँच । टाँनड़ा । वै.निघ. ।

**नटभूषणम्** । क्ली । हरिताले । र.मा. ।

**नटमण्डनम्** । क्ली । हरितालविशेषे । गो दन्ती । प.मु. । हरिताले । रा.नि.व १३ ।

**नटसंज्ञकः** । पु । हरिताले । त्रिका. ।

**नटी** । स्त्री । नलिकानामगन्धद्रव्ये । रा.नि.व. १२ । अशोकवृक्षे । वै.निघ. ।

**नड़ः** । पु । नले । ननथागडा । रा.नि.व ८ ।

**नड़कीयः(प्राय.)** । त्रि । नलमयदेशे । हे च. ।

**नड़मीनः** । पुं । चिलिचिममत्स्ये । श्रम ।

**नतम्** । क्ली । तगरपादिके । तगरपादुका । प मु. । रा नि व.१० । वा.सू.१५ भद्रदार्व्यादि । 'भद्रदारु नतं कुष्ठ ।" च द.सि.यो.यत्र त्रि शत पुष्पादिविषे । "शतपुष्पा नतं कुष्टम् ।" सि यो पानीयकल्याणघृते । "स्थिरा नतं हरिद्रे द्वे ।" भा.म.४भ । "नतवार्ताकिनीकुष्ठ ..... ।"

**नतद्रुमः** । पु । लताशाले । र.मा. ।

**नतनाड़िका** । स्त्री । प्रहरद्वयात् मध्यरात्रि पर्यन्तं काले । वै.निघ. । [श्रम. ।

**नतनासिकः** । त्रि । चन्द्रमासायुक्ते । थेंदा ।

**नताङ्गी** । स्त्री । कर्कटशृङ्गयाम् । मद.व.१ ।

**नदनुः** । पुं । सिंहे । श.मा. ।

**नदीकदम्बः (म्बा)** । पु, स्त्री । गोरक्षमु ण्ड्यां, महाश्रावणिकायाम् । रा.नि.व.५ ।

**नदीकान्तः** । पुं । हिज्जलवृक्षे । हिज्जल गाछ । रा नि व.८ । जलवेतसे । वै.निघ । सिन्धुवारवृक्षे । मे. ।

**नदीकान्ता** । स्त्री । काकजङ्घाक्षुपे । रा.नि.व. ४ । इक्षुकारवेल्लके । छोट उच्छे । जम्बूवृक्षे । जाम गाछ । मे. ।

**नदीकुठेरकः** । पु । नन्दीवृक्षे । रा.नि.व.११ ।

**नदीकूलप्रियः** । पु । जलवेतसे । अटा. ।

**नदीजम्** । क्ली । सौवीराञ्जने । पुं । अर्जुनवृक्षे । प मु. । यावनाले । हिज्जलवृक्षे । रा नि.व ८ । नदीनिष्पावे । रा.नि.व १६ । सम्भूरीवृक्षे । वै. निघ. ।

**नदीजलम्** । क्ली । नद्या जले । नदीर जल । सर्वाएव नद्यः प्राङ्मुखगा गुरुजला पश्चिममुखगा लघुसलिला., देशविशेषगुणानुसारेण गुरुलघुजलाश्च भवन्ति । तथा विन्ध्यान्निर्गत्य पूर्व्वमुखगा वाताटोपं पश्चिममुखगा पित्तश्लेष्माणं दक्षिणमुखगा पित्तोद्रेकम् उत्तरमुखगा. पथ्यपाकञ्च कुर्व्वन्ति । हिमवद्विन्ध्यमलयसह्यादिप्रभवा नद्य शिरो रोगादीन् जनयन्ति । पारियात्रप्रभवाश्च तान् नाशयन्ति । इति देशविशेषान्नदीजलगुणाः । सामान्यनदीजलगुणा —स्वच्छं लघु पावनं दीपनं रुच्यं तृष्णाघ्नं पथ्यं मधुरम् ईषद्रूक्षञ्च । कालभेदान्नदीजलगुणा —यथा प्रावृटकालीननदीजलसेवनात् पीनसकफश्वासकासा जायन्ते, शारदीयनदीजलपानं पथ्यं वातकफघ्नञ्च, हैमन्तनदीजलपानं बुद्धिप्रदम्, शिशिरवसन्तकालीननदीजलं सन्तापशमनं तृष्णादाहवमिश्रमप्रशमनं, तथा ग्रीष्मनदीजलं च द्गुणमेव करोति । रा नि व १४ । "तथा प्राच्य मायाम्या. पश्चिमानुगमाश्रया । ससैकता सपाषाणा द्विविधा चाम्बुवाहिनी । एवं चतुर्विधा नद्यो वातपित्तकफात्मिका ॥" अथ पाषाणनदीगुणा.— 'घनविमलशिलानां स्खलनाज्जातफेनं बहलतरलवीचीक्षुब्धसङ्क्षोभदृश्यम् । ननु लघु च सुशीतं नाति चीणं घनञ्च हरति पवनपित्तं श्लेष्महारि सम्यक् ॥" सवालुकनदीगुणा.—"न घनविमलतोयं सैकतायां प्रवाहो न च भवति लघुत्वं श्लेष्मकृद्धन्ति पित्तम् । भवति मधुरमेव किञ्चिदुष्णं कषायं भवति पवनकारी शोषमूर्च्छां निहन्ति ॥" गङ्गा सरस्वती शोणो यमुना सरयू सर्वाः, वेत्रावती नीला उत्तरा पूर्व्ववाहिनी । हिमवत्प्रभवाःश्रोता हिमसङ्घशीतला' । समाः सर्व्वगुणैर्नद्यो वातश्लेष्महरा नृणाम् ॥ चासां नवशतैर्युक्ता गङ्गा प्रोक्ता मनीषिभि । तथा चर्म्मण्वती वेत्रावती पारावती तथा । चिप्रा महानदी पीता सूक्ष्मकन्या समन्विनी । शिवती शैवलिन्यश्च सिन्धुयुक्ता समुद्रगा । वातपित्तहरं नीरं त्रिदोषघ्नं मतं परम् । प्रसन्नानिलहरं हृद्यमुत्तराशानुगामि च ।" इति मध्योत्तरानुगा । "तापी तापा च गौतमी गोमती सलिला मही । सरस्वतीयुता नद्या मध्यदाक्षिणात्याः । आसां जलं घनं पीतं पित्तघ्नं कफकर्त्या । वातदोषहरं हृद्यं वपूकुष्ठविनाशनम् ।.दे-

विमाद्रिसमुद्भूता गौतमी पुण्यभावना। आसां शीतं जलं वापि कफवातविकारनुत्। पित्तद शमन वल्यं मूत्रदोषविकारनुत्। पूर्णा पयस्विनी वेता प्रणीता च वरानना। द्राणा गोवर्द्धनी याम्या शीतम्यनुगता इमा। कावेरी वीरकान्ता च भीमा चैव पय.स्विनी। विभावरी विशाला च गोविन्दी मदनस्वसा। पार्श्वव्ययापरा नद्यो दक्षिणो दिग्गमा इमा॥" अत्रि.७म।

**नदीजा** । स्त्री। जलयष्ट्याम्। खिरूक। वै. निघ.। अग्निमन्थवृक्षे। रा.नि व.९।

**नदीनिष्पाव:** । पु। शिम्बीधान्यविशेषे, काटुशिम्याम्। म नदीचेवर्ये। क तीरे आवरे। गुणा.—तिक्तः कटु गुरु रक्तकर, वातकफद. रुच कषाय, विषदोषहरश्च। रा.नि.व.१६।

**नदीवहल:** । पुं। मेषश्टङ्ग्याम्। वै.निघ.।

**नदीभल्लातक:** । पु। भल्लातकविशेषे, पानीयभल्लातके। प मु.।

**नदीभव:** । पु। सुद्रशङ्खे। वै.निघ.।

**नदीमातृक:** । पु। देशभेदे। यो नद्यम्बुभिः पाल्यते। "नद्यम्बुभिरृतोधान्यै नदीमातृक उच्यते।" रा नि.व २।

**नदीमाषकम्** । क्ली। शाकभेदे। गुणा —"विषद गुरु शीतञ्च समभिष्यन्दि चाच्यते।" च. सू.२७म.। [व ८।

**नदीया** । स्त्री। अग्निमन्थे। गणित्रि। रा.नि.

**नदीवट:** । पुं। वटीवृचे, ह्रस्वपत्रवटवृचविशेषे। नदीवट। म दुजावरु,। क गालिबाल। गुणा —कषाय मधुर शीतल पित्तघ्न तृष्णादाह श्रमश्वासच्छर्दिहरश्च। रा.नि व ११।

**नदीसर्ज:** । पु। अर्जुनवृचे। रा.नि.व ८।

**नदेयी** । स्त्री। जलवेतसे। वै निघ.। भूमिजम्बाम्। श.च.।

**नद्यम्** । क्ली। कृष्णाञ्जने। वै.निघ.।

**नद्याम्र:** । पु। समष्ठीलवृचे। मं कीतुम्बा। रा.नि.व.४।१२१। गुणा —कटु.उष्ण रुच्य सुख शोधन। दाही दीपन कफवातघ्न। वै निघ.।

**नद्यावर्त्त:** । पु। मत्स्यभेदे। वै निघ.।

**नध्री** । स्त्री। चर्म्मरज्ज्वां, चर्म्मरज्जौ। श.च।

**नन्दक:** । पुं। नन्दीवृचे। कुन्दुरौ। मेके। त्रिका.।

**नन्दकि:** । स्त्री। पिप्पल्याम्। श.च.।

**नन्दगोपिता** । स्त्री। रास्नायाम्। श.च।

**नन्दन:** । पुं। मधुनिष्पावे। भूकुष्टशिम्। प.मु.। मेके। श र.। क्ली। सरलदेवदारौ। रक्ताञ्जने। वै.निघ.।

**नन्दनजम्** । क्ली। हरिचन्दने। रा.नि.व.१२।

**नन्दनविषम्** । क्ली। तन्नामकवृचस्य लवसार निर्यासविषे। सु कल्प,२अ.। See लक्सारनिर्यासविषम्।

**नन्दा** । स्त्री। सुरसायाम्। वाबूईतुलसी। प. मु। योनिरोगविशेषे। बालस्य तन्नामकमातृकाग्रहे। तया च प्रथमे दिने मासि वर्षे वा बाल आक्रान्तो भवति। तेन च ज्वरादिर्भवति। च.द।

**नन्दा(न्द्या)वर्त्त:** । पु। तगरपुष्पवृचे। तगर फुलेर गाछ। र मा.। मत्स्यविशेषे। गुणा —श्रन्द्यावर्त्तस्तु सग्राही कफपित्तविनाशन.। राज १प.।

**नन्दिक:** । पुं। नन्दिवृचे। श.र.।

**नन्दितरु: (रु)** । पु। धववृचे। भा।

**नन्दिनक:** । पु। धववृचे। वै.निघ.।

**नन्दिनी** । स्त्री। जटामांस्याम्। रेणुकायाम्। বেণুক। रा नि व ६। हरीतक्याम्। मद.व १। नन्दिवृचे। मियङ्गौ। गुच्छकरञ्जे। ग्रन्थपर्णे। वै.निघ। चन्द्रशूरे। তোকমারী। भा.।

**नन्दिपादप:** । पु। नन्दिवृचे। वै.निघ.।

**नन्दिवृष्य:** । पु। कलाये। वै.निघ.।

**नन्दिवृच:** । पु। नन्दिके। मेषश्टङ्ग्या। प.मु.।

**नन्दी (इन्)** । पुं, स्त्री (न्दी)। नन्दिवृचे। वटवृचे। प्लक्षवृचे। मे.। गुच्छकरञ्जे। रा.नि व ९। ग्रन्थपर्णे। रा.नि व.४।

**नन्दीकार्मुक:** । पुं। पानीयामलकी। वै.निघ।

**नन्दीमुख:** । पुं। वयधान्यविशेषे। दीर्घशीभूमि। वै.निघ.। मत्स्यजातीयपक्षिविशेषे। मीहिजातिभेदे। सु सू ४६म.। गुणा.—"निरूक्ष दीर्घगाधुम. कचित्रन्दीमुखस्तथा।"

**नन्दीमुखा (खी)।** स्त्री। शूकशल्यवे। निद्रायाम्। गोधूमे। वै निघ। जलचरपक्षिवि शेषे। च.सू २७अ। नि शूकगोधूमे। "शूकला त्वहत्वी पथ्या तद्वत् नन्दीमुखा स्मृता।" भा.।

**नन्दीवरलः।** पु। सागरमइकमत्स्ये। वै निघ।

**नन्दीवर्त्तः।** पुं। तगरे। वै निघ.।

**नन्दीवृक्षः।** पु। अश्वत्थसदृशवृक्षे अश्वत्थवि शेषे। गंग्रा अश्वथ। प.मु.। काद्दश्वदेशप्रसिद्धे सुगन्धद्रव्यविशेषे। तून गाछ। हि वेलियापिपर। तैं वद्धिचेट्टु। वा.सू ३५अ.अम्बष्ठादिव। "नन्दीव चपलामकचुरा।" सु.सू ३८अ न्यग्रोधादिव.। गुणा —"नन्दीवृची लघु स्वादु तिक्तस्तुवर उ ष्णक। कटुपाकरसो ग्राही विषपित्तकफास्रजि त्॥" भा। कटुस्तिक्त शीत पित्तास्रदाहघ्न शिरःपीडाघ्न कुष्ठघ्न सुगन्धि पुष्टिवीर्यकरश्च। रा नि व.१२। गान्धार्याम्, गर्दभाण्डे वा। सु सू ३८अ.अम्बष्ठादिव.। मैषश्टङ्ग्याम्। र मा।

**नपुंसकम्।** क्ली, पु। षण्डपुरुषे। क्लीवे। हि जड़े। तत्र शुक्रवाहुल्यात् पुमान्, आर्त्तववाहुल्यात् स्त्री। साम्याद्‌भयो नपुंसकमिति कारणम्। न पुंसके जाते गर्भचिह्न यथा—यस्या पार्श्वद्वयमु न्नतं पुरस्तान्निर्गतमुदर प्रागभिहितलक्षणश्च तस्या नपुंसकमिति विद्यात्। नपुंसकं चतुर्विधम्। यथा —आसेक्यश सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा। स रेतसस्त्वमी ज्ञेया अशुक्र षण्डसञ्ज्ञित। सु शा.२ अ। तेषां लक्षणादिक तत्तच्छब्दे द्रष्टव्यम्।

**नपुंसका।** स्त्री। व्यङ्गविशेषे। सु सू ४६अ.। अ ध्रुविकायाम्। वै निघ.।

**नभम्।** क्ली। कमले। रा नि व १०।

**नभः।** पु। श्रावणमासे। श.र.। अम.। (स) क्ली। आकाशे। पद्मे। अभ्रधातौ। वै निघ।

**नभःकान्ती (इन्)** । पुं। सिंहे। श मा।

**नभःसद्मः।** पुं। पक्षिवि। अम.।

**नभयमनः।** पु। चित्रापूपे। मे.।

**नभस्यः।** पु। भाद्रपदे मासि। अम।

**नभा.।** पु। श्रावणमासि। घासे। विसतन्तौ। मे। पक्षितमीये। धरवि.।

**नभोऽम्बुपः।** पुं। चातकपक्षिणि। ई.च।

**नभोरेणु।** पु। नीहारे। विका.।

**नभोलयः।** पु। धूमे। श.र.।

**नमस्कारी।** स्त्री। खदिरिकाशाके, वराह क्रान्तायाम्। वराक्रान्ता। प.मु। शुक्रखञ्जालु कायाम्। रा नि व ५। वा सू २५अ.अम्बष्ठादिव। "अम्बष्ठामधुक नमस्कारी।" नीलदूर्वायाम्। वै निघ.।

**नमेरुः।** पुं। सुरपुन्नागवृक्षे। शुवपुन्नाः। छ- लना। रा नि.व १०। सरलदेवदारौ। वै.निघ.। रुद्राक्षे। भूरिप.। [भा.।

**नम्रः (क)।** पु। वेतसवृक्षे। मद व ५।

**नयनम्।** क्ली। नेत्रे। रा.नि व.१८।

**नयनचन्द्रलौहः।** पु। नेत्ररोगे लौह। त्रिकटु त्रिफला शृङ्गी शटी रास्ना शुण्ठी द्राक्षा नीलोत्पलं काकोली यष्टिमधुक बला नागकेशर बृहती कण्टकारी एषां प्र २ प. कान्तलौह १ प अभ्रं १ प। आदौ त्रिफलाक्वाथेन मदन तिलतैलेन अथ भृङ्गराजरसेन भावयेत्। वटी वद्ध राज्यवत्। त्रिकटु, त्रिफला, काँकड़ाशृङ्गी, शटी, रास्ना, शुंठी, द्राक्षा, नीलोत्पल, काँकला, यष्टिमधु, वेलेडा, नागेश्वर, वृहती, कण्टिकारी प्रत्येके २ प काम्तलोह १ प अभ्र १ प। अग्रे त्रिफलाक्वाथ तत्परे तिलतैल एवं भीमराजरस भावना दिवे। वटी कुल आँटीन ग्राम। भैव.।

**नयनचिन्तकः।** त्रि। दृष्टिविज्ञानकुशले। भा भे रौं चि.।

**नयनप्रसादः।** पु। कतकवृक्षे। वै निघ.।

**नयनप्लवः।** पुं। नेत्ररोगपूर्णत्वे। मा नि।

**नयनबुद्बुदः।** पु। नेत्रबुद्बुदे। "विपाइगुण वाइन्यं स्याद्बुद्बुदसन्निभ। वाडव समत शाहे भिषड्नयनबुद्बुदम्॥" सु उ.१अ.।

**नयनशोणाञ्जनम्।** क्ली। नेत्ररोगे अञ्ज नम्। पिप्पलीतण्डुलं सैन्धवलवण मरिच रसाञ्ज न कृष्णाञ्जन समुद्रफेन शर्करा पुनर्नवा हरिद्रा र क्तचन्दन यष्टिमधु तुल्य हरीतकी मन शिला वि

ष्यपत्रं रौप्यं फटिकारी मृगनाभि: कर्पूरं एषां चूर्णं प्र. समं लौहपात्रे ताम्रखण्डेन मधुना मर्द्दयेत्। পিপুলদানা, সৈন্ধব, মরিচ, রসাঞ্জন, শুর্মা, সমুদ্রফেনা, চিনি, শ্বেতগুঞ্জা, হরিদ্রা, রক্তচন্দন, যষ্টিমধু, তুঁতে, হরীতকী, সনহাল, নিমপাতা, লোধ, ফট্‌কিরি, শঙ্খনাভি, কর্পূর—সমভাগ সূক্ষ্মচূর্ণ করিয়া লৌহপাত্রে তাম্র খণ্ড দ্বারা মধুর সহিত মর্দন করিবে। भा.।

**नयनापाङ्ग:** । पुं । नेत्रप्रान्ते । अम. ।

**नयनी** । स्त्री । कनीनिकायां । श.च. ।

**नयनोपान्त:** । पुं । अपाङ्गे । रा.नि.व.१८ ।

**नयनोर्द्ध्वगरोमराजि:** । स्त्री । भ्रुवि । भ्रू-क्र । रा नि.व.१८ ।

**नयनौषधम्** । क्ली । श्वेतधातुकाशीषे । हे.च ।

**नर:** । पुं । मनुष्ये । नीलवृक्षे । रा.नि.व.८ । क्ली । गन्धद्रव्ये । ब्रामकर्पूर । मे. ।

**नरङ्गम्** । क्ली । शिश्ने । पुं । वरण्डके । नारङ्गा । उज्ज्व. । [याम् । श.र. । त्रिका. ।

**नरनामिका (नी)** । स्त्री । स्नुगुमत्या स्त्रि-

**नरप्रिय:** । पुं । नीलीवृक्षे । रा.नि.व.८ । पारावते । वै.निघ । [याम् । हे च ।

**नरमालि(नि)नी** । स्त्री । स्नुगुमत्यां स्त्रि-

**नरमूत्रम्** । क्ली। मानुषमूत्रे । मानुषेर मुत् । गुणा:—आमघ्न कृमिविषघ्नं तिक्तोष्णं लवणं रूक्षं भूतघ्नं त्वग्दोषहरं वातहरञ्च । रा.नि.व.१५। "मानुषं चारकटुकं तिक्तोष्णं लघु चोच्यते। चक्षूरोगहरं बल्यं दीपनं कफनाशनम् ॥" "अमृताया घनं मूत्रं प्रसूताया द्रव लघु । न किं गुणविशेष. स्यात् समता पाकवीर्य्ययो: ॥" अत्रि ८अ. ।

**नरवल्लभ:** । पुं । कपोते । वै.निघ. ।

**नरवृक्ष:** । पुं । नीलीवृक्षे । रा नि व.८ ।

**नरषण्ड:** । पुं । गर्भविकारजन्यपुरुषभेदे । पुং নপুংসক । यथा—"मन्दाल्पबीजाल्पबलावहर्षौ । क्लीबे च हेतुर्विकृतस्वयस्य ।" च.शा.२अ. ।

**नरसादर:** । पुं । नरसारे । निषादल । भैष. महामृतद्रावके ।

**नरसार:** । पुं । निशादल इति ख्याते द्रव्ये । हिं नौसादर । तत्करणविधि:—"औष्ट्रं वा माहिषं गव्यं पुरीषं भस्मतां गतं । चारपाकविधानेन नृसारसिद्धिरुच्यते ॥" गुणा:—"पटुमृत्तिशीलानां खावण: शीघ्रद्रविम: । यकृद्दोषे ज्वरे प्लीह्नि शिर:शूलेऽर्बुदादिषु । स्तनरोगे रक्तपित्ते कासे भग्नामये तथा । योनिव्यापत्सु च श्रेयो नरसार: सुखावह: ॥" र.सा सं. । तच्छुद्धि:—"नरसारो भवेच्छुद्धश्चूर्णतोये विपाचित: । दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये ॥" अत्रि. । सा.कौ. ।

**नरसिंहरूपज्वर:** । पुं । विषमज्वरभेदे । "विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते । तेनार्द्धे शीतलं देहमर्द्धमुष्णं प्रजायते ॥" निदा. ।

**नरहरि:** । पुं । राजनिघण्टुकारे ।

**नराधिप:** । पुं। महारग्वधवृक्षे । सु.चि.३७अ. ।

**नरी** । स्त्री । मानुष्याम् । जटा. । त्वचायाम् । চামড়া । वै.निघ ।

**नरेन्द्र:** । पुं । आरग्वधे । काष्टागुरुवृक्षे । सु. चि १६अ. । विषवैद्ये । मे. । राजिके । त्रिका. ।

**नरेन्द्रद्रुम:** । पुं । आरग्वधवृक्षे । সোন্দাল গাছ । भैष कुष्ठ-चि. । "पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणाम् ।" च.द.कुष्ठ चि. ।

**नरेन्द्राह्व:** । पुं, क्ली । काष्ठागुरुणि । वै.निघ. ।

**नर्कुटकम्** । क्ली । नासिकायाम् । हे.च. ।

**नर्त्तक:** । पुं । मयूरे । करिणि । हे.च. । देवनले । श र. । [रा.नि.व.१२ ।

**नर्त्तका (की)** । स्त्री । नलिकानामगन्धद्रव्ये ।

**नर्त्तनप्रिय:** । पुं । मयूरे । वै निघ. ।

**नर्त्तोपहारक:** । पुं। धूलीकदम्बे । वै.निघ. ।

**नर्म्मट:** । पुं । खर्परे । शापत्र । हारा. ।

**नर्म्मठ:** । पुं । कुचाग्रे । श.र. । मैथुने । वै.निघ. ।

**नर्म्मदा** । स्त्री । भारतवर्षीयनदीविशेषे । सा विन्ध्यपादवाहिनी । तज्जलगुणा:—लघु शीतलं पथ्यं कफानिलमलौघकरं सर्व्वरोगघ्नं रुच्यं मधुरञ्च । रा.नि व.१४ । सृक्कायाम् । हे.च. ।

**नर्म्मरा** । स्त्री । सरलायाम् । निष्पलायाम् । भस्त्रायाम् । मे ।

**नलः ।** पुं । (Phragmites karka. Syn. Arundo karka) स्वनामख्याततृणे । दूर्वाकारादुरीरन्ध्रःशुषिरः स्वनामख्यातः । सु.सू. ३८अ ड । नल । मं देवनलु । कं देवनाल । तें किक्केशगड्डि । अयं द्विविधः क्षुद्रदीर्घभेदात् । तयोः प्रथमः शीतकषाय, मधुरः रुचिकरः रक्तपित्तघ्न दीपन, बलदश्च । देवनलः मधुरः तथ्यः ईषत्कषायः वीर्याधिक, रसकर्माणि प्रभक्तश्च । रा.नि.व.८ । वा.सू.१५अ वीरतरादि । "इचारवनीनलकुशद्वयगुण्डगुन्द्रा" ।" खगगणे । खागडा । सु.सू.३८अ.तृणपञ्चमूले । सालीशपत्रे । वै.निघ. वा.व्या.दशमूलादितैले । कदम्बवृक्षे । मातुलुङ्गवृक्षे । देवधान्ये । सुगन्धे । वै.निघ. । क्लो । पद्मे । रा.नि.व.१० ।

**नलकम् ।** क्लो । शाखास्थनि । है.च. । दृष्टास्थनि । पिठेव हाड । रा.नि.व.१८ । पद्माचे । पद्मवीज । वै.निघ. । [भा.म.३भ. ।

**नलकास्थि ।** क्लो । नाडीवत्सरन्ध्रास्थिपर्वसु ।

**नलकिनी ।** स्त्री । वातुदेशे । जान्वस्थनि । अङ्घायाम् । है.च ।

**नलकीलः ।** पुं । वातुदेशे । है.च. ।

**नलदम् ।** क्लो । उशीरवत्पीतक्षविलामज्जके । उशीरभेदे । भा.रैवतीय चि. । "पलङ्कषायं नलदे ।" प्रलापकज्व.चि. । "नलदतुरगगन्धा ।" पुष्परसे । उशीरे । मे. । वै.निघ.दाह.चि.रसादि गुल्याम् । वा.व्या.चि.दशमूलादितैले । जटामांसा । सु.सू.३८अ. । च.सू.४अ.चन्दनादिः । वै. निघ.र पि चि चन्दनादिचूर्णे । च.द.यक्ष.चि खदङ्गादिचूर्णे । वा.व्या.एलादितैले ।

**नलदम्बुः ।** पुं । निम्बवृक्षे । भूरिप्र. ।

**नलदा ।** स्त्री । जटामांस्याम् । रा.नि.व.१२ । उशीरे । पद्मामे । वै.निघ. ।

**नलदाम्बु ।** क्लो । उशीरजले । वै.निघ. ।

**नलपट्टिका ।** स्त्री । नलनिर्मितपट्टिकायाम् । नलेर पाटी, চেটা, মাদুর । द्वारा. ।

**नलमीनः ।** पुं । चिलिचिममत्स्ये । अम. । गुणः—कफकरत्वम् । चवि २२अ. ।

**नलमूलम् ।** क्लो । वीरणमूले । বেণার মূল । सु.सू.३८अ. ।

**नलिकः ।** पुं । नले । वै.निघ. ।

**नलिका ।** स्त्री । इन्दीवरालतायाम् । रा.नि. व.३ । सि.यो.यक्ष.चि.चन्दनादितैले । नाडीशाके । वै.निघ. । स्वनामख्यातसुगन्धवल्कले । सा च उत्तरापथे तन्नाम्ना प्रसिद्धा सुगन्धा प्रवालाकृति प्रवाली इति क्वचित् प्रसिद्धा, पवारी इति च क्वचित् ख्याता । नालुको । मं नलिकाजाई । क वैतलविकि । तें पक्किसुक, सुगन्धिद्रव्यमु । लक्षणम्—"मध्ये सारविहीना या सरसा कीटवर्जिता । नलिका सा भवेच्छ्रेष्ठा···॥" भैष. । गुणाः —तिक्ता कटुका तीक्ष्णा मधुरा हिमा क्रमिघ्नी वातोदरघ्नी चर्म.शूलघ्नी मलशोधनी च । रा नि. व ११ । "नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत् । कृच्छ्राश्मवातदृष्टास्रकुष्ठकण्डूज्वरापहा ।" भा. । तन्नामके उदररोगशमनार्थयन्त्रविशेषे । लक्षणं यथा—"द्विद्वारा नलिका पिच्छनलिका वा दकोदरे ।" अभि. ।

**नलितः ।** पुं । तिक्तपट्टशाके । তেতো পাট वा नालिता पाता । तत्पत्रं तिक्तं पित्तघ्नं मल लघु । राज. ।

**नलिनः ।** पुं । सारसपक्षिणि । अम. । पानीयामलके । श.च. । क्लो । कमले । रा.नि.व १० । श्वेतसौगन्धिके । শ্বেত শুন্দি । च.सू.४अ. । नीत्याम् । जले । है.च. । पद्मकिञ्जल्के । च.सू २४ ।

**नलिनकेशरम् ।** क्लो । पद्मकेशरे । सु.सू.३८ अ चन्दनादि. ।

**नलिनी ।** स्त्री । पद्मिन्याम् । পদ্মের ঝাড় । रा नि व.१० । नलिकायाम् । नालुको । वै. निघ १भ.चर्म -चि.विडङ्गादिचूर्णलेहे । नारिकेलासवे । तिका. । [टी । रा.नि.व.१० ।

**नलिनीरुहम् ।** क्लो । मृणाले । পদ্মের ডাঁটী

**नली ।** स्त्री । नलिकानामके गन्धद्रव्ये । रा.नि. व.११ । मन.शिलायां । विश्व. ।

**नलुका ।** स्त्री । नलिकायाम् । नालुको । जातीवृक्षे । वै.निघ ।

**नलोत्तमः ।** पु । देवनले । रा.नि.व.८ ।

**नल्वकी** (इन्) । पुं । नर्त्तौ । नल । भैष.यो. व्या.चि । [१ख. । वा.उ.२६अ. ।

**नल्वणः** । पुं । द्रोणपरिमाणे । १६ शे । प प्र.

**नल्ववर्त्मगा** । स्त्री । काकनासायाम् । श च. ।

**नवः** । त्रि । नूतने । पुं । रक्तपुनर्नवायाम् । रा. नि.व.५ ।

**नवकार्षिकगुग्गुलुः** । पुं । भगन्दरे हितः । "त्रिफलापुरकृष्णाभिस्त्रिपञ्चैकांशयोजिता । गुडिका शोथगुल्मार्शोभगन्दरवतां हिता ।" रस र.। भा.।

**नवज्वरहरी(वटी)** । स्त्री । नवज्वरे रसः । पारद-गन्धक विष त्रिकटु त्रिफला शुद्धदन्तीवीजानि प्र. समानि । द्रोणपुष्पीरसे मर्द्दनं गजपुटे पाकश्च । পারা, গন্ধক, বিষ, শুঁট, পিপুল, মরিচ, হরিতকী, বহেড়া, আমলা, শুদ্ধ দন্তীবীজ প্রত্যেকে সমাংশ, হলকষার রসে মর্দ্দন ও গজপুটে পাক করিবে। মাত্রা মাষবৎ। भा. ।

**नवज्वरेभसिंहः** । पुं । नवज्वरे रसः । "शुद्धसूतं तथा गन्धं लौहं ताम्रञ्च सीसकम् । मरिचं पिप्पली विश्वं समभागं विचूर्णयेत् । अर्द्धभागं विषं दद्यात् मर्द्दयेद्वासरद्वयम् ।" পারা, গন্ধক, লৌহ, তামা, সীস, মরিচ, পিপুল, শুঁট প্রত্যেকে ১ তো. বিষ ।৹ তো. জল দিয়া ২ দিন মাড়িবে । र.सा.स. ।

**नवदलम्** । क्ली । कोमलपत्रे । हड्डचन्द्रः । पद्मकेशरसमीपस्थदले । अम. ।

**नवधान्यम्** । क्ली। नवधान्ये । নূতন ধান্য । गुणाः—तत्र मालिन्यात् शीतत्वं सुतिक्तपत्रिभार्यं करोति गुरु च । वा.सू.६अ. । चरकः । "यथास्तु यवगोधूमतिलमाषा नवा हिताः ।" रा नि.व.१६।

**नवनी(तम्)** । स्त्री,क्ली। दुग्धजसारे। টাট্কা ননি, মাখন । तत्रागादुग्धजत्वात् दशविधं । गव्यं माहिषमाजमाविकं गर्द्दभजमौष्ट्रम् ऐडकं हास्तिकं मानुष्यमश्वीजं चेति। विशेषाः स्वस्वपर्य्याये द्रष्टव्याः । सा. गुणाः—शीतं वर्णदं बलदं मधुरं हृद्यं संग्राहकं वातघ्नं कफघ्नं रुच्यं सन्तापशूलघ्नं कासघ्नं श्रमघ्नं मुखजनकं कान्तिप्रदं पुष्टिकरं च। सुश्रुत । गव्यं नवनीतं—सर्व्वदोषघ्नम् । सद्योद्धृतं—शीतलं रुच्यं मधुरं हृद्यं वातघ्नं कासघ्नं कृमिहरं कफजनकं सग्राहि शूलघ्नं । दधिजं नवनीतं—बलपुष्टिकरं तृष्णासन्तापहरं चक्षुष्यं श्रमघ्नं तर्पणं पित्तघ्नञ्च । तथा—"एकाहात्युषितं शीतसुरभीतरगन्धदम् । अहृद्यं सर्व्वरोगाढ्यं दधिजं तद् घृतं समभिति ॥" रा नि.व.१५ । (नीतम्) कुन्दुरुखोटी । भैष.ग्रह चि.वृहज्जीरकाद्यमोदके ।

**नवनीतकम्** । क्ली, पु । गन्धके । আমলাসার গন্ধক । र.सा सं ।

**नवनीतजम्** । क्ली । घृते । रा.नि व ११ ।

**नवनीताह्वयगन्धः** । पुं । আমলাসার, বা লাউয়া গন্ধক इति लोके ख्याते गन्धके । र.सा. स.नेत्राशनिरसे । [निघ ।

**नवनीतोद्भवम्** । क्ली । दधनि । घृते । वै.

**नवपल्लवः** । पुं । कोमलपल्लवे । भूरिप्र. ।

**नवफलिका** । स्त्री । अचिरजातरजस्कायां स्त्रियि । मे. ।

**नवमल्लिका (ल्ली) (मालिका)** । स्त्री । (J. Zambac floribus multiplicatis.) स्वनामख्याते पुष्पवृक्षविशेषे । सा ग्रीष्मोद्भवा । वासन्ती नेपाली सेउती नेवारी इति लोके । বাসন্তী গাছ । मं रौमाली । कं विरवन्तिभेद । वम्. मोगरा । गुणाः—अतिशीता सुरभिः सर्व्वरोगघ्नी च । रा.नि.व.१० ।

**नवयौवना** । स्त्री । युवत्याम् । हारा. ।

**नवरत्नम्** । क्ली । वज्र-मौक्तिक-माणिक्य नील-मरकत-गोमेद-पद्मराग वैदुर्य्य प्रवालेषु नवमणिषु । प.सु. । तद्दैवतानि सूर्य्यादयः । तद्धारणविधिः—"वैदूर्य्यं धारयेत् सूर्य्ये नीलञ्च मृगलाञ्छने । भार्गवेऽपि माणिक्यं पद्मरागं शशाङ्कजे । गुरौ मुक्ता भृगौ वज्रं शनौ नीलं विद्रुमं बुधाः ॥" दीपिका । तच्छुद्धिः—"विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धतक्रया । पुष्परागञ्च सन्धानैः कुलत्थक्वाथसंयुतैः । तण्डुलीयजलैर्व्वज्रं नीलं नीलीरसेन वा । रोचनाभिश्च गोमेदं वैदूर्य्यं त्रिफलाजलैः ॥" मारणं यथा—"लकुचक्षारसम्पिष्टैः शिलागन्धकतालकैः । वज्रं विनान्यरत्नानि म्रियन्तेऽष्टपुटैः खलु ॥" र. चि.७प. । [तद्दैवते । See नवरत्नम् ।

**नवरत्नदेवता** । त्रि । वज्रादिरत्नानामधिष्ठा-

**नववल्लभम्** । क्ली । दारागुरुणि । रा.नि व. १२ ।

**नवविधानम्** । क्ली । सूपशाकाद्यन्नमिष्टौ दनोपदर्शितदिशसन्धानरोचनेषु । वै.निघ. ।

**नवशस्यम्** । क्ली । नवीनधान्ये । वै निघ. ।

**नवसागरम्** । क्ली । वज्रक्षारे । वै निघ २भ षय चि.चयकेसरिरसे । [च. ।

**नवसूतिका** । स्त्रि । नवप्रसूतायां । वा उ ३२

**नवाङ्गम्** । क्ली । वातपित्तज्वरे विश्वादिनवद्रव्य जकषाये । "विश्वामृताब्दभूनिम्बै पञ्चमूलीसमन्वि तै । कृत कषायो हन्त्याशु वातपित्तोद्भव ज्वरम् ॥" शुँठ, गुलञ्च, मुता, चिरात, शालपानि, चाकुलिया, वृहती, कण्टिकारी, गोक्षुर । सा.कौ. । अन्यत्—त्रिकटुत्रिफलाचित्रकमुस्तवि डङ्गकृतकषाये । च द हन्.स्व.चि ।

**नवान्नम्** । क्ली । नूतनान्ने । See नवन्नम् ।

**नवाम्बरम्** । क्ली । नूतनवस्त्रे । अम. ।

**नवायसचूर्णम् (लौहम्)** । क्ली । पाण्डु रोगे । चूर्णत्रिफलामुस्तविडङ्गचित्रका समा । नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा । भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शं कामलापहम् । शुँठ, पिपुल, मरिच, त्रिफला, मुता, विडङ्ग, चिता प्र त्येके १ तो. जारितलौह ९ तो. मात्रा १ मा. । सा.कौ. ।

**नवोद्धृतम्** । क्ली । सद्योजातनवनीते । अम ।

**नव्यः** । पुं । रक्तपुनर्नवायाम् । रा नि व.५ ।

**नश्याकः** । पु । काकसदृशपक्षिविशेषे । वै निघ । काकभेदे । उज्ज्व. । [च ।

**नष्टप्रसूतिका** । स्त्री । मृतवत्सायाम् । है.

**नष्टचेष्टता** । स्त्री । मूर्च्छायाम् । [त्रिका. ।

**नस् (सा)** । स्त्री । नासिकायाम् । नासाम् ।

**नसखलर्कः** । पु । मत्स्यजातिभ्वरे । गजवै ।

**नस्तः** । पु । नासिकायाम् । भा.म.४भ त्रि.रो चि । "सर्पिर्भ्यां नस्ततश्चो ।' क्ली । नस्ये । र. मा. ।

**नस्तःकर्म** । क्ली । प्रतिमर्षावपीडनस्तःप्रधमन शिरोविरेचनेषु पञ्चसु । 'नावनञ्चावपीडश्च ध्मानं धूम एव च । प्रतिमर्षश्च विज्ञेय नस्तकर्म च प ञ्चधा ॥" च.सिद्धिस्था. । [निघ । च.सू.१५. ।

**नस्तप्रच्छर्दनम्** । क्ली । पञ्चशिरोविरेच

**नस्तो(स्यो)तः** । पु । सनासारज्जुवृषे । ना| कफोंडा बलद । च टी.र. ।

**नस्यम्** । क्ली । नासायाह्यौषधे । ना॰, नश्य । नासयोर्नस्य आक्रमते यत् । "नस तत्कथ्यते धीरै नासायाह्य यदौषधम् ॥" नस्यं रेचनबृंहण भेदेन द्विविधम् । तयो रेचन कर्षण, बृंहण बृंह णश्च । तस्य काल —'कफपित्तानिलध्वंसे पूर्वं मध्येऽपराह्णिके । दिनस्य गृह्यते नस्य रात्रौ वा- नुत्कटे गदे ॥' तच्च नस्य प्रतिमर्षावपीडनस्यप्रध मनशिरोविरेचनभेदेन पञ्चधा । ऊर्ध्वजत्र्वादिरोगे मरीचकादौ च वैरेचनिक नस्य हितम् । भीरु स्त्रीकृशबालाना बृंहणनस्यं देयम् । वातरोगादौ चावपीडनम् अत्युत्कटदोषादौ प्रधमनम् । स्नैहिक नस्यमानम् अष्टबिन्दव । निषेधकाल —"नस्य मजिह्रौअन्नाम्ले दुर्दिने चावसर्पित । तथा नवप्रति- श्यायी गर्भिणी गरदूषित । अजीर्णी दत्तबस्तिश्च पीतस्नेहोदकासव । क्रुद्ध शोकाभिभूतश्च तृषार्तो वृद्धबालकौ । वेगावधारी स्नातश्च स्नातुकामश्च व र्ज्ययेत् ॥" अष्टवर्षात् पूर्वं अशीतेरूर्ध्वं च न दे यम् । भा. । [सुर्वे । वै निघ. ।

**नक्तम्** । क्ली । तगरपुष्पे । रा नि.व.१०। पुं ।

**नक्ताख्यम्** । क्ली । तगरपुष्पे । रा.नि व.१०।

**नक्षत्रम्** । क्ली । अश्विन्यादिसप्तविंशतितारका सु । सु सू ३५ । मौक्तिके । रा नि व १३ ।

**नक्षत्रकान्तिविस्तार.** । पुं । धवलयावना- लाख्यशिम्बीधान्यभेदे । रा नि व १६ । [निघ. ।

**नक्षत्रमालिनी** । स्त्री । जातीपुष्पवृक्षे । वै.

**नक्षत्रेशः** । पु । कर्पूरे । अम. । धन्वी । त्रिका. खण्डे । है च. ।

**नाकनः** । पु । वनधान्यविशेषे । प सु. ।

**नाकुः** । पु । वल्मीकवर्त्मिकायाम् । उईमाटी । भैष.वा.वा.चि.स्वेदे ।

**नाकुली** । स्त्री । (Vanda roxburghii.) A variety of rásná. सनामख्यातमहाकन्दे

शाकविशेषे, राखाइये। वाशिं,शक्रधासं। प सु। नाकुली नाथि विषमुगरीत च लोके। हि चन्द्रा। तें सर्पचिवेदृ पद्मचेदृ। नाकुली द्विधा — नाकुली गन्धनाकुली च। गुणा — नाकुलीयुगल तिक्त कटूष्ण त्रिदोषघ्न नानाविषघ्न च। द्वितीया तु किञ्चिच्छ्रेष्ठा। रा नि व.७। यवतिक्तालतायाम्। श्वेतकण्टकार्याम्। रा नि व ४। चव्ये। प सु। मरिचे। शाल्मलिवृक्षे। मे.।

**नाकुलीद्वयम्** । क्ली। गन्धरास्ना या रास्नाया च। सि यौ उक्ष्मा चि महापैशाचघृते। "वयस्था नाकुलीद्वयम्।"

**नाग** । पु क्ली (ग)। सीसधातौ। वत्सनाभे। काटविषे। नागकेशरवृक्षे। प सु। वङ्गे। कर्ई धातौ। नागवल्लायाम्। मेदायाम्। करिदन्ते। मुस्तके। सुरपुन्नागवृक्षे। रक्ताभके। मे। हस्तिनि। नागवल्लीलतायाम्। च टी भ। सि यौ समशर्कर चूर्णे। भैष च पि चि पिप्पलीखण्डे। सर्पे। त्रिका। बीजद्रुमे। अमन वृक्ष। रा नि व २३।

**नागकन्द** । पुं हस्तिकन्दाख्यमहाकन्दशाके। रा नि व ७

**नागकर्ण** । पुं। रक्तैरण्डे। रा नि व.८।

**नागकर्णी** । स्त्री। आखुकर्णीलतायाम्। रा. नि व ३। श्वेतापराजितायाम्। श चि।

**नागकिञ्जल्कम्** । क्ली। नागकेशरपुष्पे। रा. नि व.८।

**नागकुमारिका (री)** । स्त्री। गुडूच्याम्। रा नि.व ३। मञ्जिष्ठायाम्। रा नि व ६।

**नागकुसुमम्** । क्ली। नागकेशरपुष्पे। वै.निघ १४ ज्व चि चन्दनवलातैले।

**नागकृष्णा** । स्त्री। गजपिप्पल्याम्। वै निघ।

**नागकेश(स)र (क)** । पु। (Mesua ferrea) स्वनामख्यातपुष्पवृक्षे। नागेश्वर चाँपा फूलेर गाछ। हि कावावचिनी। तें नागकेसरालु। ता नागल। बम् नागचम्प। गुणा — दीपन पाचन आमपाचन अग्निमान्द्यकरश्च। तत्कुसुमं वस्तिवातघ्नं कण्ठशिरोरुजाघ्नश्च। रा. नि व ६। "नागपुष्पकषायोष्णं रूक्षं लघ्वामपाचनम्। ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनम्। दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम्॥" भा.। "कीटादिकेन रहितमभिनवमिह केवलं ग्राह्यम्।" भैष। [नागदमन्या। नागदनी। वै निघ।

**नागगन्धा** । स्त्री। नाकुलीकन्दे। रा नि व ७।

**नागगर्भम्** । क्ली। सिन्दूरे रा नि व १३।

**नागचम्पक.** । पु। वनचम्पकवृक्षे। नागेश्वर चाँपा, बुनो चाँपार गाछ। रा नि व १०।

**नागच्छत्र (त्रा)** । पु, स्त्री। नागदन्त्याम्। रा नि व ५। (त्रा) नागवल्लाम्। वै निघ।

**नागजम्** । क्ली। सिन्दूरे। प सु। वङ्गे। हे च।

**नागजिह्वा** । स्त्री। अनन्तायां। अनन्तमूल। भैष वा व्या चि। र.सा। मन शिलायाम्। रा नि व १३।

**नागजिह्विका** । स्त्री। मन शिलाया। प सु.।

**नागजीवनम्** । क्ली। वङ्गे। हे च.।

**नागजीवनशत्रु:** । पु। हरिताले। वै निघ।

**नागतुम्बी** । स्त्री। तुम्ब्याम्। वै निघ।

**नागदन्त (क)** । पुं। हस्तिदन्ते। मे.।

**नागदन्तिका (न्ती)** । स्त्री। महाराष्ट्रकख्यातायां स्वनामख्यातमहाक्षुपे। हातिशुँड़े। गुणा — कटु तिक्ता रूक्षा वातकफघ्नी विषघ्नी मेधाकरी पाचनी गुल्मशूलोदरघ्नी च। रा नि व. ५। स्थूलमूलदन्त्याम्। च द। भैष ना श्र चि। सु चि १७अ। च वि ८अ.। (न्ता) वृश्चिकाल्याम्। विशाति। र सा.।

**नागदमनी** । स्त्री। (Artemisia vulgaris, Syn. A. Indica) Indian worm wood. स्वनामख्यातक्षुपे। नागदनी। हिं नागदुनी, नागदवन। तें श्वरिचेदृ दवणम। ता माचिपत्री। बम् दवणा। नेपाली तितापात। गुणा — "बलामोटा कटुस्तिक्ता लघु पित्तकफापहा। मूत्रकृच्छ्रव्रणान् रक्षो नाशयेज्जालगर्दभम्। सर्वग्रहप्रशमनी विशेषविषनाशिनी। जय सञ्चन्न कुरुते धनदा सुमतिप्रदा॥" भा। त्रिदोषघ्नी तीक्ष्णोष्णा कटु तिक्ता च उदराध्मानघ्नी च। रा नि व ५। वन्ध्याकर्कोटिकायाम्। वै निघ। [भैष तमराजतैले। पर्वे। पाप।

**नागदलम्** । क्ली। नागदमन्याम्। नागदनी।

**नागदलीपमः** । पु । पञ्चमकबृक्षे । পবস ফল বা ফণসা গাছ । प सु. । [भैरवरसे ।

**नागदा** । स्त्री । हरीतक्यां । र सा सं सकन्द

**नागद्रु** । पु । वृक्षविशेषे । তেকাঁটা সিজু গাছ । बम् गेरचिकाडा । श.च ।

**नागनामकम्** । क्ली । सीसके । भा ।

**नागनामा** (न) । पु । श्वेततुलसीवृक्षे । कृष्ण तुलसीवृक्षे । वै निघ । [रा नि व ७ ।

**नागपल्ली** । स्त्री । लक्षणाकन्दे । লক্ষণামূল ।

**नागपत्रम्** । क्ली । ताम्बूलदले । পাণ । वै निघ श्वास चि त्रिकटुवटी ।

**नागपत्रा** । स्त्री । नागदमन्याम् । भा ।

**नागपत्री** । स्त्री । नागदमन्याम् । वै निघ ।

**नागपर्णी** । स्त्री । नागवल्लीलतायाम् । वै निघ ।

**नागपर्य्यायकर्णी** । स्त्री । श्वेतापराजिता याम् । रा नि व ३ । [नायाम् । वै निघ ।

**नागपुटभावना** । स्त्री । षोडशपलन भाव

**नागपुरगम्** । क्ली । सीसधातौ । रा नि व १३ ।

**नागपुरीपच्छन्नम्** । क्ली । गजपुरीपजाति छत्राके । वा उ ३७अ ।

**नागपुष्प** । पु । पुन्नागवृक्षे । मे । नागकेशर वृक्षे । प सु । नागकेसरपुष्पसमपुष्पं सहामसी । सु सू ३८अ एलादि । क्ली । नागकेसरपुष्पे । च द र पि चि कामदेवघृते । सु कल्प ५अ । भा प्र रक्तरोगे । च चि २अ । नागचम्पके । मे ।

**नागपुष्पक.** । पु । कपित्थवृक्षे । स्वर्णयूथिका याम् । कुष्माण्ड । रा नि व २३ । पुन्नागवृक्ष । नाग केसरवृक्षे । वै निघ । [रा नि व.७ ।

**नागपुष्पफला** । स्त्री । कुष्माण्डीलतायाम् ।

**नागपुष्पा** । स्त्री । नागदमन्याम् । मन शिला याम् । वै निघ । [नि व १० ।

**नागपुष्पिका** । स्त्री । स्वर्णयूथिकायां । रा

**नागपुष्पी** । स्त्री । नागदमन्याम् । भा । स्व र्णयूथिकायाम् । रा नि व १० । पुष्पवृक्षविशेष । गुणा —"नागिनी रचनी तिक्ता तीक्ष्णोष्णा कफ पित्तनुत् । विनिहन्ति विष शूलं योनिदोषवमि क्रिमीन् ॥" भा श्वर्श चि ।

**नागफणः** । पु । (Opuntia Dillenii. Syn. Cactus Indicus) वृक्षविशेषे । ফণিমনসা । ते ता नागदलि ।

**नागफलः** । पु । पटोली । रा नि व ३ । कटु पटोलि । वै निघ । [श सा चि कुङ्कुमवटी ।

**नागफेनम्** । क्ली । अहिफेने । वै निघ २भ

**नागवधूप्रिय** । पुं । सल्लकीनिर्यासे । धूना । वै निघ । [त्थवृक्षे । श च ।

**नागबन्धु** । पु । उदुम्बरवृक्षे । श चि । अश्व

**नागबला** । स्त्री । (Sida spinosa. Syn. Sida alba) गोरक्षतण्डुलायाम् । গোরক্ষ চাকুলিয়া । हि गुलशकरी ककही । च द यक्ष्म चि महाश्वचूर्णे । च चि १अ नागररसायने । सा कौ महाकामेश्वरमोदके । नागानामिव बल यस्या सा । सि यो यक्ष्म चि बलाद्यघृते । भा मू कृ चि नागबलातैले । योगरत्न उ ख । गुणा — मधुराम्ला कषाया उष्णा गुरु कण्डूकुष्ठवातव्रणपि त्तघ्नी च । स्निग्धा आयुष्या पाहिणी हृद्या मूत्रकृ च्छ्रक्षीणक्षयरोगेषु हिता च । भा । मधुराम्ला कषाया उष्णा गुरु कण्डूकुष्ठवातव्रणपित्तघ्नी वा जीकरणी च । रा नि व ४ ।

**नागबलातैलम्** । क्ली । वातरक्ते तैलम् । तिलतैलं १६ श । क्वाथार्थं—गोरक्षतण्डुलामूल १२॥० श वारि ६४ श मे १६ श छागदुग्धं १६ श । कल्कार्थं—तगर यष्टिमधु प्र. ५ प वा २.श । तुलादूर्ध्वं जलद्रोण्या इति । प प्र । তিলতৈল ১৬ শ । ক্বাথার্থ—গোরক্ষচাকুলিয়া ১২॥০ শ জল ৬৪ শ শে ১৬ শ ছাগদুগ্ধ ১৬ শ. । কল্কার্থ—তগরপাদুকা, যষ্টি মধু প্রত্যেকে ৫ প বা ২ শ. । च द ।

**नागभू** । स्त्री । क्षुद्रपाषाणभेदायाम् । ছোট পাথরকুচা । रा नि व ५ ।

**नागभृत्** । पु । कुण्डुभसर्पे । त्रिका ।

**नागमती** । स्त्री । कृष्णतुलस्याम् । वै निघ. ।

**नागमाता** । स्त्री । सारिवायाम् । वै निघ । मन शिलायाम् । हे.च. । मनसादेव्याम् । श.र. ।

**नागमार:** । पुं । भङ्गराजे केशराजे । (केशुटे) चिका । चि । हस्तिमारके ।

**नागरम्** । क्ली । मुस्तायां । मे । च.सू.२अ. । शुण्ठ्याम् । रा नि.व.६ । भा. । वा सू १५अ.वचादिव. । "नागरातिविषाभया ।" वा चि १अ दुरालभादि" । शुण्ठ्यां । हरीतक्या । च द.सन्निपातज्व.चि.षडङ्गपानीये । च.सू ४अ । सु । नागरङ्गवृक्षे । अ र. ।

**नागरक:** । पुं । नागरङ्गवृक्षे । वै निघ. ।

**नागरक्तम्** । क्ली । सिन्दूरे । हे.च. ।

**नागरघन:** । पुं । नागरमुस्तायाम् । नागरमुता । रा नि.व ६ ।

**नागरङ्ग:** । पुं । (Citrus aurantium.) Orange. जम्बीरविशेषे । कमला लेबू । हि नारङ्गी, सन्ता । मं नारङ्ग । तें गंजनिम्ब, नारजिचेट्टु । ता. किचिलिचेट्टु । उत्. नारङ्गी । गुणा.—तत्फलम् अम्लम् अत्युष्णं वातपित्तहरं सरञ्च । पक्व स्वाद्वम्ल हृद्यं दुर्जरं वातघ्नञ्च । मद व.६। मधुरमम्ल गुरु उष्ण रोचनम् आमवातकृमिशूलघ्नं श्रमघ्न बलकर रुच्यञ्च । रा नि व.११ । सुरभि पाके गुरु दुर्जरम् अत्यम्ल मधुरकल्लं हृद्य वातघ्नञ्च । तत्केशर रुच्य वातहरञ्च । राज. । वातघ्नं दुर्जरं गुरु च । सु.सू.४६अ ।

**नागरमुस्तकम् (स्ता)** । क्ली,स्त्री । (Cyperus pertenuis. Syn. Mariscus cyperus.) नागरदेशप्रसिद्धमुस्तायाम् । नागरमुता । हि नागरमोथा । तें तुङ्गगड्डलुभिम् । ता: सुद्दक्काच । दा. गरमोटा । गुणा.—तिक्ता कटु कषाया शीतला कफघ्नी पित्तज्वरातिसारारुचि तृष्णादाहघ्नी श्रमघ्नी च । रा.नि व.६ ।

**नागरा** । स्त्री । पानीयामलके । वै.निघ. ।

**नागरादि:** । पुं । कषायभेदे । "नागरातिविषामुस्तभूनिम्बामृतवत्सकै. । सर्वज्वरहर: क्वाथ: सर्वातीसारनाशन. ।" च.द.अ.सा चि. । अथ —"नागर देवकाष्ठञ्च धन्याकं बृहतीद्वयम् ।" च.द.सामाज्वर चि. । शुण्ठ्यादीनां प्रत्येक रत्ति द्वयाधिकमाषकत्रय चतुष्पलजलेन पक्त्वा पलमवशिष्टेत् । शा.खं. । अपर.—"नागरं सुरतरुच धान्यक कुण्डली तृहतिकायुग निशि ।" अचि.ज्व. चि. । नागरमुस्तायाम् । वै.निघ. ।

**नागराह्वम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ ।

**नागरी** । स्त्री । सुहीवृक्षे । मनसा गाछ । श.च. । [निघ. ।

**नागरीकन्या** । स्त्री । वन्ध्याकर्कोटक्याम् । वै.

**नागरुक:** । पुं । नागरङ्गवृक्षे । कमला लेबुर गाछ । अ.र. ।

**नागरूपप्रभम्** । क्ली । हरितालै । वै.निघ. ।

**नागरेणु: (क:)** । पु । सिन्दूरे । रा.नि.व. १३ । (क:) नागकेसरवृक्षे । वै निघ. ।

**नागरोथा** । स्त्री । नागरमुस्तायाम् । "नागरोथा कच्छरुहा ।" रा नि व.६ ।

**नागलता** । स्त्री । शिश्ने । चिका ।

**नागवल्लरी** । स्त्री । नागवल्ल्याम् । भा. ।

**नागवल्लिका (ल्ली)** । स्त्री । पत्रशाकविशेषे । नालिता गाछ । ताम्बूलीलतायाम् । पाण गाछ । गुणा —कटुतीक्ष्णा तिक्ता पीनसवातघ्नी कफकासहरा रुच्या दाहकृद्दीपनी च । सा स्थान विशेषजातत्वात् बहुधा भिन्नगुणा । तत्र श्रीवाट्य म्लवाटीमालसीसदाशिराम्लसरादय प्रसिद्धा । तत्र अम्लसरा मालवे अगरापर्ण इति ख्याता, आन्ध्रे पीट्टकुलिपर्ण हैसनीया च, घोरसमुद्रदेशे घोरस मुद्रदेशपर्ण इति प्रसिद्धा । श्रीवाटीगुणा.—मधुरा तीक्ष्णा रसाढ्या सरसा रुच्या च । अम्लवाटी—कटुकाम्लतीक्ष्णतिक्ता उष्णा विष्टम्भकारी वातघ्नी च । मालसी—मधुरा तीक्ष्णा कटुरुच्या पाचनी हृद्या दीपनी च । सदाशिरा—अतिरसा सुगन्धि रुच्या तीक्ष्णा मधुरा दीपनी पुस्तकरी अतिवल्या विदै धनी सुखसौगन्ध्यकारी च । अम्लसरा—तीक्ष्णा मधुरा रुच्या हिमा दीपनी बल्या सुखामोदिनी गुल्माध्मानादिजित् । पटुलिका—कषाया उष्णा कटु: मलकर्षिणी पित्तकृत् वातघ्नी च । हैसनीया —कटुतीक्ष्णा उष्णा दीर्घपत्रा रुच्या दीपनी पाचनी च । ताम्बूलं सप्तस्रोतिरं सुखरोगादिजनन दाहारोचकरक्तदं मलकरं विष्टम्भि वान्तिजननम् । विरचीटिति ताम्बूलदलं ज्वलपीयितं गुणकरं रुच्य बल्यञ्च । तच्च पर्णं तिक्तमुष्णं कषायं दाहजनक

**नागिनी** । स्त्री । नागदन्तीक्षुपे । रा.नि.व.६। लघणाकन्दे । रा.नि.व.७ ।

**नागी** । स्त्री । बन्ध्याकर्कोटक्याम् । वै निघ,२भ. जीर्णज्व वि.कल्याणघृते ।

**नागीयः** । पु । नागकेशरे । रा नि,व ६ ।

**नागेश्वररसः** । पु । गुल्मे रसः । पारदः गन्धकः सीस, रङ्गं मन.शिला रसारदः यवक्षारः सर्ज्जिक्षारः टङ्कणं लौहं ताम्रम् अभ्र म. समम् । वचीचीरेण मर्द्दन । पश्चात् वासाचित्रकदन्तीमूलक्वाथेन दिवसं मर्द्दयेत् । मात्रा माषप्रमाणा । पारा, गन्धक, सीस, वङ्ग, मनछाल, निशादल, यवक्षार, साचिक्षार, সোহাগা, লৌহ, তাম্র, অভ্র সমভাগ। সিজুর আঠায় মর্দ্দন। পরে বাসক, চিতা ও দন্তীর মূল সমভাগ লইয়া একত্র ক্বাথ করিয়া ১ দিন মর্দ্দন করিবে। মাত্রা ১ মাষ কলায়। भैष. ।

**नागोद(र)म्** । क्ली । गर्भजरोगविशेषे । "शुक्रशोणितं वायुनाभिप्रपन्नम् अवक्रान्तजीवमाध्मापयत्युदरम्, तत्कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते । तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः ।" सु.शा.१०अ. ।

**नाटाम्रः** । पुं । कालिङ्गकलतायाम् । ফুটি । त्रिका. ।

**नाड़ः** । पु । नले । নল গাছ । रा.नि.व.८ । नाडीवलतायाम् । च सू.१अ. ।

**नाड़िः** । स्त्री । शरीरान्तर्नाडिकायाम् । च.टी भ. । सिंहपिप्पल्याम् । कालशाके । दूर्व्वाभेदे । नाडीव्रणे । নালি ঘা । वै.निघ. ।

**नाड़िकम्** । क्ली । कालशाके । কালকা শাক । भा.पू.१भ.शा.व. । [वै निघ. ।

**नाड़िका** । स्त्री । कालशाके । घटपरिमाणे ।

**नाड़िकायन्त्रम्** । क्ली । यन्त्रविशेषे । বকযন্ত্র, ভাটীযন্ত্র । तस्य लक्षणं यथा—"विनिधाय घटे द्रव्यं कनीयांसमधोमुखम् । घटमन्यमुखे तस्य स्थापयित्वोभयोर्मुखं । मृदुधकैः समालिप्य नाड़िकां विनिवेशयेत् । यत्नात् कुम्भलिताङ्गिला जलद्रोण्यां महोत्तमां । आधारभाण्डपर्य्यन्तं तत्तु तथा विधारयेत् । अथवाग्न्यालयेदग्निं यावदाधो विशेदधः । तस्माद्यदाधारगतं निर्म्मलं रसमुत्तमम् । नाडिकायन्त्रमेतद्धि मुनिभिः परिकीर्त्तितम् ॥" इति । अत्रि. । [टी.भ. ।

**नाड़िकेरः (लः)** । पुं । नालिकेरवृक्षे । श

**नाड़िचीरम्** । क्ली । मिवेष्टने । नली । हारा. ।

**नाड़िन्धमः** । पुं । स्वर्णकारे । त्रिका. ।

**नाड़िपत्रम्** । क्ली । नाड़ीचशाके । श.मा. ।

**नाड़ी** । स्त्री । शिरायाम् । रा.नि.व.१८ । नासाग्राम् । नक्षत्रे । रा.नि.व २३ । नाले । गण्डदूर्व्वायां । मे. । नाडीव्रणे । रा.नि.व २० । ६० पलात्मककाले ।

**नाड़ीकः** । पुं । पट्टशाके । পাটশাক । কোষ্ঠার শাক । হিঃ পটুয়া । भा.पू.१भ.शा व. । तत्पत्रं तिक्तमधुरभेदेन द्विविधं, तयोस्तिक्तं क्रिमिकुष्ठहरं, मधुरं पिच्छिलं शीतं विष्टम्भि कफवातलञ्च । शुष्कपत्रं—नलितमित्युच्यते । নালিতা । ज्वरघ्नं पित्तकफज्वरघ्नञ्च । तज्ज्वलघ पित्तघ्नं रोचनं व्यञ्जने हितञ्च । राज. । क्ली । कालशाके । हिं कालशाक । गुणाः—"कालशाकं सरं रुच्यं वातकृत्कफशोथहृत् । वर्ल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम् ॥" भा. ।

**नाड़ीकलापकः** । पुं । सर्पाक्ष्यां । भा. ।

**नाड़ीकल्पनविधिः** । पुं । भूमिष्ठस्य नाडीच्छेदनविधौ । "नाभिवन्धनात् प्रभृति द्वि अष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौप्यराजतायसानां छेदनानामन्यतमेन ऊर्द्धधारेण छिन्द्यात् । तामये सूत्रेणोपनिबध्य कण्ठे चास्य शिथिलमवसृजेत् । तस्य चेन्नाभिः पच्येत लोध्रमधुकप्रियङ्गुदारुहरिद्राकल्कसिद्धेन तैलेनाभ्यज्यात् एषामेव तैलौषधानां चूर्णेनावचूर्णयेदिति ।" च.शा.८अ. ।

**नाड़ीकेरः(लः)** । पुं । नारिकेलवृक्षे । श र. ।

**नाड़ीचः** । पुं । तिक्तपट्टशाके । নালিতা পাতা । "नाड़ीचबीजकल्कः ।" भैष.क्षुद्ररी.चि. । पेचुके । कटू । त्रिका. ।

**नाड़ीचक्रम्** । क्ली । नाड़ीनिर्णयकग्रन्थे ।

**नाड़ीचरणः** । पुं । पक्षिणि । त्रिका. ।

नि.व.२३। भूम्यामलक्याम्। एरण्डवृक्षे। वै.निघ।

**नानाकन्दः** । पुं । पिण्डालौ । रा नि.व.७।

**नान्दीमुखी** । स्त्री । कुधान्यभेदे । यव। सा स्निग्धा। सु.सू.४६अ । "नान्दीमुखी मधूली च मधुरा स्निग्धशीतला।" च.र.।

**नापाकम्** । क्ली । पद्मबीजे । वै.निघ.।

**नापितशाला (लिका)** । स्त्री । नापित भवने । त्रिका.।

**नाभकः** । पुं । हरीतकीवृक्षे । वै.निघ ।

**नाभिः** । पुं, स्त्री । उदरावर्ते । नाइ । रा. नि.व १८ । तन्नामलमर्मस्थाने । सु.शा.६अ। स्त्री। कस्तूरिकामदे । मे. । [श.र.।

**नाभिकण्टकः** पुं । नाभिरोगे । (गोंड ।

**नाभिका** । स्त्री । कण्टकटभीवृक्षे । रा.नि.व.८।

**नाभिगुडकः** । पुं । नाभौ गुडकवदवयवे । नाइयेर गोंड़ । त्रिका.।

**नाभिगोलकः** । पु । नाभिगुडके । जटा.।

**नाभिच्छेदनम्** । क्ली। नाड़िकाच्छेदने । च.।

**नाभिनाड़ी** । स्त्री । कमलानामनाभिनाड्यां । नाभिनाड़ी । च.।

**नाभिपाकः** । पुं नाभिशोथे । नाइ पाका।

**नाभिनाला** । स्त्री । नाभिनाड्यां । त्रिका.।

**नाभिलापः** । पु । अनिच्छायाम् । वै.निघ.।

**नाभी** । स्त्री । नाभौ । श.र.।

**नाभीलम्** । । क्ली । स्त्रीकटिसन्धौ । नाभिगुडके । मे. । पीडायाम् । नाभिकूपे । हे.च. । ऋ जुसन्धौ । वै.निघ ।

**नाभ्यभ्यङ्गः** । पु । नाभौ तेलमर्दने ।

**नायिका** । स्त्री । पिण्डिकाल, किञ्चित्स्थूले कस्तूरीभेदे । मृगनाभिविशेष । यथा—"चूर्णा कृतिस्तु खरिका तिलका तिलाभा कौलत्थबीजस दृशी च कुलत्थिकाख्या । स्थूला ततः किमपि यं किल पिण्डिका स्यात् तस्याः किञ्चिदधिकापि च नायिकैवा ॥" रा.नि.व.१२ । [त्रिका.।

**नारः** । पु । गोवत्से । जले । मे. । शुण्ठ्यां ।

**नारकीटः** । पुं । अश्मकीटविशेषे । मे.।

**नारकेरः** । पुं । नारिकेलवृक्षे । जटा ।

**नारङ्गम्** । क्ली । गर्जरमूलके । गाजरमूला। रा.नि.व.७।

**नारङ्गः** । पुं । नागरङ्गवृक्षे । कमला लेबुर गाछ । फलगुणाः—मधुराम्लं गुरु उष्णं रोचनं वातामकृमिशूलश्रममघ्नं बल्यं हृद्यञ्च । रा.नि व.११। मद.व ६ । "नारङ्गञ्च स्वादुगुणोपपन्नं सन्दीपनं रोचकमम्लसाध । त्रिदोषहृत् शूलकृमीन्निहन्ति मन्दाग्निकायश्वसनापहारि ॥" भवि.१०अ । म- रिचवृक्षे । पिप्पलीरसे । मे.।

**नारङ्गवर्णकम्** । क्ली । गर्जने । गाजरम । भा.पू.१भ.शा.व.।

**नारदा** । स्त्री । इक्षुमूले । मूर्व्वायां । वै.निघ.।

**नारा** । स्त्री । जले । श.र.।

**नाराचचूर्णम्** । क्ली । उदावर्त्ताधिकारे चू- र्णम् । पाठः—"त्रिवृत्कृष्णाहरीतक्यो द्विचतु.पञ्च- भागिकाः । गुडिका गुडतुल्या सा विड्विबन्धगदा- पहा ॥" তেউড়ী ২ তো পিপুল ৪ তো. হ- রীতকী ৫ তো. সর্ব্বসম গুড় । अन्यत्—त्रि- वृच्चूर्णं पिप्पलीचूर्णं प्र. २ तो. शर्करा १ प. । तो- लकद्वयं मधुना लिह्यात् । एतद्वाढपुरीषे पित्तकफि हियम् । তেউড়ীচূর্ণ, পিপুলচূর্ণ প্রত্যেকে ২ তো. চিনি ১ প. । ২ তো. মধুর সহিত সে- ব্য । सा.कौ.। [ख्रि । श.र.।

**नाराचिका** । स्त्री । स्वर्णतौलनयन्त्रे । नि-

**नारायणः** । पु । वैद्यचन्दनामवैद्यकग्रन्थकारे, वैद्यामृतकारे ।

**नारायणतैलम्** । क्ली । वातव्याधौ तैलविशे- षे । पाठः—"बिल्वोऽग्निमन्थ. श्योनाक. पाटला पारिभद्रकः । प्रसारण्यश्वगन्धा च बृहती कण्टका- रिका । बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा । एषां दशपलान् भागान् चतुर्द्रोणेऽम्भस पचेत् । पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् । शतपुष्पा देवदारु मांसी शैलेयक वचा । चन्दनं तगरं कुष्ठं एला पर्णिचतुष्टयं । रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवं । एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् । शतावरीरसञ्चैव तैलतुल्यं प्रदापये-

त्। आज वा यदि वा गव्य चीरं दद्याच्चतुर्गुणम् ॥" इति स्वल्पम्। शौनि गन्धद्रव्य देयम्। বেল, গণিরি, শ্যোণা, পারুল নিমছাল, গন্ধভাদুলিয়া, অশ্বগন্ধা, বৃহতী, কণ্টিকারী, বেলেড়া, শ্বেত বেলেড়া বা (গোবক্ষচাকুলিয়া) গোক্ষুর, পুনর্নবা প্রত্যেকে ১০ প। কাথার্থ—জল ২৫৬ শ শে ৬৪ শ তিল তৈল ১৬ শ.। কল্কার্থ—শুলফা, দেবদারু, জটামাংসী শৈলজ, বচ রক্তচন্দন, তগর পাহ্কা, কুড, এলাইচ, শালপাণি, চাকুলি, মুগানী, মাষাণী, রাস্না, অশ্বগন্ধা সৈন্ধব, শ্বেতপুনা প্রত্যেকে ২ প শতমূলীরস ১৬ শ ছাগ বা গব্য দুগ্ধ ৬৪ শ.। শীতল হইলে গন্ধদ্রব্য দিবে। রস র।

**नारायणप्रियम्**। क्ली। पीतचन्दने। मद।

**नारायणी**। स्त्री। शतमूल्याम्। रा नि व ४। सा को लक्ष्मीविलासे। भैष।

**नारिकेर (ल)**। पु। (Cocos nucifera) The cocoanut tree स्वनामख्याततरौ। नारिकेल गाछ। श र.। प ह। हि नेरिएल्। म क नारियल। तैं नारिवदम। उत् नड़िया। वम् नारली। मा टेन्ना, टेङ्गा। स्य गुणा — गुरु स्निग्ध शीतल पित्तघ्न। अर्धपक्वफल च्च शागोषघ्न दुर्जरञ्च। तद्धालसलिलं लघु वल्य शीतल रसपाके मधुर पित्तशमन पीनसशमनं तृषाघ्न दाहघ्न शोषशमन सुखदञ्च। तत्पक्वजल किञ्चित्पित्तकारि मधुर रुचिकर दीपन बलकर गुरु हृद्य बलवर्द्धनञ्च। नारिकेलखर्ज्जूर स्निग्ध गुरु दुर्ज्जरं दाहविष्टम्भकरं हृद्यं बलवीर्य्यवर्द्धनञ्च। रा नि व ११। "दुग्धन्तु नारिकेलस्य बल्य हृद्य गुरु स्मृतम्। पाके स्वादु समुद्दिष्ट स्निग्ध श्यथ दाहकम्। किञ्चिदुष्णं वातकफगुल्मकासविनाशकम्। नारिकेलघृतं नाम हृद्यं बलवर्द्धनम्। कैश्य रसे च पाके च मधुरञ्च रुचिप्रदम्। हृद्यञ्च वातपित्तघ्न तज्जीर्णं गुरु वातहृत् ॥ नारिकेलस्य पुष्पन्तु शीतं रक्तातिसारहृत्। रक्तपित्तप्रमेहघ्न सोमरोगञ्च नाशयेत्। मलसम्भकरञ्चापि शीतम्॥ नारिकेलशिरोमज्जा रसे पाके मधुस्मृता। नारिकेलपुष्पजल गुरु हृद्यमकोष्णितम् ॥" वै निघ। "बालस्य नारिकेलस्य जलम्माया विरेचनम्।" राज। "स्निग्धं स्वादु हिम हृद्यं दीपन वस्तिशोधनम्। वृष्यं पित्तपिपासाघ्न नारिकेलोदकं गुरु ॥" सु। तन्मस्तकगुणा —"नारिकेलस्य तालस्य खर्ज्जूरस्य शिरांसि तु। कषायस्निग्धमधुरबृंहणानि गुरूणि च॥ नारिकेलफल शीतं दुर्ज्जरं वस्तिशोधनम्। विष्टम्भि बृंहणम्बल्य वातपित्तास्रदाहनुत्। विशेषत कोमलनारिकेल निहन्ति पित्तज्वरसूत्रदोषान्। तदेव जीर्णं गुरु पित्तकारि विदाहि विष्टम्भि मत भिषग्भि ॥ तस्याम्भ (तदङ्कुर) शीतलं हृद्यं दीपन शुक्रल लघु। पिपासापित्तजित् स्वादु वस्तिशुद्धिकरम्परम् ॥' भा। तस्य तैल गुरु वाजीकर चीणधातुपोषण वातपित्तघ्न मूत्राघातप्रमेहश्वासकासक्षयघ्नञ्च हितं मेधाकरं चलनाशनञ्च। "नारिकेल सुमधुर गुरु स्निग्धञ्च शीतलम्। हृद्य मलहरं वस्तिशोधन रक्तपित्तनुत् ॥ विष्टम्भि पक्व मतिमन्नपक्व कफवातलम्। बृंहण शीतल श्यथ नारिकेलफल विदु ॥' चवि १७ध। [र्थीम्।

**नारिकेरचीरिका**। स्त्री। नारिकेलची

**नारिकेलखण्डम्**। क्ली। शूलाधिकारे शीषधम्। पाठ —"कुडवमितमिह स्यान्नारिकेल सुपिष्ट पलपरिमितसर्पि पाचित खण्डतुल्यम्। निजपयसि तदेतत् प्रस्थमात्रे विपक्व गुडवदथ सुशीते शाणभागान् क्षिपेच्च। धन्याकपिप्पलिपयोदतुगाद्विजीरान् शाष त्रिजातकमथापि च केसरञ्च। हन्त्यम्लपित्तमरुचि क्षयमस्रपित्त शूल वमिं सकलपौरुषकारि हारि।" सुपिष्टनारिकेलशस्य ४ प भर्ज्जनार्थघृतं १ प शर्करा ४ प नारिकेलजल ४ श्र। पाकसिद्धौ प्रक्षेप —धन्याक पिप्पली मुस्ता वंशरोचना जीरक क्षणजीरक गुड़त्वक तेजपत्रम् एला नागकेसरपुष्पम् एषां प्र चूर्ण ४ मा। इदं पित्तशूले। सा को। रस र.। भैष। अन्यत्—कोमलनारिकेलशस्य ८ प शर्करा १ श नारिकेलजल ८ श घृत ५ प शुण्ठीचूर्ण १ प दुग्ध १ श एकत्र पचेत्। पाकसिद्धौ वंशलोचना कटुकी मुस्ता गुड़त्वक् एला तेजपत्र नागकेशर धान्यक पिप्पली गजपिप्पली प्र चूर्ण ४ तो. प्रक्षेप्यम्। रस र.। इदमम्लपित्ते।

**नारिकेलजन्म**। क्ली। प्रसिद्ध, रक्तपित्ते हितम्। शि धी रक्तपि.चि.।

**नारिकेलतैलम्** । क्ली । तत्फलोत्थतैले ।

**नारिकेललवणम्** । क्ली । सजलनारिकेलमध्ये सैन्धवलवणं पूरयित्वा तन्नारिकेलं मृदाविष्य शोषयेत् । अथ दग्ध्वा तन्मध्याल्लवणं ग्राह्यं । मात्रा ४ माषाः । भैष. ।

**नारिकेलक्षीरी** । स्त्री । नारिकेलदुग्धशर्करादिकृतमिष्टान्ने । यथा—"नारिकेलं तनूकृत्य छिन्नम्यसि गोः क्षिपेत् । सितागव्याज्यसंयुक्तं तत्पचेन्मृदुनाग्निना ॥" गुणाः—"नारिकेलीद्भवा क्षीरी स्निग्धा पित्तातिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा ॥" भा ।

**नारिकेलामृतम्** । क्ली । अम्लपित्ताधिकारे औषधम् । "नारिकेलफलप्रस्थं सुपिष्टं घृतभर्जितं । प्रस्थ प्रस्थ समादाय गव्यच्छागोत्थयोस्तथा तदुतं । विपाचं नारिकेलाम्बु तत्समं क्षीरमेव च । धात्र्याश्च स्वरसप्रस्थं खण्डस्यापि तुलां न्यसेत् । एकीकृत्य पचेत्सर्व्वं शनैर्मृदग्निना भिषक् । सिद्धशीते प्रदातव्य चूर्णं तत्र सुगुञ्छित । त्रिकटी. सचतुर्जातं प्रत्येकन्तु पलोन्मित । धात्रीजीरकयुग्मश्च धन्याकं ग्रन्थिपर्णकं । तुगापयोदचूर्णानि त्रिकर्षञ्च पृथक् पृथक् । मधुनः पलचत्वारि स्निग्धे भाण्डे निधापयेत् ॥" रस.र. । भैष. ।

**नारिकेलिः (ली)** । स्त्री, पु (इन्) । नारिकेलवृक्षे । भा. । श.र. ।

**नारिकेलोदकम्** । क्ली । नारिकेलजले ।

**नारी** । स्त्री । तन्नामकौषधिविशेषे । या अश्वबलेति कथ्यते । यस्याः पत्रम् अश्वसदृशञ्च । च. चि.२७. । रमण्यां । মেয়ে মানুষ । सा मातृशोणितोत्तरा विषमतिथौ जाता च । सुखबोधः ।

**नारीघृतम्** । क्ली । नारीदुग्धोत्थघृते । মেয়ে মানুষের দুধের ঘি । गुणाः—कफेऽनिले योनिदोषे रोगेष्वन्येषु शस्तितम् । चक्षुष्यमातं स्त्रीणाञ्च सर्पिः स्यादमृतोपमम् ॥" चचि.८७. । चक्षुष्यं पथ्यं सर्व्वरोगघ्नं मन्दाग्निदीपनं वृष्यं पाके लघु विषघ्नञ्च । रा.नि.व.१५ ।

**नारीचम्** । क्ली । शाकविशेषे । नालिता । तद्द्विविधं तिक्तं मधुरञ्च । तिक्तं रक्तपित्तघ्नं क्रिमिकुष्ठहरञ्च । मधुरं पिच्छिलं शीतलं विष्टम्भि कफवातकरञ्च । राज. ।

**नारीदुग्धम्** । क्ली । मानुषीदुग्धे । See मानुषीक्षीरम् ।

**नारीपयः** । क्ली । नारीदुग्धे ।

**नारीवल्लभा** । स्त्री । गन्धप्रियङ्गौ । वै निघ. ।

**नारीषण्डः** । पुं । स्त्रीनपुंसके । च.शा.२७. ।

**नारीष्टा** । स्त्री । मल्लिकापुष्पवृक्षे । মল্লিকা ফুলের গাছ । रा नि व.१० ।

**नारीक्षीरम्** । क्ली । मानुषीक्षीरे ।

**नार्य्यङ्गः** । पुं । नागरङ्गवृक्षे । কমলা লেবুর গাছ । श.र. । [वै.निघ. ।

**नार्य्यतिक्तः** । पुं । किराततिक्तके । চিরাতা ।

**नालः** । पुं,क्ली । पद्मदण्डे । अम. । हरिताले । स्वामी । मेद्रे । पिचुकिवि । पुं । नले । रा.नि व.८ । मेढ्रे । भा म.३भ.मूत्रोत्सङ्गे ।

**नालकः** । पु । कलाये । মটর । रा.नि.व.१६ । नलक इति पाठोऽपि पुस्तकान्तरे दृश्यते । [८ ।

**नालवंशः** । पुं । नले । নল গাছ । रा नि.व.

**नाला** । स्त्री । नले । सम्बे । ডাঁটা, নাড়া । अम.भ ।

**नालावती** । स्त्री । नागवल्लीलतायां । प सु.. ।

**नालिः** । स्त्री । मलकाष्ठमि । নলি । नाड्यां, शिरायां । हि.की. ।

**नालिकः** । पुं । खड्गके । গণ্ডার । महिषे । चिका. । रक्तगम्बोले । নাড়ীশাকে । चर्म्मकषायाम् । वै निघ. । क्ली । पद्मे । श.र. ।

**नालिका** । स्त्री । नालायाम् । श र. । नाड्यां । च.टी. । चर्म्मकषायाम् । जटा. । कविकर्णवेधनास्त्रे । हारा. । नलाकारतत्वमाले । नलिकानामगन्धद्रव्ये । शेफुके । वै.निघ. । मिष्टपत्रमालितायाम् । श.मा । [স্নাড় । वै.निघ. ।

**नालिकिनी** । स्त्री । कमलिन्याम् । পদ্মিনী

**नालिकेरः (कः)** । पुं । नारिकेलवृक्षे । च. टी.र. ।

**नालिजङ्घः** । पुं । द्रोणकाके । हारा. ।

**नालिता** । क्ली । (Arum colocasia)

मनामशालपत्रशाके । नालिता शाक । प.सु. । गुणाः—नाडीचवत् ।

**नाली** । स्त्री । मन.शिलायाम् । नलिकायाम् । वै निघ । शाककडम्बके । डँटा । मै. । नाड्या, शिरायाम् । च.टी भ. । पद्मे । श.र. ।

**नालीकः** । पुं । पद्मे । मृणाले । शरे । क्ली । पद्मखण्डे । मे. ।

**नालीकिनी** । स्त्री । पद्मसमूहे । श र ।

**नालीव्रणः** । पु । नाडीव्रणे । श.र. ।

**नाल्पपुष्पी** । स्त्री । महाशणपुष्पे । प.सु ।

**नावनम्** । क्ली । नस्ये । सु. ।

**नासत्यौ** । पुं । अश्विनीकुमारौ । अम ।

**नासा** । स्त्री । नासिकायाम् । वासकवृक्षे । रा. नि.व ४।१८ । [घे । निका. ।

**नासाच्छिन्नी** । स्त्री । पूर्णिकानामपक्षिविशे

**नासा(प्रती)नाहः** । पुं । नासारोगविशेषे । लक्षणं यथा—"कफावृतो वायुरुदानसञ्ज्ञो यदा स्वमार्गे विगुणः स्थितः स्यात् । घ्राणं वृणोतीव यदा स रोगी नासाप्रतीनाह इति प्रदिष्टः ॥" सु. उ.२२अ. ।

**नासापरिशोषः** । पुं । नासारोगविशेषे । लक्षण यथा—"घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च । समुच्छ्वसित्यूर्ध्वमधश्च कृच्छ्रात्तस्य नासापरिशोष उक्तः ॥ सु उ.२२अ. ।

**नासा(सिका)पाकः** । पु । नासारोगविशेषे । लक्षणं यथा—"घ्राणाश्रितं पित्तमरूंषि कुर्याद् यस्मिन् विकारे बलवांश्च पाकः । तं नासिकापाकमिति व्यवस्येत् विक्लेदकोथावपि यत्र दृष्टौ ॥" सु.उ.२२अ. ।

**नासायन्त्रम्** । क्ली । घ्राणार्बुदादिदर्शनार्थे यन्त्रविशेषे । लक्षण यथा—"घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया । प्रदेशिनीपरीणाहा स्याद् भगन्दरयन्त्रवत् ॥" अत्रि. ।

**नासारोगः** । पु । नासागतैकत्रिंशद्रोगेषु । यथा—"अपीनसं पूतिनस्यं नासापाकस्तथैव च । तथा शोणितपित्तञ्च पूयशोणितमेव च । क्षवथुर्भ्रंशथुर्दीप्तो नासानाहः परिस्रवः । नासाशोषेण स-हिता दशैकादशैरिता गदा । चत्वार्यर्शांसि चत्वारः शोफाः सप्तार्बुदानि च । प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः । एकत्रिंशन्मितास्ते तु नासायां प्रकीर्तिताः ॥" सु.उ.२२अ । विशेषः स्वस्वपर्याये द्रष्टव्य. ।

**नासार्शः** । क्ली । घ्राणेन्द्रियजातार्शसि । नाके अर्श । अत्र लक्षणम् —प्रतिश्यायोऽतिमात्रं क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिकवाक्यत्वं शिरोदुःखञ्चेति । सु.नि.२अ. ।

**नासालुः** । पु । जातीफलवृक्षे । वै.निघ । कट्फलवृक्षे । श.च. । [सु सू.३८अ. ।

**नासावंशः** । पु । नासादण्डे । नाक दाँड़ि ।

**नासा(सिका)शोषः** । पुं । नासापरिशोषरोगे । सु उ २२अ. ।

**नासासंवेदनः** । पु । काण्डीरलतायाम् । करला । रा.नि.व.३ । ढिकिन्याम् । (ढेँढका) । क्षुद्रकारवेल्ले । वै निघ. । [ड । च.शा.७अ ।

**नासास्थि** । क्ली । घ्राणास्थनि । नाकेर हा-

**नासा(परि)स्रावः** । पु । नासास्रावरोगे । लक्षण —"घनस्त्वः सलिलप्रकाशं यस्या विवर्णं स्रवतीह नासा । रात्रौ विशेषेण हितं विकारं नासापरिस्रावमिति व्यवस्येत् ॥" सु.उ.२२अ ।

**नासिकन्धमः** । त्रि । नासिकया निःश्वास वादिनि । व्याक. । [व्याक ।

**नासिकन्धयः** । त्रि । नासापथेन पानशीले ।

**नासिका** । स्त्री । घ्राणेन्द्रिये । रा.नि व.१८ । या गर्भस्थस्य षड्भिर्मासैः भवति । सुखबोध. ।

**नासिकामलम्** । क्ली । सिंघाणे । शिंगणि । रा.नि व.१८ । [दा ।

**नासिकाशब्दः** । पु । भासाशब्दे । नाक डा-

**नासिक्यम्** । क्ली । नासायाम् । त्रिका. ।

**नासिक्यौ** । पु । अश्विनीकुमारद्वये । हे.च. ।

**नास्तितः (टः)** । पुं । नासाग्रे । श.च ।

**न.छः** । पु । चानाइे, मन्नावत्थे । वै.निघ. ।

**निःशल्या** । स्त्री । कृष्णदन्तीवृक्षे । रा नि व.६ ।

**निःशूकः** । पु । शुकधान्यविशेषे । रा नि व.१६ ।

**निःश्रेणिः** । स्त्री । वनखर्ज्जूरिकायाम् । मे. ।

**निःश्रेणिका** । स्त्री । कोङ्कणप्रसिद्धे तृणविशेषे । घासविशेष । गुणाः—नीरसा तथा पथ्नामबलप्रदा । रा.नि.व.८ । [रा.नि.व.११ ।

**निःश्रेणी** । स्त्री। खर्ज्जूरीवृक्षे । खेजुर गाछ ।

**निःश्वसन(सित)म्** । क्ली । निःश्वासे ।

**निःश्वासः** । पुं । नासावायौ, प्रश्वासे । वै.च.।

**निःसरणम्** । क्ली । निर्गमने । वै.च. ।

**निःसारः** । पुं । पृथुशिम्बश्योणाकवृक्षे । बड सोंदाल गाछ । रा.नि.व.९ । खारीकृतिकायाम् । वै.निघ. । शाखोटवृक्षे । श.च ।

**निःसारकः** । त्रि । रेचके ।

**निःसारा** । स्त्री । कदलीवृक्षे । रा.नि.व.११ ।

**निःस्नेहा** । स्त्री । अतसीवृक्षे । मशिना । त्रिका. ।

**निःस्यन्दः** । पुं । स्रावे । क्षरणे ।

**निःस्रावः** । पुं । भक्तमण्डवमण्डे । भातेर माड, फेन । वै.च. ।

**निकषः** । पुं । स्वर्णमषौ । अ.टी.भ. ।

**निकारणम्** । क्ली । मारणे । अम. ।

**निकुचः** । पुं । डहुके । डेलो । च.सू.४अ. ।

**निकुञ्चकः** । पुं । मुष्टिपरिमाणे । स च कुडवपादः । भरतवृत्तसर्व्वस्वे । वानीरवृक्षे । भा. ।

**निकुञ्जः** । पुं,क्ली । जलवेतसे । मद.व.५ । वै.निघ.२भ पाण्डु-चि.मण्डूराद्यरिष्टे ।

**निकुञ्चिकाम्ला** । स्त्री । निकुञ्चिकानामश्रीवल्लीतुल्यगुणकण्टकवृक्षे । निकुञ्चिके । निरोषवल्लीति भाषा । रा.नि.व.८ ।

**निकुम्भः** । पु । दन्तीवृक्षे । र.मा. । वा.सू.१५अ.शोधनव. । "निकुम्भकुम्भत्रिफलागवाक्षी ।" भा. म.४भ.नाड्यारी चि । "शिग्रुसिद्दीनिकुम्भानाम् ।" च.सू.२अ.षट्पदद्वे । जलवेतसे । सु.चि.१०अ ।

**निकुम्भवीजम्** । क्ली । जैपालवीजे । रा.नि.व.६ ।

**निकुम्भा (म्भी)** । स्त्री । कट्फले । वै.निघ. २भ.कार्यवाजन.चि. । दन्तीवृक्षे । प.मु. । चन्द्रशभागुच्छाम् । [रा.नि.व.६ ।

**निकुम्भाख्यवीजम्** । क्ली । जयपालवीजे ।

**निकृन्तनः** । पुं । गन्धके । वै.निघ. ।

**निकेतनः** । पुं । जलवेतसे । वै.निघ. । पलाण्डौ । श.च. ।

**निकोचः (टः,ठः) (कः)** । पुं । अङ्कोटवृक्षे । आंकोड गाछ । रा.नि.व.९ । अ.टी भ । च.सू.२७अ. । (टक.) वृक्षभेदे । पेस्ता गाछ । वै.निघ. । [कन्द ।

**निखण्डिका** । स्त्री । गुडूचीकन्दे । गुडूच्या-

**निखर्व्वः** । पु । वामने । वै.च. ।

**निगडः** । पुं । धातुमारणवीजविशेषे । यथा—सुह्यर्कक्षीरं पलाशवीजं गुग्गुलुः प्रत्येकं समं सैन्धवद्विगुणेन सह मर्द्दयित्वा विधेयः । र.चि.२अ.।

**निगदः** । त्रि । पुरातने । वा चि ७अ. ।

**निगन्धिकः** । पुं । सुवर्णचम्पके । वै.निघ. ।

**निगरः** । पुं । भोजने । रा.नि.व.२० ।

**निगरणम्** । क्ली । भोजने । रा नि.व २० । पुं । गले । मे. ।

**निगारः** । पुं । भक्षणे । अम. ।

**निगालः** । पुं । गले । गला । रा.नि.व.१८ । अश्वस्य घण्टाबन्धसमीपस्थदेशे । ज.द.२अ. ।

**निगालवान्** । पुं । अश्वे । अम. । [कर्णा. ।

**निगुः** । पु । मनसि । त्रिका. । मले । मूले ।

**निगूढः** । वनमुद्गे । वै.च. । त्रि । गुप्ते ।

**निग्रहः** । पु । चिकित्सायाम् । रा नि.व २० ।

**निग्रहस्थानम्** । क्ली । भिषजां वादमार्गप्रदर्शनार्थमधिगन्तव्यपदविशेषे । "विज्ञातस्य वाक्यस्य त्रिरभिहितस्य परिषदि विज्ञानवत्याम् अननुयोज्यस्यानुयोगोऽनुयोज्यस्य चाननुयोगः ।" च.वि ८अ. ।

**निघण्टुः** । पु। अभिधाने, नामसंग्रहे । वै.च.।

**निघण्टुराजः** । पु। नरहरिकृतराजनिघण्टौ।

**निघृष्वः** । पु । खुरे । वराहे । क्षुपा ।

**निचयात्मकः** । त्रि । सान्निपातिके ।

निधनम् । क्ली । मरणे । अम । पुं । वधतारायाम् । [नि व.९ ।

निधमन: । पुं । निम्बवृक्षे । निम् गाछ । रा.

निधि: । पुं । नलिकायाम् । नालुका । रा.नि.व १२ । जीवकौषधौ । श.च ।

निधुवनम् । क्ली । सुरते । अम. ।

निध्यानम् । क्ली । दर्शने । अम ।

निनन्दु: । स्त्री । मृतवत्सायाम् । हे.च. ।

निन्द(न्द्य)तम: । त्रि । निन्दितवृत्ते । श.र. ।

निप: । पुं । कदम्बवृक्षे । श.च. । कलसे । अम. ।

निपाक: । पुं । स्वेदने, पाके । श.र. ।

निपानम् । क्ली । दोहनभाण्डे । त्रिका. । कूपसमीपे शिलादिबद्धे कूपोद्धृतजलस्थाने । भ. ।

निपुण: । पुं । चिकित्सके । सु.नि १६अ. ।

निफला । स्त्री । ज्योतिष्मतीलतायाम् । लताफट्की । भा. ।

निफालनम् । क्ली । दर्शने । वै.निघ. ।

निफेनम् । क्ली । अहिफेने । रा.नि.व.६ ।

निबन्ध: । पुं । मलमूत्ररोधरोगे, आनाहे । हे.च. । निम्बवृक्षे । जटा. ।

निबन्धनम् । क्ली । हेतौ । भा. ।

निभालनम् । क्ली । दर्शने । त्रिका. ।

निमज्जथु: । पुं । शयने । निद्रायां । वै.निघ ।

निमज्जनम् । क्ली । स्नाने, अवगाहने । वै.निघ. । [वा चि.७अ. ।

निमर्दक: । पुं । मांसस्य विविधव्यञ्जनप्रकारे ।

निमित्त(क)म् । क्ली । हेतौ । मा.नि. । चिह्ने । अम. । (कम्) चुम्बने । श.मा ।

निमित्तकृत् । पुं । काके । रा.नि.व १९ ।

निमील: (नम्) । पुं, क्ली (नम्) । निमिषे । हे.च. ।

निमेष: । पुं । नेत्ररोगविशेषे । तल्लक्षणं— "निमेषिणी: सिरा वायु: प्रविष्टो वर्त्मसंश्रया: । चालयत्यति वर्त्मानि निमेष: स गदो मत: ॥" सु उ ३अ. । निमिषे । भावप्र । श.र. ।

निमेषकृत् । पुं । खद्योते । त्रिका. ।

निम्नगम् । क्ली । जले । रा.नि व.१४ ।

निम्ब: (क:) । पुं । (Melia azadirachta, Syn. Azadirachta Indica.) स्वनामख्यातवृक्षे । निम् गाछ । हिं निम् । मं लिंब, लिम्ब । कं बेउ । तै वेपचेट्टु । ता. वेप्पुमरम । गुणा: — शीत: तिक्त: व्रणकृमिविषशोफघ्न: श्लेष्मघ्न: बहुविधज्वरघ्न: विशेषतो हृदयविदाहशान्तिकरश्च । रा.नि.व ९ । तत्फलगुणा:—रसे तिक्तं पाके कटु भेदनं स्निग्धं लघु उष्णं कुष्ठघ्नं गुल्मार्श:कृमिमेहघ्नञ्च । भा. । "दूर्व्वानलानिम्बवासामगुप्ता ।" वा.सू.१५अ.आरग्वधादि: । खर्ज्जूरवृक्षे । तालीशपत्रे । मरिचे । पलाण्डौ । वनमूलके । रा.नि.व.२१ ।

निम्बतरु: । पुं । पारिभद्रवृक्षे । रा.नि.व.८ । निम्बवृक्षे । मन्दारवृक्षे । अम. ।

निम्बतैलम् । क्ली । निम्बफलबीजस्थतैले । निम् फलेर तैल । गुणा:—कटूष्णकृमिकुष्ठकफघ्नञ्च । रा.नि.व.१५ ।

निम्बपञ्चकम् । क्ली । पञ्चनिम्बे । रा.नि.व.१२ ।

निम्बपत्रम् । क्ली । प्रसिद्धं, रक्तपित्ते हितम् । निमपाता । सि.यो र.पि.चि खण्डखाद्ये । गुणा: —"निम्बपत्रं स्मृतं नेत्र्यं कृमिपित्तविषप्रणुत् । वातलं कटुपाकञ्च सर्व्वारोचककुष्ठनुत् ॥" भा. । च.द.षट्चाङ्गधूपे ।

निम्बप्रसव: । पुं । निम्बपत्रे । वा चि.९अ. ।

निम्बबीज: । पुं । राजादनीवृक्षे । खिर्नी गाछ । रा नि.व.११ ।

निम्बु: (म्बू:) (क:) । पुं । (Citrus medica. Var, acida.) अम्लजम्बीरवृक्षे । टेक लेबुर गाछ, कागजी लेबू । मं लिंबे । कं लिम्बू । गुणा:—फलमम्लरसं कटूष्णं गुल्मामवातहरम् अग्नेयं चक्षुष्यं कासकफकण्ठवह्निदर्दरं । पक्वमतीव रुच्यम् । रा नि.व ११ । निम्बूकमम्लं वातघ्नं दीपनं पाचनं लघु कृमिघ्नं तीक्ष्णमुदरग्रहणं गुल्मि हितं रोचनं मन्दाग्नौ बद्धे च हितम् । भा. । "निम्बुकफनिमन्युकमादमं तीक्ष्णमम्लमुदरदहनाय च म् । वातपित्तकफशूलिनां हितं नष्टवाह्नरुचि

शोधनम्परम् ॥ त्रिदोषमथोज्वरपीडितानां दोषा भितानाञ्च सवञ्जलाना । मलग्रहे वह्नगदे हितञ्च विसूचिकायां सुनयो वदन्ति ॥" चक्रि.१०७.।

**निम्बुकपानकम्** । क्ली । निम्बूरसकृतप्रपान के । লেবুর শর্বৎ । निम्बुरस १ भ. शर्करादक ६ भ. लवङ्गमरिचचूर्णेन सम्मिश्र कृते पानके । भा । [रसे।

**नियतः** । पु । गन्धके । र.सा.स.वसन्ततिलक

**नियमनः** । पु । निम्बवृक्षे । वै निघ. । क्ली । रसस्य संस्कारविशेषे । See पारद ।

**नियामकगणः** । पु । रसनियामकद्रव्यस मूहे । यथा—"सर्पाचीवनकर्कण्यौ कचुकी यम चिञ्चिका । शतावरी भङ्गपुष्पी शरपुङ्खा पुनर्नवा । मूषापर्णी च मत्स्याची ब्रह्मदण्डी शिखण्डिनी । अनन्ता काकजङ्घा च काकमाची च पोतिका । विष्णुक्रान्ता सहचरा सहदेवी महाबला । बला नागबला मूर्वा चक्रमर्दकरञ्जकौ । पाठा तामल की नीली जालिनी पत्रधारिणी । घण्टा विष घ्टा गोजिह्वा कोकिलाची धनध्वनि । चाखुपर्णी चौरिणी च त्रिपुटी सितदण्डिका । क्षवकर्णी च तुलसी सिंही च गिरिकर्णिका ॥" र सा सं. ।

**नियोगः** । पु । इदमेव कर्त्तव्यमिति अवधार णे । यथा—पथ्यमेव भोक्तव्यम् । सु उ.२५ च ।

**नियोद्दा** । पु । कुक्कुटे । रा नि.व.१८ ।

**निय्या** । स्त्री । सर्षपपञ्चाशमाने प.प्र. ।

**निरचता** । स्त्री । उपवासे ।

**निरशनम्** । क्ली । अनशने । व्याक ।

**निरसनम्** । क्ली । निष्ठीवने । अम ।

**निरसा** । स्त्री । निःश्रेणिकावृक्षे । रा नि व.८ ।

**निरातङ्कः** । त्रि । रोगमुक्ते । रा नि.व.२० ।

**निरापशालिः** । पु । जलपूर्णसेवे इत्यन्तु सञ्जातशालिधान्यविशेषे । নির্জল'কড়ান্ত হৈম ন্তিক ধান্য । মৈ রূপশালি । কৈ তুরনিল্ । गुणा —मधुर. स्निग्ध शीतल पित्तदाहघ्न त्रिदोषघ्न बल्य पथ्य सर्व्वरोगघ्नञ्च । रा.नि.व १६ ।

**निरामज्वरः** । पु । पक्वज्वरे । लक्षण—"च रचामता लघुत्वञ्च गात्राणां ज्वरमार्द्दवम् । दोषप्र वृत्तिरष्टाहो निरामज्वरलक्षणम् ॥" मा नि. ।

**निरामयः** । पु । शूकरे । श मा । वनच्छागे । मे । त्रि । रोगमुक्ते । रा. नि व.२० ।

**निरामालुः** । पु । कपित्थवृक्षे । श च. ।

**निरालम्बा** । स्त्री । आकाशमांसी । সূক্ষ্ম জটামাংসী । रा.नि व १२ ।

**निरिन्द्रियः** । त्रि । इन्द्रियशून्ये । [ध्म. ।

**निरीहः** । त्रि । निश्चेष्टे । निर्व्यापारे । वा.चि.

**निरुत्थः (स्थित.)** । त्रि । मृते । र सा स. ।

**निरुत्थीकरणम्** । क्ली । मृतलौहस्य मित्रप ञ्चकादिभि पाकेन मारणे । "सर्व्वमेतन्मृत लौह पक्तव्य मित्रपञ्चकैः । यदव स्यान्निरुत्थञ्च सेव्य र क्तिचतुष्टयम् ॥" मतान्तरं यथा—"गोघृतत्र्यंश लौह तमखल्ले विमर्द्दयेत् । दिनैकडम्यकाद्रावै रू ढा गजपुटे पचेत् । एवमेव सर्व्वलौहानां कर्त्तव्यं स्यान्निरुत्थितम् ॥" र सा.स. ।

**निरुद्धगुदः (पायु.)** । पु' । तन्नामकक्षुद्र रोगे । लक्षणादि यथा—"वेगसन्धारणाद्वायुर्विहतो गुदमाश्रित । निरुणद्धि महत् स्रोत सूक्ष्मद्वारङ्क रोति च । मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीष तस्य गच्छति । सन्निरुद्धगुद व्याधिमेनं विद्यात् सुदुस्त रम् ॥" सु नि.१३ च. ।

**निरुद्धप्रक(का)शः** । पु' । मेढ्रजक्षुद्ररोग विशेषे । लक्षण—"वातोपसृष्टमेवन्तु चर्म्म संश्रयते मणिम् । मणिश्चर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च । निरुद्धप्रकाशे तस्मिन्मन्दधारमवेदनम् ॥" सु नि. १३ च । [च. ।

**निरुद्धमणिः** । पु । निरुद्धप्रकाशे । वा.उ ११

**निरुपमः** । पु । गौधिकेक्षजातिभेदे । सु कल्प. ८ च ।

**निरूहः** । पु । वस्तिविशेषे । "कषायक्षीरतैलै र्यो निरूह स निगद्यते ।" शा को । तत्र दवि माय—कर्ष ११ तो. पिप्पि ८ तो वारि च ६ तो. पाद्यम् । खेदमधुमेव ३।८।६ दद्यानि यथा- कर्म्म कफपित्तवातेषु दाद्यात् । तथा क्वाथस्य १ प. सैन्धवस्य १ तो. । रसयोरगमस्याप्य एकैक पञ्चं दाद्यम् । इति निरूहवस्तिकल्पनामात्रा से था । वै.निघ ज्व,चि, । स चोत्क्लेशनदोषहरश्म-

नलीव्रनतैहणपिच्छिलमधुतैलयापनयुक्तरथसिद्धोत्त रवस्तिभेदेन बहुधा। तेषां लक्षणानि तत्तत्पर्य्याये मृग्याणि। भा.। तस्य कालादि—"अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत्। मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले। अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम्। मधुस्नेहनकल्काख्यकषायावापतः क्रमात्। त्रीणि षट् द्वे दश त्रीणि पलान्यनिलरोगिणः। पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम्। षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम्॥" च द.।

**निरोधः** । पु। नाशे। रोधे। मे.।

**निरोप्यशालिः** । पु। वापितशालौ। (रोना धान। गुणा —लघवः शीघ्रपाका गुणोत्तरा विदाहिनः दोषघ्ना बल्या मूत्रवर्द्धनाश्च। रा नि व १६।

**निर्ऋतिः** । स्त्री। बालस्य तन्नामकमातृकाग्रहविशेषे। बालग्रहविशेष। यथा दशमे दिने मासि वर्षे वा बालो गृह्यते। तेन तस्य ज्वरगात्रोद्वेजनादि भवति। च.द बालरो चि.।

**निर्गन्धपुष्पी** । स्त्री। शाल्मलिवृक्षे। श च.।

**निर्गुण्ठी (ण्डी)** । स्त्री। (Vitex negundo) स्वनामख्यातवृक्षे, सिन्धुवारवृक्षे। निशिन्दा गाछ। हि मेउडीसम्भालु, निर्गुण्डी। मं लिङ्गुर। तें नाविलिचेट्टु, तेल्लव। वम्. कटरि। ता. नोक्चि। दा. मान्वालि। फा. सिस्वान्। गुर्ज्ज नगोड। कोङ्कणे निगुड सैन्दुवार इति च। भा.। सा चतुर्धा—श्वेता नीला आरण्या कर्त्तरी चेति। श्वेतपुष्पागुणा —"निर्गुण्डी कटुका तिक्ता रूक्षा चोष्णा कषायका। स्मृतिप्रदा नेत्रहिता केश्या लघ्वग्निदीपनी। मेध्या वर्ण्या च सम्प्रोक्ता गुदवातक्षयापहा। सन्धिवातञ्च वातञ्च शोफश्वामह्नर्मौ तथा। कुष्ठकफ व्रणं प्लीहां गुल्माढ्यरुज तथा। विष शूलघातदृक्षिय ज्वर मेदो रुज तथा। स्तभ शीच प्रतिश्यायश्वास श्वासञ्च नाशयेत्। पित्तनाशकरी प्रोक्ता पर्णमस्या लघु स्मृतम्। कृमिनाशकर प्रोक्त ·····॥" नीलपुष्पागुणा —"नीला निर्गुण्डिका तिक्ता रूक्षा चोष्णा कटु स्मृता। आध्मवातम्यदरदाहं श्वासकर्षं हरेत्। वातनाशकरी प्रोक्ता · ····॥" वै द्रव्यगुण। रा.नि व,४। कर्त्तरीगुणा.—निर्गुण्डी कर्त्तरीयुक्ता कट्वी तिक्ता कफापहा। वातक्षयञ्च शूलञ्च कण्डूकुष्ठञ्च नाशयेत्॥ आरण्यायो श्वेतकृष्णयो. गुणाः —प्रोक्ता चारण्यनिर्गुण्डी पथ्या पित्तज्वरं हरेत्। विषञ्च श्लेष्मसीवात नाशयेद्वर्णकारिणी। पर्णञ्चास्यास्तु कटुकञ्चाग्निदीप्तिकरं लघु। कृमीन् कफञ्च वातञ्च नाशयेत् · ··॥ पुष्पञ्चास्याः कटु चोष्णं तिक्तं कृमिकफापहम्। प्लीहा गुल्मञ्च वातञ्च कुष्ठ शोथञ्च नाशयेत्। अरुचेर्नाशकम्प्रोक्तं कण्डूञ्चैव विनाशयेत्॥" वै द्रव्यगुण.। See सिन्दुवार.। नीलनिर्गुण्ड्याम्। रा.नि,व.४। सु सू २७थ.। नीलशेफालिकायाम्। श र.।

**निर्घातनम्** । क्ली। इतस्ततश्च विचाल्य शल्योद्धरणरूपे कर्म्मणि। सु सू.७अ।

**निर्जरः** । त्रि। जरारहिते। क्ली। सुधायाम्। [श.र.।

**निर्जरसर्षपः** । पु। देवसर्षपे। रा नि व.८।

**निर्जरा** । स्त्री। गुडूच्याम्। तालपर्ण्याम्। मूर्व्वा। मे।

**निर्झरः** । पुं। गजे। शतौ। श र.। तुषानले। मे.।

**निर्याणनम्** । क्ली। गजापाङ्गे। श.र।

**निर्णेजकः** । पुं। रजके। अम.।

**निर्णेजनम्** । क्ली। क्षालने। धावने।

**निर्दरम्** । क्ली। तरुसारे, वृक्षनिर्यासे। मे.।

**निर्दहनः** । पुं। भल्लातकवृक्षे। क्ली। तद्बीजे। रा.नि.व.११।

**निर्दहनी** । स्त्री। मूर्व्वायाम्। मूर्व्वा। र. मा.। च.द.शूल.चि.। "तथाभया निर्दहनीच।"

**निर्दिग्धः** । त्रि। बलवति, मांसले। हे.च.।

**निर्देशः** । पु। विस्तरवचने। यथा—"शारीरमागन्तु चेति।" सु.उ.६५अ.।

**निर्भर्त्सनम् (ना)** । क्ली, स्त्री। अलक्तके, लाक्षायाम्। रा नि व.६।

**निर्भिन्नचिर्भिटः** । पुं। फुटिकायाम्। श.चि.।

**निर्भुग्नः** । त्रि। विस्फारिते। मा.नि।

**निर्म्म(र्म्मो)ध्या** । स्त्री। नलिकानामगन्धद्रव्ये। रा नि व १२।

[यक्ते। म। त्रि। पवित्रे।

**निर्म्मलम्** । क्ली। कतकफले। निर्माल्ये। च-

**भोगिवल्लभम्** । क्ली । श्रीखण्डचन्दने । प सु.।

**भोगी** । स्त्री । सर्पिण्यां । सर्पकङ्कालिका । रा नि व.५ । गौ (इन) पु । सर्पे । अम. ।

**भोजनम्** । क्ली । कठिनद्रव्यस्य गलाध करणे । अम. । पादोनाहारे । "पादोन स्याद्भोजनम् ।" रा नि.व २० । भोजनान्तकर्त्तव्यता —"भुक्त्वा पा णितल घृष्ट्वा चक्षुषोर्यदि दीयते । अचिरेणैव त द्वारि तिमिराणि व्यपोहति । भुक्त्वाचम्य कर वाम दत्त्वा कुक्षौ तत पठेत् । मुक्त माहेन्द्रदुक्लेन वैद्या नरसुखेन च । गरुडस्य च कल्पेन समुद्रस्य च व- ह्निना । वातापिर्भक्षितो येन पीतो येन महोद धि । यन्मया खादित पीत तदगस्त्यो जरियति । सुखासीन क्षण तिष्ठेत् यावन्न लभते सुख । भुक्त्वा पादशत गत्वा वामपार्श्वेन सविशेत् । एवमाधीगत चान्न सुख तिष्ठति जीर्य्यति ॥" राज १प. । See आहार , बस्तब1

**भोजनकः** । पु । भदीभल्लातके । प सु. ।

**भोजनपात्रम्** । क्ली । स्वर्णादिनिर्म्मिताहार पात्रे । पाकराज. ।

**भोजनार्हम्** । क्ली । शालिधान्ये । प सु. ।

**भोजनीयम्** । क्ली । भोज्यद्रव्यमात्रे ।

**भोजराज.** । पु । ग्रन्थग्रन्थकारे।

**भोजराजमल्ल.** । पुं । रससुधानिधिकारे ।

**भोज्यम्** । क्ली । षड्विधान्नान्यतमे अन्ने । रा नि व.२० ।

**भोज्यसम्भवः** । पु । शरीरस्थरसधातौ । श.च. ।

**भोग्यम्** । क्ली । धान्ये । रा.नि व १६ ।

**भोग्यार्हम्** । क्ली । शालिधान्ये । रा.नि.व.१६।

**भौलि.** । पुं । उष्ट्रे । त्रिका. ।

**भौतिकम्** । क्ली । मुक्तायां । रा.नि व.१३ ।

**भौमजलम्** । क्ली । पृथ्वीजले । जाङ्गलानूपसा धारणभेदेन तेषां गुणा जलशब्दे मृग्या ।

**भौमरत्नम्** । क्ली । प्रवाले । पला । रा.नि. व.१३ । [सु.कल्प १ष ।

**भौमसर्पः** । पु । पृथ्वीजातसर्पे, दशविधे ।

**भौमौषधम्** । क्ली । पार्थिवौषधे । "सुवर्ण स मला पञ्च लौहा ससिकता सुधा । मन शिलाले मणयो लवण गैरिकाञ्जने ॥" च.सू.१ष ।

**भौर्जग्रन्थिः** । पु । भूर्जग्रन्थौ । "ग्रन्थिश्च भौ र्ज ।" च.सू.३ष. । [ज्व.चि ।

**भ्रगः** । पु । वृक्षादिभ्य पतने । भा.भागनु.

**भ्रमः** । पु । चक्रारूढस्येव ज्ञाने । मा म १भ. ज्व चि. । "रज पित्तानिलाद्भ्रम ।" वै निघ सू र्च्छा चि. । मूर्च्छायाम् । भान्तौ । कुन्दयन्त्रे । कुं- द । त्रिका. ।

**भ्रमणम्** । क्ली । पर्य्यटने । इत्यादिभ्रमणगुणा. —वातकोपनत्वम् अङ्गस्थैर्यकरत्व बलाग्निवर्द्धनत्व च । राज ।

**भ्रमणी** । स्त्री । जलौकायाम् । वै निघ. ।

**भ्रमत्कुटी** । स्त्री । वृणादिच्छत्रे । त्रिका ।

**भ्रमर (कः)** । पु । भृङ्गे । अम. । बालमूषि के । मी ।

**भ्रमरकीटः** । पु । कुम्भीरकीटे, अग्निप्रकृति कीटे । सु कल्प ८ष । [रा.नि.व.७ ।

**भ्रमरच्छल्ली** । स्त्री । भृङ्गच्छल्लीलतायाम् ।

**भ्रमरत्वचा** । स्त्री । भ्रमरच्छल्लाम् । वम् भ वरमाली । वै.निघ ।

**भ्रमरप्रियः** । पु । धाराकदम्बे । र मा. ।

**भ्रमरबान्धवा** । स्त्री । यूथजातीवृक्षे । वै. निघ. । [नि व.१० ।

**भ्रमरमारी** । स्त्री । भ्रमरारिपुष्पवृक्षे । रा.

**भ्रमरा** । स्त्री । भृङ्गच्छल्लीलतायां । रा.नि.व ७।

**भ्रमरातिथिः** । पु । चम्पकवृक्षे । रा.नि.व १० ।

**भ्रमरानन्दः** । पु । बकुलवृक्षे । रक्ताम्लान वृक्षे । ब्रह्मयष्टि । स्त्री । अतिमुक्तकपुष्पवृक्षे । रा. नि व १० ।

**भ्रमरारिः** । पु । पुष्पवृक्षविशेषे । भ्रमरमारी इति मालवे प्रसिद्ध । गुणा —तिक्त वात(पित्त)- श्लेष्मज्वरापह शोथकण्डूकुष्ठव्रणविदोषघ्न । रा नि.व.१० । [नि व.८ ।

**भ्रमरासनः** । पु । मूषक । गरुडप । र.

**भ्रमरी ।** स्त्री । जतुकायाम् । पुत्रदावायाम् । भ्रमर्याम् । गुडूच्याम् । रा.नि.व.२३ । भ्रमरारिपुष्पवृक्षे । रा.नि.व.१० ।

**भ्रमरेष्टः ।** पुं । पृथुशिम्बश्योणाकवृक्षे । बड़ सोंटा श्योणा गाछ । रा.नि.व.८ । स्त्री । भार्ग्यां । रा.नि.व ११ । [भि.व.१० ।

**भ्रमरोत्सवा ।** स्त्री । माधवीलतायाम् । रा.

**भ्रमिः ।** स्त्री । मूर्च्छायाम् ।

**भ्रमिका ।** स्त्री । धातकीवृक्षे । वै.निघ. ।

**भ्रष्टगुदः ।** त्रि । गुदभ्रंशरोगिणि । च.द. ।

**भ्रस्थुः ।** पु । नासारोगभेदे । निदा. ।

**भ्राजकः ।** पुं, क्ली । तत्रामकपित्ते । पित्तविशेष । म.च. । तस्य स्थानं त्वक् । तस्य कर्म छायाप्रकाशकत्वम् अभ्यङ्गादिक्रियाणाञ्च पाचकत्वम् । सु.सू.२१ष. ।

**भ्रान्तः ।** पुं । पीतधुस्तूरवृक्षे । रा.नि.व.१० ।

**भ्रान्तिः ।** स्त्री । भ्रमे । सा च रज पित्तानिलजा भवति । "रज पित्तानिलैर्भ्रान्तिः ।" शार्ङ्ग. पू.६ष. ।

**भ्राम(मि)कः ।** पुं । सूर्य्यावर्त्ते । शृगाले । चुम्बकप्रस्तरे । मे. । कान्तलौहविशेषे । रा.नि.व.१३ ।

**भ्रामरम् ।** क्ली । भ्रमराहृतमधुनि । नकुल.१२ अ. । इहलताम्रतलौहे । तदुक्तं ये स्निग्धाञ्जनगोलाभा. पुष्पासवपरायणा. । भ्रमरैर्जनित तैस्तु भ्रामर मधु भण्यते ॥ गुणा —मधुरं पिच्छिलं रुच सुखजाड्यहरं श्वेतवर्णञ्च । रा.नि.व.१४ । "शीत कषाय मधुरं लघु स्यात् सन्दीपनं लेहनमेव शस्तं । संशोधनञ्च व्रणशोधनञ्च संरोपणं हृद्यतमञ्च बल्यं । त्रिदोषनाशं कुरुते च पुष्टिं कासे क्षये वा चतजे च छर्द्दौ । हिक्काभ्रमे शोषणपीनसाना रक्तप्रमेहे सरक्तातिसारे । रक्तातिसारे च सपित्तरक्ते व्रणी हृत्पार्श्वरुजेऽपि शस्तम् । नेत्रामये वा बहुलोगदे वा विषे प्रशस्तं भ्रमरैर्यत यत् । भ्रामर सघनं जाड्यभूयिष्ठ मधुरञ्च यत् । चौद्रं विशेषतो ज्ञेयं शीतलं लघु लेहनम् । भ्रामर उच्चस्थाने विटपे सारघं भवेत् । रन्ध्रे तु कोटरे वापि चौद्रं तत्र प्रशस्यते ॥" अत्रि.१८ष., पु । प्रस्तरभेदे । चुम्बुक पाथर । मे. ।

**भ्रामरशर्करा ।** स्त्री । भ्रामरमधुकृतशर्करायाम् । गुणाः—भ्रामरमधुतुल्या. । रा.नि.व.१४ ।

**भ्रामरी ।** स्त्री । पुत्रदावीलतायां रा.नि.व.३। नकुल.१२अ ।

**भ्रामितः ।** त्रि । रोगिणि । रा.नि.व.२० ।

**भ्रामिताचः ।** पुं । अश्वस्य वातव्याधिविशेषे। लक्षण यथा—"वक्र. पश्चिमकायेन मण्डलैर्यो विचेष्टते । मन्दग्रासश्च दीनश्च भ्रामिताची स्तोऽश्वतः ॥" ज.द.४५ष. । [श्रम. ।

**भ्राष्टः ।** पुं,क्ली । भर्जनपात्रे । भाजनाखोला।

**भ्राष्ट्रजा ।** स्त्री । खर्परपोलिकायां । वै.निघ.।

**भ्रुकुटिः ।** स्त्री । भुवि । वै.निघ. ।

**भ्रुकुटीमुखः ।** पु । दर्व्वीकरसर्पविशेषे । सु. कल्प ४ष. । See सर्पः ।

**भ्रूः ।** स्त्री । भूदेशे । भुरु । वै.निघ. ।

**भ्रूणः (कः) ।** पुं । बालके । गर्भे । भम. । ह्रीवेरे । वाला । रस.रं.तिक्तकष्टते ।

---

## म

**मः ।** पुं । ब्रह्मणि । एका.कोषः । विधौ । मे ।

**मकरः ।** पुं । मत्स्यविशेषे । मकर । "मत्स्यानां मकरः श्रेष्ठो दीपनो वातनाशनः । रुचिप्रदः शुक्रकरयास्सरीदोषनाशन. ॥" अत्रि.२२ष । स-भ्रामकाग्निप्रकृतिकीटे । सु.कल्प.८ष. ।

**मकरध्वजः ।** पुं । रसायनाधिकारे औषधविशेषे । "स्वर्णस्य भागौ वङ्गस्य मौक्तिकं कान्तलौहकं । जातीकोषफले रूप्य कास्यकं रससिन्दुरम् । प्रवालं कस्तुरी चन्दनमकचैकभागिकम् । स्वर्णसिन्दूरतो भागाश्चत्वारः कल्पयेद्बुधः ॥" स्वर्ण २ भ. वङ्ग १ भ. मुक्ता १ भ लौह १ भ. जायफल १भ. जयित्री १भ. रूपा १भ काँसा १भ. रससिन्दुर १ भ. प्रवाल १ भ. मृगनाभि १ भ.

कर्पूर.१ ভ. अभ्र १ ভ. स्वर्णसिन्दूर ४ ভ.। र.सा.सं.।

**मकरन्दः** । पुं । मधुनि । प.मु.। कुन्दपुष्पे। कुन्दफुलेर गाछ। पद्मकेसरे। रा.नि.व.१०। क्लो। किञ्जल्के। रा.नि.व.१०। आम्रभेदे। कोकिलाक्षे। वै.निघ.। पुष्परसे। भा.।

**मकरन्दजम्** । क्ली । ह्रीवेरे। वाला। प.मु.।

**मकरन्दवती** । स्त्री । पाटलपुष्पवृक्षे। श.च.।

**मकरन्दवासः** । पुं । धूलीकदम्बे । रा.नि.व.८।

**मकराकरः** । पुं । कण्टककरञ्जे । श च.।

**मकरी** । पुं । सन्निपातज्वरविशेषे।

**मकुरः (लः)** । पुं । बकुलवृक्षे । कोरके। हे च.। श.र.। [ध.मु.२७थ.।

**मकु(कू)लकः** । पुं । दन्तीवृक्षे । थ.टी.र।

**मकुष्टः (ष्ठः) (कः)** । पुं । (Phaseolus aconitifolius) वनमुद्गे । वनमुग । हिं मुकुट, मोट, मुगानी। तें वनमुद्गचेट्टु। मकुष्ठक इति मालवदेशे प्रसिद्धः। गुणाः—कषायः मधुरः रक्तपित्तघ्नः ज्वरदाहघ्नः पथ्यः रुचिकृत् त्रिदोषहरश्च। रा.नि.व १६। "सरक्तपित्तकफवातहन्ता ग्राही कषायो मधुरः प्रदिष्टः। ग्राही सुशीतो गुदकील गुल्मं मकुष्ठकः सर्व्वगदान् निहन्ति ॥" अत्रि.१५ अ.। तन्मूषगुणाः—"मकुष्ठमूषोऽल्पबलः पाचनो दीपनो लघुः। चक्षुष्यो कंठ्यो हृद्यः पित्तश्लेष्मास्रदोषनुत् ॥" द्रव्यगुणः। [च.वि.७थ.।

मक्किल्लः। पुं। क्रिमिरोगे, पुरीषजक्रिमिविशेषे।

**मक्कलः (ल्लः)** । पुं । वातजशूलरोगे । गर्भमोचनान्ते वातशोणितजशूलार्त्तिविशेषे। হেতাল दाथा। लक्षणं—"वायुः प्रकुपितः कुर्य्यात्संरुध्य रुधिरं सुतम्। सूताया हृच्छिरोवस्तिशूलं मक्कलसंज्ञकम् ॥" मा नि.।

**मक्कुलम्** । क्ली । शिलाजतुनि। श.र.।

**मक्कोलः** । पुं । खटिकायाम्। খড়ি। त्रिका.।

**मखप्रभुः** । पुं.। रक्तसोमलतायाम्। वै.निघ.।

**मखान्नम्** । क्ली । पद्मबीजसदृशबीजे। हिं मखाना। "मखान्नं पद्मबीजाभं पानीयफलमित्यपि।" गुणाः—"मखान्नं पद्मबीजस्य गुणैस्तुल्यं विनिर्दिशेत्।" भा.। [चि.मूत्रादिगुल्मा।

**मगधम्** । क्ली । पिप्पलीमूले । वै.निघ वटी.

**मगधजा** । स्त्री । पिप्पल्याम्। পিপুল গাছ। वै.निघ.वि.ज्व.चि.।

**मगधजाफलम्** । क्ली। पिप्पल्यां। পিপুল। च.द.गुल्म.चि.भार्गीषट्पलकघृते।

**मगधा** । स्त्री । पिप्पल्या । प.मु.। वै.निघ.२ भ कर्णकज्व चि.। [शि.यो अग्निमान्द्यचि.।

**मगधोद्भवा** । स्त्री । पिप्पल्यां । रा.नि.व.६।

**मघम्** । क्ली । औषधे । पुष्पविशेषे । श.र.।

**मघा (घी)** । स्त्री । औषधविशेषे । धरणिः। धान्यविशेषे। मे.।

**मङ्गलच्छदा (च्छायः)** । स्त्री, पुं । प्लक्षवृक्षे। পাকুড় গাছ। रा.नि.व.११। [निघ।

**मङ्गलप्रदा** । स्त्री । हरिद्रायां । शमीवृक्षे । वै.

**मङ्गला** । स्त्री । शुक्लदूर्व्वायां । श.र.। हरिद्रायां। रा.नि.व.६। नीलदूर्व्वायां। रा.नि.व.८। करञ्जभेदे। श.च.। मङ्गल्यागुरुणि। रा नि.व.१२। चवड़ी। कुड़ी। त्रायमाणायाम्। वै.निघ.। [१२।

**मङ्गलागुरु** । क्ली । मङ्गल्यागुरुणि। रा.नि.व.

**मङ्गल्यम्** । क्ली । दधनि । अम्लदधनि। मे.। स्वर्णे। सिन्दूरे। रा.नि.व.१३। कृष्णागुरुकाष्ठे। प.मु.। श्रीखण्डचन्दने। শ্বেত চন্দন। रा.नि व.१२। पुं। बिल्ववृक्षे। र.मा.। मसूरके। रा.नि.व.१६। जीवकर्षुपे। रा.नि.व.५। नारिकेलवृक्षे। कपित्थवृक्षे। रा.नि.व.११। रीठाकरञ्जे। रा.नि.व.८। अश्वत्थवृक्षे। मे.। जलमधूकवृक्षे। वै निघ.। [धा.व.।

**मङ्गल्यकः** । पुं । मसूरकलाये। भा.पू.१भ.

**मङ्गल्यकुसुमा** । स्त्री। शङ्खपुष्प्यां। भा। [टा.।

**मङ्गल्यनामधेया** । स्त्री । जीवन्तीवृक्षे। श-

**मङ्गल्यपुष्पी** । स्त्री । शङ्खपुष्प्याम्। वै निघ.।

**मङ्गल्या** । स्त्री । पीड़ानामदेवदारुभेदे। प्रियङ्गौ। मङ्गल्यागुरुणि। रा.नि.व.१२। शङ्खपुष्प्यां। मसूरे। मूर्व्वायां। दुर्गायां। र.मा.। ऋद्धौ। रा.नि.

व.११२३। अमीरत्वे। रा.नि.व.८।२३। अथ पु ष्पां। टोर्न बाँ०कि। गोरोचनायां। हरिद्रा यां दूर्व्वायां। प.मु.। शल्लकचायां। रा.नि.व ८। माषपर्ण्यां। रा.नि.व ३।२३। जीवन्तीलता यां। वचायां। कट्वां। रा.नि.व.३।५।६।२३। म ञ्जिष्ठायां रा.नि.व २३। मल्लिकापुष्पवृक्षे। सु ङ्गपर्ण्याम्। वै.निघ.।

**मङ्गल्यागुरु** । क्ली। स्वनाम्ना केदारदेशे प्रसि द्धागुरुणि। गुणा:—शीतलं गन्धाढ्यं योगवाहि कञ्च। रा.नि.व १२। [नि.व ५।

**मङ्गल्याह्वा** । स्त्री। त्रायमाणालतायां। रा.

**मङ्गुरः** । पु। मत्स्यविशेषे। मागुर माछ। वै. निघ.। [हारा।

**मङ्ग(ङ्क)णम्** । क्ली। अङ्गाचार्ये। ज्रोंशिया।

**मच्छः** । पुं। मत्स्यसामान्य। श.र.।

**मज्जकृत्** । क्ली। अस्थनि। हे.च।

**मज्जगतज्वरः** । पु। तदाश्रितज्वरविशेषे। मज्जागतज्वर। लक्षणं यथा—"तम प्रवेशन हि- क्का कास. शैत्य वमिकथा। अन्तर्दाही महाश्वास। मर्मच्छेदश्च मज्जस्थे। मज्जयुक्ते क्रिया नोक्ता मरण तत्र भाषितम्॥" वै.निघ.। [निघ.।

**मज्जदमनी** । स्त्री। वन्ध्याकर्कोटिकायाम्। वै.

**मज्जनम्** । क्ली। स्नाने। जटा। मज्जायां। श.च.। [पिण्डर्व्वे। मैत्र.यांश्ची।

**मज्जफलम्** । क्ली। माजूफलमिति प्रसिद्धे व

**मज्जरः** । पु। तृणविशेषे। माजुर तृण। मं पवना। कं रुचि। गुणा:—मधुर: पित्तदुग्धकरश्च। रा.नि.व.८।

**मज्जसमुद्भवम्** । क्ली। शुक्रे। हे च.।

**मज्जा (न्)** । पु, स्त्री। हृदादिरक्त.सारभागे। सार। चम। अस्थ्य: मूढकेहभागे। स च जा- त्वस्थिमध्यग तस्य कर्म्म पूरणम्। "केहोऽस्थ्: य विरेच स्यात् स मज्जा कथितो बुधै:।" भा.पाद- दारोपि.। "अस्थि यत् स्थापितं पक्व तस्य सारो भवेदन। य: स्नेदवत् पृथग्भूत. स मज्जेत्यभिधी- यते॥" इति स्वरूपम्। मज्जस्थानं यथा—"स्थ लोस्थिषु विशेषेण मज्जा लभ्यन्तरे स्थित:।" अप तृतीया मेदोधरा नाम, मेदोहि सर्व्वभूतानामुद- रस्थमण्वस्थिषु महत्सु मज्जा भवति। सु.शा.४अ। अस्थिसारे। आँटिर शाँस। रा नि व.१८ गुणा: —"यस्य यस्य फलस्येह वीर्य्यं भवति यादृशं। त- स्य तस्यैव वीर्य्येण मज्जानमपि निर्द्दिशेत्॥" सु.सू. ४६अ। मज्जगुणा.—"बलशुक्ररसश्लेष्ममेदोमज्ज- विवर्द्धन.। मज्जा विशेषतोऽस्थ्नाञ्च बलकृत् स्नेहने हित॥" च। वातघ्नी पित्तकफबलकरो मास- तुल्यगन्धरूपा च। कुम्भीरमहिषमज्जगुणा:—म- धुरा वृहणी बल्या च। मज्जसत्त्वगुणौ—शैत्यमुष्ण- त्वञ्च। राज.।

**मज्जा(नु)गतम्** । क्ली। काण्डभग्ननामास्थि- भङ्गरोगे। "अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जा- नमनुप्रयाति।" सु नि.१५अ।

**मज्जाजः** । पुं। भूमिजगुग्गुलौ। रा.नि.व.१२।

**मज्जामेहः** । पु। मज्जगतप्रमेहे। निदा.।

**मज्जारजाः** । पुं। गुग्गुलौ। वै.निघ.।

**मज्जावहस्रोतः** । पुं। मज्जधातुवाहकना- डाम्। तस्य मूलम् अस्थीनि सन्धयश्च। च.वि. ५अ.।

**मज्जारसः (सारः)** । पुं। शुक्रे। रा.नि.व. १८। सप्तधातुम्। मनसाविशेष। वै निघ.।

**मज्जासारम्** । क्ली। जातीफले। रा.नि व.१२।

**मज्जिका** । स्त्री। लवणाकन्दे। वकस्थियाम्। वै निघ।

**मञ्चकपर्च्ची** / **मञ्चिपत्रम् (त्री)** } स्त्री, क्ली। सुरपर्ण्याम्। रा.नि.व १० गुणा:— तिक्ता उष्णा पित्तला विषघ्नी कफवातज्वरकास- क्रमिघ्नी। वै.निघ.। [रा.नि.व.१९।

**मञ्चकाश्रयः** । पुं। मत्कुणाम्। मत्कुणे।

**मञ्जरम्** । क्ली। मुक्तायां। श.र.। तिलकवृक्षे। श.र.। मञ्जर्यां। त्रिका.।

**मञ्जरिः** । पुं। वल्लर्यां। श्रम.।

**मञ्जरी (का:)** । स्त्री,पुं। गन्धतुलस्यां। प.मु.। मुक्तायां। तिलकवृक्षे। श.र.। तुलस्यां। रा.नि. व.१०। वेतसलतायाम्। चमीकवृक्षे। वै.निघ.।

**मञ्जरीनम्रः** । पुं। वेतसे। वेत। रा.नि. व.९।

**मञ्जा ।** स्त्री । छागे । छाग्याम् । वै.श ।

**मञ्जिः (ञ्जी) ।** स्त्री । मञ्जर्य्यां । त्रिका. ।

**मञ्जिफला ।** स्त्री । कदलीवृक्षे । त्रिका. ।

**मञ्जिष्ठः (ष्ठा, ष्ठिका) ।** पु, स्त्री । (Rubia cordifolia, Syn. R. Mañjishtha) Indian madder, स्वनामख्यातलतायां । मञ्जिष्ठा । च सु. । हि मम. मजीठ, मञ्जिठि । में मञ्जिष्ठतोंडी, ताम्रवल्ली । ता मञ्जिट्टी । फा. रमास । गुणा —मधुरा कषाया उष्णा गुरु व र्णमेहज्वरश्लेष्मविषनेत्ररोगघ्नी च । घोलयोजनी कौशी सिंहली चेति तद्भेदा । एता सर्वा वि शेषेण गुणोत्तरा ज्ञेया । रा नि व ६ । सु चि १० प । च द वि.ज्व चि लाक्षादितैले । "मञ्जिष्ठा वे न्द्राक्षो ।" पक्षाघातकामलासु हिता मूत्रस्रोतो विशोधनी च । फल यकृद्दोषहर मूलं चर्म्मविवर्ण ताहर तिलकालकघ्न च । कश्चिद्न्यगुण ।

**मञ्जिष्ठमेहः ।** क्ली । पित्तजन्यप्रमेहरोगे । य च रोगी मञ्जिष्ठोदकप्रकाश मेहति । सु नि ६ च ।

**मञ्जिष्ठाद्यघृतम् ।** क्ली । शारीरव्रणाधिकारे घृत । "मञ्जिष्ठा चन्दनं मूर्व्वां पिष्टा सर्पिर्विपाचयेत् । सर्व्वेषामग्निदग्धानामेतद्रोपणमिष्यते ॥" रस र. ।

**मञ्जिष्ठाद्यतैलम् ।** क्ली । क्षुद्ररोगाधिकारे तैलम् । 'मञ्जिष्ठा मधुक लाक्षा मातुलुङ्ग सयष्टिक । कर्षप्रमाणैरेतैस्तु तैलस्य कुडव पचेत् । आज पयस्तद्द्विगुण शनैर्मृद्वग्निना पचेत् । नीलिकापिडकाव्यङ्गानभ्यङ्गादेव नाशयेत् ॥" तिलतैलं ॥० श. । कल्कार्थे —मञ्जिष्ठा मधुकपुष्पं (मउल फूल) लाक्षा (लाहा) मातुलुङ्गमूल (टाबामूल) यष्टिमधु प्र. २ तो. छागदुग्धं १ श. । रस.र. ।

**मञ्जुगमना ।** स्त्री । हंस्याम् । रा नि व १९ ।

**मञ्जुघोषः ।** पु । कपोते । वै.निघ. । [१९ ।

**मञ्जुपाठकः ।** पु । शुकपक्षिणि । रा नि.व.

**मञ्जुलः ।** पु । जलरङ्कपक्षिणि । मे. । तित्तिरपक्षिणि । हरिणभेदे । अञ्जीरवृक्षे । वै निघ । क्ली । अञ्जीरे । आंजीर । राज. । स्त्री । मञ्जिष्ठायाम् ।

**मञ्जूषा ।** स्त्री । मञ्जिष्ठायां । रा.नि.व.६ ।

**मट्ट(ड्ड)कः ।** पु । भक्ष्यविशेषे । माड़ुआ । मटा ।

**मणिः (णी) ।** पुं, स्त्री । स्फटिकादिरत्ने, स प्तादौ । त्रिका । गुणा —"मणिरत्नं सर मौर्त कषायं स्वादु लेखन । चक्षुष्य ... ।" राज । पञ्चाङ्गमहने । मे । शिश्नाग्रमण्यौ । शिश्नमूर्द्धा. चि । मणी, भागी । मा म १भ.मूत्रोत्सङ्ग.चि । मणिबन्धे । हे.च. । योन्यग्रभागे । श.र ।

**मणिकण्ठः ।** पु । चासपक्षिणि । वै.निघ. ।

**मणिकाननम् ।** क्ली । माने । कण्ठे । श र. ।

**मणिच्छिद्रा ।** स्त्री । मेदायां । प मु । रा. नि व ५ । महामेदायाम् । मध्वाधोम् । वै निघ । ऋषभकौषधे । मे. । [व.१९ ।

**मणितारकः ।** पु । सारसपक्षिणि । रा नि.

**मणितुण्डः ।** पुं । वकायाम् । वै निघ. ।

**मणिपूरम् ।** क्ली । आमाशयकुक्षे ।

**मणिबन्धः ।** पु । करमूले । হাতের কব্জি । रा नि व.१८ । भा.मसूरी.चि ।

**मणिभावरः ।** पु । सारसपक्षिणि । वै निघ. ।

**मणिमन्थम् ।** क्ली । सैन्धवलवणे । रा.नि.व.६ । वै निघ श्वास चि.शिलाद्यवलेहे । [वै.निघ. ।

**मणिमन्दिरम् ।** क्ली । मुक्तागृहे । झिनुक ।

**मणिरत्नम् ।** क्ली । हीरके । वै निघ. । [१३ ।

**मणिराग(ज)म् ।** क्ली । हिङ्गुले । रा नि व.

**मणिरामः ।** पु । ग्रन्थरत्नमालाकर्त्तरि ।

**मणिवरः ।** पु । हीरकमणौ । হীরে । भा. ।

**मणिवीजः ।** पु । दाडिमवृक्षे । रा.नि.व.११ । जीरके । वै निघ. ।

**मणीचकम् ।** क्ली । चन्द्रवर्णरौप्ये । চান্দি ব পা । त्रिका. । पु । चन्द्रकान्तमणौ । वै निघ । मत्स्यरङ्कपक्षिणि । माछ्रांङा पाखी । हारा. ।

**मणीयकम् ।** क्ली । पुष्पे । उ.च. ।

**मण्टपी ।** स्त्री । क्षुद्रोपोदिकायां । रा.नि.व७

**मण्टूरम् ।** क्ली । मण्डूरे । मण्डूर । वै निघ. ।

**मण्ठः (क) ।** पुं । घटकाकारपिष्टकविशेषे । हि मांड़ा । यथा—"समिता मर्द्दयेदाज्यैर्जलेनापि

च मर्दयेत्। अस्मात्तु वटकहत्वा पचेत्सर्पिषि नीरसम्। एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते। मध्ये खिला सितापाके तत्तत्र समुद्धरेत्। अयमप्रकारः संसिद्धो मण्ड इत्यभिधीयते॥" गुणाः—"मण्डस्तु वृंहणो हृद्यो बल्यः सुमधुरो गुरुः। पित्तानिलहरो वृष्यो दीप्ताग्नीना सुपूजितः॥" रा नि व १०।

**मण्डम्।** क्ली, पुं। सारे। पिच्छे। दध्यादिसारे। माड, मयेर माद। क्ली। मस्तुनि। मे।

**मण्डः।** पुं। एरण्डवृक्षे। प सु। यवादिसाधितसिक्थकरहितद्रव्यविशेषे। मण्ड, माड। "सिक्थकैरहितो मण्डः।" स च चतुर्दशगुणाम्बुसाधितः सिद्धः अर्थात् तण्डुलपरिमाणापेक्षया जलविमगुणजले सिद्धः। "मण्डश्चतुर्दशगुणे।" च.द. ज्व चि.। "जले चतुर्दशगुणे तण्डुलानां चतुष्पलं। विपचेत्स्रावयेन्मण्ड. सभक्तो मधुरो लघुः। नीरे चतुर्दशगुणे सिद्धो मण्डस्त्वसिक्थकः॥" प म २ ख.। गुणाः—"तण्डुलानां सिक्थहीना पेया चाग्निप्रदीपनी। ग्राहिणी लघुशीता च पाचनी वातलोमनी। धातूनाञ्चैव नाडीनां मृदुत्वस्वेदकृन्मता। तृषायमासृरीपित्तातीसारकफदोषहा॥" वै.निघ.। अष्टगुणवारिसिद्धे मण्डे। स चाग्निमान्द्ये हितः। सि.या.अग्निमा चि.। गुणाः—"क्षुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च। ज्वरापहारी कफपित्तहन्ता वायुं नयेदष्टगुणो हि मण्डः॥" राज.३प.। भेके। भूमके। शाकभेदे। मे.। मस्तुनि। सारे। पिच्छे। ह.च.।

**मण्डकः।** पुं। मण्डे। जातीपुष्पवृक्षे। पिष्टकविशेषे। हिं माँड़ा। "वारिणा कोमलाङ्गत्वा समितां साधु मर्दयेत्। हस्ताभ्यां तथा लोप्त्रीं सम्यक् प्रसारयेत्। अधोमुखघटस्यैतां विस्तारामभिनिवेशयेत्। मृदुना वह्निना साध्यः सिद्धो मण्डक उच्यते॥ दुग्धेन साज्यखण्डेन मण्डकं भक्षयेन्नरः। अथवा सिद्धमांसेन सलवणवटकेन वा ...॥" गुणाः—"मण्डको वृंहणो हृद्यो बल्यो रुचिकरो भवे। पाके पि मधुरो ग्राही लघुर्दोषत्रयापहः॥" भा.। लांभी = मैथी।

**मण्डनः।** पुं। मधुमाधवीलतायाम्। वै.निघ. १म.तैल्वादिवर्गे।

**मण्डपः।** पुं। माधवीलतायाम्। वै निघ.।

**मण्डपा।** स्त्री। निष्पाव्यां। रा.नि.व.१६।

**मण्डपारोहः।** पुं। सुखालौ। रा.नि.व.७।

**मण्डपी।** स्त्री। क्षुद्रपत्रीपोदक्यां। क्षुद्रपत्र पूंई। रा.नि.व.७।

**मण्डयन्तः।** पुं। अन्ने। उणा.।

**मण्डरी।** स्त्री। घुर्घुरिकायाम्। हारा।

**मण्डल(क)म्।** क्ली। पिटकवन्मण्डलयुक्तचर्मरोगे। चाका दाग। कोठरोगे। शीतपित्तरोगे। रा.नि.व.२०। मा नि.। नखीनामगन्धद्रव्ये। श.च.। पुं। उदर्दरोगे। सर्पभेदे। व्रणेऽङ्गे व्रणबन्धभेदे। "मण्डलं वेष्टनाकारं विदध्यादिति लक्षण।" सु.स.१८अ.। कुक्कुरे। त्रिका। अष्टचत्वारिंशद्दिवसेषु। ४८ दिन। "सप्ताष्य मण्डलं पथ्याढ्यं निष्काशयेत्ततः।" अर्क.चि.।

**मण्डलच्छदा।** स्त्री। शुक्लपुनर्नवायाम्। वै.निघ.। [रा.नि.व.५।

**मण्डलपत्त्रिका।** स्त्री। रक्तपुनर्नवायाम्।

**मण्डलपुच्छकः।** पुं। तन्नामकप्राणहरकीटे। सु.कल्प.८अ.। [तै इचे। वै.निघ.।

**मण्डलशुक्लभाक्।** पुं। आनाहम इति ख्या-

**मण्डलसन्धिः।** पुं। कण्ठहृदयनेत्रक्लोमनाडीषु मण्डलाकारसन्धौ। सु.शा.५अ.।

**मण्डला।** स्त्री। कुमार्याम्। घृतकुमारी। दूर्वायाम्। वै.निघ.।

**मण्डलाग्रम्।** क्ली। मण्डलमिवाग्रं यस्येति। स्वनामख्यातषडङ्गुलशस्त्रविशेषे। लक्षणं यथा—"वृद्धिपत्रं मण्डलाग्रमिव वा। मण्डलाग्रं ज्ञानीयात्प्रमाणन्तु षडङ्गुलम्॥" सु.सू.८अ.।

**मण्डली (इन्)।** पुं। वटवृक्षे। रा.नि.व.११। सर्पे। त्रिका.। गोनससर्पे। रा.नि.व.१९। कृकलासे। हे.च.। बिडाले। श.मा.। कर्कटे। भौमसर्पजातौ। "प्रिया मण्डलिनो भोगाः मण्डलैर्विविधैश्चिताः। प्रांशवो मन्दगमनाः..." वा. उ.३६अ.। वै.निघ। तद्भेदाः—"आदर्शमण्डलश्वेतमण्डलरक्तमण्डलचित्रमण्डलपृषतरोध्रपुष्पमिलिन्द

कमीनसङ्गगोनसर्षनसमच्छायनसवेणपत्रकशिपक बभ्रुकषायकलुषपारावतकमाभरणचित्रकैणीपदा येति। तदृष्टलक्षणमाह—मण्डलिदष्टस्य प्रथमे वेगे रक्तं दुष्टं पीतीभवति। तेन च पीताङ्गता दाहश्च। द्वितीये श्वयथुः। तृतीये दंशमरिक्लेदादय। चतुर्थे ज्वरो दाहश्च। पञ्चमे सर्वशरीरदाहश्च भवति। वा.उ.३६अ.। स्त्री (ली)। दूर्व्वायाम्। हारा.। घृतकुमार्य्याम्। गुडूच्याम्। वै.निघ.।

**मण्डा** । स्त्री। मेथिकायाम्। प.मु.। मद्ये। हारा.। आमलक्याम्। मे.।

**मण्डूकः** । पु। भेके। व्याङ्। स अष्टविध.—क्षण-सार कुहक हरित रक्त यववर्णाभ भृकुटी कोटिका इति। तद्दंशे दंशकण्डू पीतफेणागमश्च। सु.कल्प.८अ.। पृथुशिम्बश्योणाकवृक्षे। बड़ शोणागाछ। रा.नि.व.९। पुण्डरीकवृक्षे। भू-ण्डविर्शा। वै.निघ.। मण्डूकपर्ण्याम्। थुलकुड़ि। भैष.अ.पि.चि.सुधावतीगुटिका। अश्वस्य खुरतलप्रदेशे। ज.द.।

**मण्डूकता (तापः)** । स्त्री, पुं। अश्वस्य पादरोगविशेषे। लक्षणं यथा—"मण्डूकतापो मण्डूका वधिनामस्य जायते। अभिघातसमुत्थेन दुष्टकर्दमकेन च॥" ज.द.३९अ.।

**मण्डूकपर्णः** । पु। श्योणाकवृक्षे। अम.। पाटलावृक्षे। वै.निघ। शोणके। मे।

**मण्डूकपर्णी** । स्त्री। (Hydrocotyle Asiatica) Asiatic Penny wort. स्वनाम ख्यातशाके। थुलकुड़ि, थालकुनि। हि ब्रह्मन्डुकि, ब्रह्ममाण्डूकी। तैं मण्डूकब्रम्ही। ता. वल्लरैकीरै। बम्, ब्रह्मी। रा.नि.व.१२। गुर्वेन्द्राश्योषधिरूपे। गुणा—कासघ्नी स्वादुपाकरसा हिमा च। राज.३प.। भैष.। महामजघ्नी। अस्य पत्र कुष्ठे उपदंशे च परमहितं। चर्म्मरोगे नाड़ीव्रणे च हितम्। इष्टफलम्। मञ्जिष्ठायाम्। रा.नि.व.६। २१। च.सू.४अ। आदित्यभक्तायाम्। रा.नि.व.४।२३। पृथुशिम्बश्योणाकवृक्षे। बड़ शोणा गाछ। रा.नि.व.९। शालपर्ण्याम्। पाटलायाम्। वै.निघ.। ब्राह्म्याम्। ब्रह्मी शाक। भा.प्र.रसायने। "मण्डूकपर्ण्या स्वरस। तदभावे

**मण्डूकमाता** । स्त्री। ब्राह्मीक्षुपे। रा.नि.व.५।

**मण्डूका** । स्त्री। मञ्जिष्ठायाम् श.मा.। मण्डूकपर्ण्याम्। थुलकुड़ि। प.मु.। आदित्यभक्तायाम्। हुडहुडिया। रा.नि.व.४।

**मण्डूकी** । स्त्री। मण्डूकपर्ण्याम्। थुलकुड़ि। र.मा.। आदित्यभक्तायाम्। रा.नि.व.४। ब्राह्मीक्षुपे। रा.नि.व.५। जलब्राह्मी। सु.चि.१अ.। अश्वस्य खुरतलभागे। ज.द.२अ. भेकपत्न्याम्।

**मण्डूरम्** । क्ली, पु। लौहमले। मर्चा। प.मु.। अस्य करणविधि—"अक्षाङ्गारैर्धमेत् किट्टं लौहजं तद्वत्का जले। सेचयेत्तप्ततप्तञ्च सप्तवारं पुनः पुनः। चूर्णयित्वा ततः क्वाथैर्हिंगुणे त्रिफलाद्रवे। आलोड्य भर्जयेदग्नौ मण्डूरं जायते म रम्। यल्लौहं यद्गुणं प्रोक्तं तत्किट्टं चापि तद्गुणम्। शतोर्द्धमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम्। अधमं षष्टिवर्षीयं ततो हीनं विषोपमम्॥" रस.चि.७अ.।

**मण्डूरवटकः** । पु। पाण्डुरोगे औषधम्। "त्रिफलाचूर्णं मुस्ता विडङ्ग चव्यचित्रकौ। दार्व्वीत्वक् माक्षिका धातु ग्रन्थिकं देवदारु च। एतान् द्विपलिकान् भागान् चूर्णान् कुर्यात् पृथक् तथा। मण्डूरं द्विगुणं चूर्णात् शुद्धमञ्जनसन्निभं। गोमूत्रेऽष्टगुणे पक्त्वा तस्मिंस्तत्प्रक्षिपेत्ततः। उदुम्बरसमान् कृत्वा वटकान् तान् यथाग्निना। उपयुञ्जीत तक्रेण॥" च.चि.२०अ.।

**मतङ्ग(रा)जः** । पु। हस्तिनि। अम.।

**मतिः** । स्त्री। बुद्धौ। अम.। इच्छायाम्। मे। शाकविशेषे। मत्स्यकन्दे चञ्चलपालङ्कः।

**मतिदा** । स्त्री। गिरिकर्णीक्षुपे। रा.नि.व.४। ज्योतिष्मतीलतायाम्। रा.नि.व.३।

**मतिविभ्रंशः** । पुं। बुद्धिवैपरीत्ये। श.र.।

**मतिविभ्रान्तिः** । पुं। उन्मादरोगे। रा.नि.व.२०।

**मत्कः** । पु। मत्कुणे। छारपोका। श.मा.।

**मत्कुणः** । पु। कीटभेदे। छारपोका। रा.। मे.। अ

हिषे । वै निघ । स्त्री । केशरहितस्त्रीयोनौ । श
र । [श मा ।

**मत्कुणारि** । पु । शणवृक्षे । भङ्गायां । शिक्षि ।

**मत्त** । पु । धुस्तूरवृक्षे । रा नि व १० । को
किले । महिषे रा नि व १९ । त्रि । उन्मत्ते ।

**मत्तकाशिनी** । स्त्री । उन्मत्तस्त्रियां । अम ।

**मत्तकीश** । पु । हस्तिनि । श मा ।

**मत्तवारणम्** । क्ली । पूगफलचूर्णे । श मा. ।
कुन्दरुचहतो । कुँदरुश । (बडा । मे । पु ।
मतङ्गजनि । [याम् । शिक्षि । वै निघ ।

**मत्ता** । स्त्री । मद्ये । रा नि व १४ । विजया

**मत्ताख्य** । पु । कोकिले । वै निघ ।

**मत्स (त्स्य)** । पु । जलचरजन्तौ । माछ । ते
बहुविध । नानाजातीयाश्च । यथा—"रोहितो म
द्गुरो शौकुलबालको वरस्तथा । कागलो रक्तमत्स्यो
ऽथ महिषश्च चिलीचिम । वातूक खलमीमा च
सया शभविषादय । तेषां विशेषा पर्यायेषु
ज्ञेयाः । साधारणतः मत्स्यमांसगुणाः स्निग्धम्
उष्णं गुरु रक्तपित्तजनकं वातहरञ्च । "निःशल्का
निन्दिता मत्स्याः सर्वे शल्कयुता हिता । वपु
स्थैर्यकरा वीर्यबलपुष्टिविवर्द्धना ॥ ह्रदकुल्या
जलनिधिनिर्झरतडागवापीजले च ये मत्स्याः । ते
तु जडा, नादेया यथोत्तरलघुतरास्तु नादेयाः ॥
धाराम्बुमत्स्या गुरवोऽल्पदाहदा विष्टम्भदाश्च लव
णाम्बुजाता । तेभ्योऽन्यजाः स्वादुजलाश्रिता अपि
ज्ञेया जडास्तेऽपि यथायुतानिमान् ॥" रा नि व,
१७ ।" नादेया मधुरा मत्स्या गुरवो मारुतापहा ।
रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्चसः ।
कषायानुरसास्तेषां शष्पशैवालभोजनाः ।
सरस्तडागसम्भूताः स्निग्धाः स्वादुरसाः स्मृताः । म
हाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः स्मृताः ॥" तेषां
मत्स्यानिलघ्नावौद्भाकौप्यौ गुणान्तरौ । स्निग्ध
त्वात् स्वादुपाकत्वात्तयोर्वाप्यः गुणोत्तराः । नादेया
गुरवो मध्ये यस्मात् पुच्छास्यचारिणः । सरस्तडा
गजानान्तु विशेषेण शिरो लघु । चहूरगोचरा य
स्मात्तस्मादुत्सोदपानजाः । किञ्चिन्मुक्त्वा शिरोदेश
मधयो गुरवस्तु ते । अधस्ताद्गुरवो ज्ञेया मत्स्याः
सरसिजाः स्मृताः । उरोविचरणात्तेषां पूर्वमङ्ग
लघु स्मृतम् ।" सु सू ४६ अ । महामत्स्यगुणाः —
"महाप्रमाणा गुरवः शुक्ला बद्धवर्चसः ।" क्षुद्र
मत्स्यगुणाः —"क्षुद्रमत्स्यास्तु लघवः ग्राहिणो ग्रह
णीहिताः । कृष्णमत्स्याः लघुस्निग्धा वातघ्ना वह्नि
वर्द्धनाः ।" पाण्डुवर्णमत्स्यगुणाः —"पाण्डुरा दीप
नाः स्निग्धा गुरवो भिन्नवर्चसः । क्लिन्नशुष्कमत्स्य
योर्गुणाः —कथिता दोषलाः मत्स्याः शुष्का विष्ट
म्भिदुर्जराः ।" लवणयुक्तमत्स्यगुणाः —"लवणे
साधिता मत्स्याः कफपित्तकराः स्मृताः ॥" सा
मुद्रमीनगुणाः —"सामुद्रा गुरवो वृष्याः स्निग्धोष्णा
वातनाशनाः । पित्तलास्तु विशेषेण मांसाग्निबलाद्य
लावहाः ।" जम्बीररसयुक्तमत्स्यगुणाः —'दग्धम
त्स्यास्तु जम्बीररसाक्ता वातनाशनः । मधुरो रोच
नो हृद्यो बृंहणो बलवर्द्धनः ।" सन्तोलितमत्स्य
गुणाः —"आर्द्रकैः कटुतैलेन सह सन्तोलितो भ
वेत् । स स्वादुः कफवातघ्नः शुक्रलो बलवर्द्धनः ।"
मत्स्यव्यञ्जनगुणाः "व्यञ्जनं शाकमत्स्याढ्यं हृद्यं
वृष्यञ्च पुष्टिकृत् ।" मत्स्यघण्टगुणाः —"मत्स्यघ
ण्टो बलकरो वातघ्नो रोचनः परः ॥" राज ३प ।

**मत्सग(घ)ण्ट** । पु । मत्स्यगन्धे । समत्स्य
व्यञ्जनभेदे । माछेर घण्ट । श च । See मत्स्य ।

**मत्सर** । पु । मक्षिकायां । पिका ।

**मत्स्यकाली (ठी)** । स्त्री । उपोदिकायाम् ।
वै निघ । [४ । कग. ।

**मत्स्यगन्धा** । स्त्री । जलपिप्पल्यां । रा नि व;

**मत्स्यगन्धि** । स्त्री । मत्स्याक्ष्याम् । ब्राह्मी
शाक । (का) । गुक्तनामायाम् वै निघ ।

**मत्स्यघण्ट** । पु । व्यञ्जनविशेषे । माछेर
घण्ट । श च । See मत्स्य ।

**मत्स्यण्डिका (ण्डी)** । स्त्री । गुडकृतमिष्ट
द्रव्यभेदे । मिछरि, नवात । शर्करायां । रा नि,
व १४ । मात्स्यण्ड । "इक्षो रसो य. सपक्वो
घनः किञ्चिद्द्रवान्वितः । मन्दं यत् स्यन्दते तस्मात्
तस्मात्स्यण्डी निगद्यते ।' गुणाः —"मत्स्यण्डी भेदि
नी बल्या लघ्वी पित्तानिलापहा । मधुरा बृंहणी
वृष्या रक्तदोषापहा स्मृता ।" भा । मत्स्यण्डि
काखण्डशर्करादिः यथा यथा वर्द्धते तथा तथा शीतस्निग्ध
गुरुमधुरतरा भवति । सु सू ४५ अ ।

**मत्स्यण्डीफलितम्** । क्ली । खण्डीशर्करायाम्। वै.निघ. ।

**मत्स्यनाशकः (नाशनः)** । पुं । मत्स्यार कुपक्षिणि । মাছরাঙা পাখী। कुररपक्षिणि । त्रिका. । हे.च. ।

**मत्स्यपित्तम्** । क्ली। मीनपित्ते । মাছের পিত্ত। तच्छुद्धिः—"मत्स्यादिपित्तं सगुप्तं निम्बद्रावैर्विभावितं । दिनान्ते शुद्धिमायाति सत्यं गुरुवचो यथा ॥" सा.कौ. । [रा.नि.व.६ ।

**मत्स्यपित्ता** । स्त्री । कटुरोहिण्या। कट्की।

**मत्स्यपुटपाकः** । पु । पुटेन मत्स्यपाकभेदे । तत्साधनं दग्धमत्स्यतुल्यमेव । [रा नि व.६ ।

**मत्स्यभि(वि)ना** । स्त्री। कटुकायाम् । कट्की।

**मत्स्यभेदिनी** । स्त्री । कटुकाया। रा.नि व.६।

**मत्स्यरङ्गः (ङ्गः, कः)** । पु । जलकाके । মাছরাঙা । हारा. ।

**मत्स्यराजः** । पुं । रोहितमत्स्ये । त्रिका. । —"सुन्दरो रोहितः श्रेष्ठ. सकुलश्च विशेषत । मत्स्यराज इति प्रोक्त ।" रस.चि.८अ. ।

**मत्स्यर्कः** । पुं । शफरीमत्स्ये। च.शा ८अ. ।

**मत्स्यवेधनी** । स्त्री । मीनरङ्गी । মাছরাঙা । जटा.। वडिशे । श.र. ।

**मत्स्यशकलम्** । क्ली । मीनशल्के । मत्स्यचर्मणि । भा.म.कुष्ठ.चि । स्त्री । कटुक्या । भा म १भ. चितमम.ज्व.चि.। "महौषधामरदारुमत्स्यशकला ।"

**मत्स्यसन्तानिकः** । पुं । मत्स्यव्यञ्जनभेदे । यथा —"दग्धेऽङ्गारे सलवणो वेशवारैकपक्वत. । साद्रकः कटुतैलेन मत्स्यसन्तानिको भवेत् ॥" श.च ।

**मत्स्या** । स्त्री । कटुकाम् । वै.निघ. ।

**मत्स्याङ्गी** । स्त्री । गण्डदूर्व्वायाम्। रा नि व.८। हिलमोचिकायां । ফিকে । त्रिका ।

**मत्स्याण्डम्** । क्ली। मीनाण्डे। মাছের ডিম। गुणाः—"मत्स्यकूर्म्मखगाण्डानि स्वादुवाजीकराणि च । कटुपाकानि रूक्षाणि वातश्लेष्मकराणि च ॥" राज.२प. ।

**मत्स्यादनी** । स्त्री । जलपिप्पल्यां । रा.नि.व. ४ । मूर्व्वालायाम् । मत्स्याक्ष्याम् । ফিকে । काकमाच्याम् । गण्डदूर्व्वायाम्। मण्डूक्याम् । रा.नि.व. २२ । [त्रिका. ।

**मत्स्याशनः** । पुं। मत्स्यरङ्गे । মাছরাঙা ।

**मत्स्याचकम्** । क्ली । ब्राह्म्याम् । पञ्चाङ्गचन्दने । भा.म.४भ.बाल चि. । "मत्स्याचक शङ्खपुष्पी ।" सु शा.१०अ. । पत्तूरे । वा.उ ३८अ. ।

**मत्स्याचिका** । स्त्री । गण्डदूर्व्वायाम् । वै. निघ. ।

**मत्स्याची** । स्त्री । हिलमोचिकायां । ফিকেশাক । हि मछेच्छी, मछरिया । म जलब्राह्मी । र.मा. । त्रिका । सोमलताविशेषे. । गुणा—शीतला रूक्षा व्रणत्वग्घ्नी च । रा.नि.व.५ । "मत्स्याक्षी ग्राहिणी शीता कुष्ठपित्तकफास्रजित् । लघुस्तिक्ता कषाया च स्वाद्वी कटुविपाकिनी ॥" भा गु.व. । काकमाच्यां । रा.नि.व.४ । गण्डदूर्व्वायां । रा.नि.व.८ ।

**मत्स्यी** । स्त्री । जटामांस्यां । वै निघ.२भ.वा व्या चि.शत(वरीतैले । स्त्रीमत्स्यजातौ । व्याक. ।

**मत्स्योदनम्** । क्ली । मीनपक्वभक्ते । মাছের পোলাও । गुणा.—"मत्स्यौदन कफकर त्रिदोषकरण तथा । धर्म्मोऽम्लकर प्रोक्तं चतुर्व्वर्गस्वभावकैः ॥" वै निघ. । [मद. । र.मा. ।

**मथः (न.)** । पुं । अग्निमन्थवृक्षे । গণিরি ।

**मथितम्** । क्ली । वस्त्रपूतनिर्जलदधि । अम. । भा.म । १भ.च सा चि.गङ्गाधरचूर्णे । "चूर्णं मथितसमेतम् ।" केवल मथितदधि । "तत् केवलम् मथितं मुनयो वदन्ति ।" प.म.२खं. । गुणाः —श्लेष्मवातघ्न । रा.नि व.१५ । कफपित्तघ्न रोचन धातुपुष्टिकरञ्च । राज.२प. । [हलायुध ।

**मथुरानाथः** । पुं । वैद्यामृतलहरीनामग्रन्थ·

**मदः** । पुं। मृगनाभौ । मृगनाभि । रा.नि.व. १२ । See कस्तूरी । च.द.वा.व्या.चि.महादशमूलतैलमहामायूरघृतेषु। मत्ततायाम् । "धुनकीटवधूतुरभक्षणादिव मत्तता ।" भा.म १भ.ज्व.चि । "मूर्च्छादाहौ मदस्तथा ।" भा.नि । मद्ये । हे.च. ।

লিম্নাবধি স্বর্ণং স্বর্ণং সুবর্ণসি মদা। ধৌটধৈস্মী স্বকালনাদ্ সিদ্ধার্থানৰ্থসিদ্ধয়।" শতাবরীচূর্ণ, ভূমিকুষ্মাণ্ডচূর্ণ, গোক্ষুরের বীজচূর্ণ, গোরক্ষচাকুলিয়ার চালচূর্ণ, গোক্ষুরবীজ চূর্ণ, কুলেখাড়ার বীজচূর্ণ, আলকুশীবীজ চূর্ণ, প্রত্যেকে সমভাগ মিলিত ২ প.। ঘৃতভর্জিত সবীজ সিদ্ধিচূর্ণ ৮প. শর্করা ৩২ প. পাকার্থ—শতমূলীরস, ভূমিকুষ্মাণ্ডরস এবং দুগ্ধ প্রত্যেকে ৮প (মত ভরে দুগ্ধ ১৬প) একত্র গুলিয়া পাক করিবে। পাকসিদ্ধ হইলে নামাইয়া, তাহাতে দুগ্ধ ভিন্ন চূর্ণ ২ প. প্রক্ষেপার্থ ত্রিকটু গুড়ত্বক্ তেজপত্র এলাইচ, সৈন্ধব. ধনিয়া. জায়ফল, জয়িত্রী, বালা জীরা, কৃষ্ণজীরা, শটী, কুন্দুরখোটী, মুতা, মউরী, মুগানি শী, ভটানি শী, তালীশপত্র, তেজপত্র, পচাপাতা, গেঁঠেলা, হরীতকী, শুলফা, চই, দেবদারু, প্রিয়ঙ্গু, লবঙ্গ, সরল কাষ্ঠ, শৈলজ। ইহাদের মধ্যে যে যে দ্রব্য ভর্জনোচিত, গন্ধবৃদ্ধির জন্য তাহা ভাজিয়া চূর্ণ করিবে। এই সকল দ্রব্য চূর্ণ প্রত্যেকে সমভাগ মিলিয়া ২ প. সৈন্ধব ও ত্রিকটুচূর্ণ যে পরিমাণে দিলে স্বাদু হয়, সেই পরিমাণ বিবেচনা করিয়া দিতে হইবে। মোদক প্রস্তুত হইলে সেই মোদক ত্রিকটু ও ত্রিজাতকচূর্ণে আলোড়িত করিয়া ভাণ্ডে তুলিয়া লইবে। বৃ.র। [বৈ.নিঘ।

**मदनमोदनी**। স্ত্রী। गणिकारिकायाम्।

**मदनरिपुः**। पुं। मदनफले। वै.निघ.।

**मदनशलाका**। स्त्री। सारिकायाम्। कामोन्मादकौषधे। त्रिका। कोकिलायां। श र.।

**मदनसारिका**। स्त्री। सारिकायाम्। शालिक পাখী। জটা। [याम्। हे.च.।

**मदना**। स्त्री। कस्तूर्य्याम्। धातक्याम्। सुरा

**मदनाङ्कुशः**। पु। शिश्ने। त्रिका.। नखे। वै.निघ। [प सु.।

**मदनाग्रजः**। पु। कोद्रवधान्ये। কোদোধান।

**मदनायुधम्**। क्ली। योनौ। श च। कामवृद्धिलये। रा नि व.४।

**मदनालय.**। पु। स्त्रीयोनौ पद्मे। वै निघ।

**मदनाढ्यः**। पु। मदनवृक्षे। रा नि.व ८। स्त्री ढ्या)। च्चौटवृक्षे। वै निघ.।

**मदनी**। स्त्री। मेथिकायां। মেথি। प सु.। कस्तूर्य्यां। मृगनाभि। रा नि व.१२। मद्ये। रा. नि व १४। धातकीवृक्षे। अतिमुक्तके। रा.नि.व. १०।

**मदनीयहेतुः**। पु। धातकीवृक्षे। ধাই ফুলের গাছ। वा म १५ष प्रियङ्ग्वादिव.। "पुन्नाग-श्रीम मदनीयहेतु।"

**मदनीया**। स्त्री। मल्लिकावृक्षे। वै निघ.।

**मदनेच्छाफल**। पु। आम्रवृक्षे। रा.नि.व. ११।

**मदभञ्जिनी**। स्त्री। शतमूल्याम्। श च.।

**मदमत्तः**। पु। महाकरञ्जवृक्षे। वै.निघ.।

**मदमादिनी**। स्त्री। कोङ्कणदेशे गणिकारी नामप्रसिद्धे पुष्पवृक्षे। रा.नि व.१०।

**मदयन्तिका (न्ती)**। स्त्री। नवमल्लिकायां। কাঠমল্লিকা। र मा। त्रिपुरमल्लिकायां। प सु. भैष चुद्रगं चि महानीलतैले। च.द.र.पि.चि। वा चि २অ।

**मदयित्नु**। क्ली। मद्ये। मे.।

**मदरोगः**। पु। मदात्ययरोगे। रा.नि व.२०।

**मदव्याधिः**। पु। पानात्ययरोगे। रा.नि व. २०। [৩]

**मदशाकः**। पु। उपोदिकायाम्। रा नि व.

**मदशौण्डः**। पु। जातीफलवृक्षे। वै.निघ.।

**मदसार.**। पु। तूलवृक्षे। रा नि.व ६।

**मदस्थानम्**। क्ली। सुरापानस्थाने। त्रिका।

**मदहस्तिनिकः (नी)**। महाकरञ्जवृक्षे। ডহর করঞ্জ। रा नि.व ६।

**मदहेतुः**। पु। धातकीवृक्षे। वैद्यकं।

**मदा**। स्त्री। धातकीवृक्षे। वै निघ भ.सा चि षष्ठीचूर्णे, कुटजचूर्णे। ग्रहणी.चि.पाठादिचूर्णे। कस्तूर्य्याम्। मृगनाभि। चि क्र.क.मदद.चि।

**मदाढ्यः**। पुं। तालवृक्षे। कदम्बवृक्षे। रा.

नि व.१। आमलके। रा नि व ११। स्त्री। लोहितभिद्ग्राम्। दलक्षांठी। श च.।

**मदातङ्क. (त्यय)** । पुं। पानात्ययरोगे। तस्य निदानादिकं यथा—"ये विषस्य गुणाः प्रोक्ताः स्तेऽपि मद्ये प्रतिष्ठिताः। तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः। किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्। अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम्। प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून्। विषं प्राणहरं तच्च युक्तियुक्तं रसायनम्। विधिना मात्रया काले हितैरन्नैर्यथाबलं। प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम्। स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेविता। भवेदायुः प्रकर्षाय बलायोपचयाय च। काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च। विधिवत् सेव्यमाने तु मद्ये सन्निहिता गुणाः॥ बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्निद्रारतिवर्द्धनश्च। सपाठगीतस्वरवर्द्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि॥ अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः। आलस्यनिद्राभिहतो मुहुश्च मद्येन मत्तः पुरुषो मदेन॥ गच्छेदगम्यांश्च गुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसंज्ञः। गुह्यानि गुह्यानि वदेद् हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः॥ चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः। कार्याकार्यविभागज्ञो मृतादप्यपरो मतः। को मदं तादृशं गच्छेदुन्मादमिव चापरम्। बहुदोषमिवामूढः कान्तारं स्ववशः कृती॥ निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम्। आपादयेत् कष्टतमान् विकारान् आपादयेच्चापि शरीरभेदम्॥ क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन। व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि। अत्यम्लभक्षावततोदरेण साजीर्णभुक्तेन तथाबलेन। उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान् विकारान्। पानात्ययं परमदं पानाजीर्णमथापि वा। पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणम्। हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः। विद्याद्बहुप्रलापस्य वातप्राय मदात्ययम्। तृष्णादाहज्वरस्वेदमोहातिसारविभ्रमैः। विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम्। छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः। विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम्। ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्ययः॥" भा.नि.। तच्च सन्निपातजमदात्ययो दशभेदः। यथा—"उत्कर्षेण यदालेको मद्येन द्वौ तदा हिमः। उत्कर्षेण यदा द्वौ तु मद्येनैको द्वितीयकः। एको मद्येन दीप्तः स्यात् द्वावल्पेन तृतीयकः। उत्कर्षेणैक एव स्यात् अल्पेन द्वौ चतुर्थकः। उत्कर्षेण यदा द्वौ तु अल्पेनैकश्च पञ्चमः। एकोऽल्पेन तु मद्येन द्वौ दीप्ताविति षष्ठकः। उत्कर्षेण समस्ताः स्युरेवं भवति सप्तमः। मद्येन सर्वेऽपि यदा तदा भवति चाष्टमः। अल्पेन सर्वेऽपि यदा तदा तु नवमः स्मृतः। अल्पेनैकस्तथान्यौ मद्येनैक इति स्फुटाः। सन्निपातस्य मुनिना दश भेदाः प्रकीर्त्तिताः॥" वा. चि ७५.। [मजि। विश.।

**मदारः** । पु। शूकरे। मृगनाभौ। वै निघ।

**मदार्भकः** । पु। फलिकमत्स्ये, राजग्रीवमत्स्ये। फनुई माछ। त्रिका।

**मदालापी (इन्)** । पु। कोकिले। श मा।

**मदाह्वः** । पु। कस्तूर्या। मृगनाभि। त्रिका.।

**मदिरः** । पु। रक्तखदिरे। श च.। मत्तखञ्जने। श र.।

**मदिरा** । स्त्री। मद्यसामान्ये। रा नि व १४। गुणाः—"हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचौ। वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता।" च सू २७अ। See मद्यम्।

**मदिरासख. (खः)** । पु। आम्रवृक्षे। जटा.।

**मदिष्ठा** । स्त्री। मद्ये। हे.च।

**मदोत्कटः** । पु। मत्तगजे। कपोते। वै.निघ।

**मदोत्कटा** । स्त्री। मद्ये। रा नि.व.१४। माषपर्ण्याम्। वै.निघ.। चतसीक्षुपे। ठिन ना. छ। रा.नि.व ११। तृणस्यां। वाकुड़। मद.।

**मदोद्रेकः** । पु। महानिम्बे। घोड़ा निम। रा नि ५८।

**मद्गुः** । पुं। जलकाके। पानकौड़ी। च मु २७अ। प्रतजातीयपक्षिविशेषे, गन्धरई। माद्गुड़। गुणाः—वातघ्नः स्निग्धः सुष्टमलक्ष्य रक्तपित्तहर. हिमश्च। राज व.।

**मद्गुसूचिका:** । पु। कृष्णकंटे, पर्णवरी। सु सू ४६ष.।

**मद्गुरः (च.)** । पु । मत्स्यभेदे । मागुर माछ । तन्मांसगुणाः —मधुरं स्निग्धं सवाहि गरुकारं गुरु च । राजव. । शर । [शर ।

**मद्गुरसी** । स्त्री । शृङ्गीमत्स्ये । शिङ्गी माछ ।

**मद्यम्** । क्ली । तरलमादकद्रव्यविशेषे । मद । हिं दारु । मद्यसामान्यगुणाः - मधुराम्लं कफघ्नं लघु बलकरं कान्तिकरञ्च । मद्य त्रिविधं गौडी माध्वी पैष्टी चेति,तानि अम्लमद्यानि । अन्यच्च सौगन्धिकादिद्रव्यान्तरयोगेन विविधं भवति । अन्ये तु तेषां द्वादश भेदानाहु । तानि सर्व्वाणि गौड्यादिष्वेवान्तर्भवन्तीति न पृथगुक्तम् । रा नि व १४ । विशेषाः स्वस्वपर्य्यायेषु द्रष्टव्याः । गौडी माध्वी तथा पैष्टी निर्य्यासा क्वथितापरा । इति चातुर्विधा ज्ञेया सुराख्यासा प्रभेदकाः । भेदेन द्वादश प्रोक्ता सुरा सौवीरका रसे । शीधुर्गौडी च मत्स्यण्डी गुडेन प्रभवास्तथ । माध्वीकं माधुकं माध्वं मधुना सयुता सुरा । पैष्टीष्वरिष्टजातन्तु तण्डुलप्रभवास्तथ । मृद्वीकारससम्भूतः तालमाडसमुद्भवा । निर्य्यासा सा तु विज्ञेया तासां वच्मि गुणागुणान् ॥'' अत्रि २८अ. । नवं मद्यं अजातरसप्रसादमनतिक्रान्तसंवत्सरं सत्त्वविकारजनकं वातादिजनकञ्च । 'द्विजस्त्रीभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतम् ।' रा नि व १४ । 'नवं मद्यमभिष्यन्दि गुरु वातादिकोपनं । अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च ।"इति नवं मद्यम् । "चिरस्थितजातरसं दीपनं कफवातजित् । रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ।" इति पुराणं । 'तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यतः । सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना । समेत्य हृदयं प्राप्य धमनीरूर्द्धमागतम् । विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात् ।" चतुरशीतिरिति चरकः । तदीमयो नव,धान्यफलमूलसारपुष्पकाण्डपत्रत्वचो भवन्त्यासवयोनयः शर्करा चेति । ताश्चतुरशीतिविधा हितकरा आसवा जायन्ते, यथा—फलजाः षड्विंशति , मूलजा एकादश, सारजा विंशति , पुष्पजा द्वौ, काण्डजाश्चत्वारः, त्वग्जाश्चत्वारः, शर्कराजातश्चैकः, धान्यजाश्च षट् । इति । च सू २५अ. । तत्साधने जलादिदानविचारः —"आसवादिषु साध्येषु द्रव्यैर्यद्गुणसम्मतम् । खदिरादेः प्रतिपलं जलमाहुश्चिकित्सकाः । चतुःशरावमितं कृत्वा गुडं क्वाथसमं क्षिपेत् । मधुराणां गुडो देयः कफघ्नाग्नेरतोऽन्यथा ॥ ' इति । "क्वाथ्यद्रव्यस्य वा तुल्यादुदकं त्वन्यमेव च । सम्यक्पाकं न गृह्णन्ति हीनवीर्य्यन्तु केवलम् ॥ क्वाथ्यद्रव्यं चरमसं अर्द्धं दशघटं क्षिपेत् । निष्क्वाथ्य पादशेषन्तु गुडं सार्द्धं घटं न्यसेत् । विसृज्य सन्धितं यच्च तदासवमितीरितम् ॥" वृद्धसुश्रुत. । "विना क्वाथेन सन्धानमासवं प्रोच्यते किल । गुडं क्वाथौषधसमं जलं चापि चतुर्गुणम् ॥ आसवारिष्टमद्येषु द्राक्षापञ्च दशाम्लकं । क्षौद्रञ्च गुडपादोनं प्रयोक्तव्यं भिषक्तमैः । अरिष्टेषु च सर्व्वेषु द्रोणे पलशतं गुडम् । चिरस्थायिष्वरिष्टेषु द्विगुणं गुडमावपेत् ॥ अनुक्तमानारिष्टेषु द्रवे द्रोणे गुडात्तुला । क्षौद्रं क्षिपेद्गुडस्यार्द्धं प्रक्षेपस्तु दशांशिकः । तद्विधेषु च द्रष्टव्या मद्यकर्त्तव्यता बुधैः । आसवारिष्टयोर्यत्र न गुणो लभ्यते तदा । एकाद्यनिश्चितं कृत्वा दापयेद्गुणवृद्धये ॥'' इति गौपुरः । "यथा यथा जलस्थानं विरसं फलं भवेत् । तथा तथा गुडं देयं ह्यधिकं सम्प्रदायतः ॥ यथा तथा भवेदत्र स्रावो बहुतरं शुभं । अनुक्तौ दशमूलादौ बब्बुलबदरादिकम् ॥ स्रावणार्थं प्रदातव्यं नासवादौ कदाचन । अनुक्तेऽपि च प्रस्थार्द्धं धातकीकुसुमं क्षिपेत् ॥ स्रावणार्थेषु सर्व्वेषु मधुकुष्ठविवर्ज्जितं । कुर्व्वन् शिरसः पीडां छर्द्दिं पुष्परसाद्भवेत् ॥ अरिष्टासवयोर्माषा प्रोक्तमाकुड्वान्विता । यथा यथा श्रुतं मद्यं मात्रा चाल्पा तथा तथा ॥' भद्रशौनकः । [चि । वै निघ ।

**मद्यगन्धः** । पु । बकुलवृक्षे । स्त्री । कदम्बः

**मद्यदोहदः** । पु । बकुलवृक्षे । वै निघ ।

**मद्यद्रुम.** । पु । कोङ्कणदेशप्रसिद्धे माड़वृक्षे । रा नि.व ९ ।

**मद्यनित्यः** । त्रि । नित्य मद्यपानशीले । च ।

**मद्यपङ्कः** । पु । किट्टके । मदेर.(मेथी) । वै.च ।

**मद्यपाशनम्** । क्ली । पिपासाजनकद्रव्ये । वै निघ । पानरुचकभक्ष्यद्रव्ये । चाट् । वै च. ।

**मद्यपुष्पा (ष्पी)** । स्त्री । धातकीवृक्षे । रा. नि व ६ ।

**मद्यमण्डः** । पु । मद्यफेने, सुरामण्डे । मदेर (मेथी) । अम ।

**मद्ययोनि** । स्त्री । सर्ज्जवृक्षे । शालगाछ । वै निघ । [गाछ । र मा. ।

**मद्यवासिनी** । स्त्री । धातकीवृक्षे । धाइफुल

**मद्यबीजम्** । क्ली । बहुद्रव्यकृतसुराबीजे । बाकर इति लोके । हे च ।

**मद्यश्रेष्ठम्** । क्ली । द्राक्षासुरायाम् । वै निघ ।

**मद्यसन्धानम्** । क्ली । सुरानिष्काशनार्थं फल वल्काङ्कुरादीनां सुचिरसंस्थापने । हे च ।

**मद्यहेतु** । पु । धातकीवृक्षे वै निघ ।

**मद्यामोद** । पु । वकुलवृक्षे । रा नि व १० ।

**मद्योत्तमम्** । क्ली । माध्वीसुरायां । वै निघ ।

**मधु** । क्ली । (Mel) Honey पुष्परसे । मधु मउ । प सु । हि ता सहद मध । ते तेल । गुणा —मधुर कषायानुरस रुक्ष शीतमग्निदीप न वर्ण्य स्वर्य लघु सुकुमार लेखन हृद्य सन्धान शोधन रोपण वाजीकरण संग्राहि चक्षुःप्रसादन सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासका सातिसारच्छर्द्दितृष्णाकृमिविषप्रशमन ह्लादि त्रि दोषघ्नञ्च । तत्तु लघुत्वात् कफघ्नं पैच्छिल्यान्माधु र्य्यात् कषायभावाच्च वातपित्तघ्नम् । सु सू ४५अ । अष्टविधा मधुजाति तद्यथा—माक्षिक भ्रामर क्षौद्र पौत्तिक छात्रकम् अर्घ्य औद्दालक दालक चेति । रा नि व १४ । एषा विशेषा पर्य्यायेषु द्रष्टव्या । तच्च नव पुरातनञ्चेति द्विधा । तयोर्नवं मधु स्थौल्यकर नातिश्लेष्मलम् पुराणञ्च तत् स्थौल्यघ्न ग्राहि च । पक्व तत् त्रिदोषघ्न विविध रोगजाड्यजिह्वारोगघ्न बलदं वह्निधैर्य्यवर्द्धन वीर्य्य वर्द्धनञ्च । आम तत् आमगुल्मवातरोगपित्तदाहना शन वातजननं शोषजनन अरुहृद्रात्ययघ्न भव ति । तथा मधु मन्थानव्रणरोपणादिषु साधारणेन हितम् । अपिच आम मधु उष्णैर्द्रव्यै सह उष्ण काले वा स्वयमुष्णं बहुकालस्थित विषवत् तापज नक भवति । यन्मधु कीटादियुतमक्ष पर्य्युषित तदप्य त्याज्यम् । यत्तु सद्योपात्त तद्रसायनयोगयोग्य निर्दोषञ्च । रा नि व १४ । मद्ये मधुयष्ट्यां । य ष्टिमधु । रा नि व २१ । च सू ४ अ । वै निघ सु दर्शनचूर्णे । जले । दुग्धे । विश्व । मिष्टरसे । श र ।

**मधु** । पु । मधुकवृक्षे मउल गाछ । वसन्त काले । चैत्रमासे । मे । अशोकवृक्षे । हे च. । यष्टिमधुनि । रा नि व ६ । स्त्री । जीवन्तीवृक्षे । अम ।

**मधुकम्** । क्ली । यष्टिमधुनि । तच्च द्विविधं स्थ लजानूपभेदेन वमनादिप्रतिकर्मविशेषेण च । च सू. २अ । वल्लीयष्टिमधुके । रा नि व ६ । च सू ४अ । वै निघ ज्व चि महालाक्षादितैल । वा सू १५अ मो धनव भञ्जनादिव, अम्बष्ठादिव न्यग्रोधादिव । च द चि ज्व चि त्रायमाणादिव सा ज्व चि सुश्रुतादयगणे । च सू ४अ सन्धानीये कण्ठ्यगणे । वै निघ ज्व चि चन्दनबलातैले । यशदे । दशा हे च । पु । मधुकवृक्षे । मउल गाछ । र मा सु सू ३८अ न्यग्रो धादौ । जीवके । रा नि व ५ । पक्षिविशेषे । य ष्टिमधुवृक्षे । विश्व । [निघ ।

**मधुकच्छदा** । स्त्री । मयूरशिखायाम् । वै

**मधुकण्ठ** । पु । कोकिल चिका ।

**मधुकन्द** । पु । आलुकभेदे । वै निघ ।

**मधुकर** । प । मधुरजम्बीरे । अपामार्गे । वै निघ । भृङ्गराजवृक्षे । श मा । भ्रमरे । अम ।

**मधुकरप्रिय** । पु । आम्रवृक्षे । रा नि व ११ ।

**मधुकर्कटिका (टी)** । स्त्री । (Citrus acida) मधुरबीजपूरवृक्षे । मिठलेबू । हि मधु काकडी मउफुटी । गुणा —शीतला रक्तपित्तहरा गुरुश्च तन्मूल विसूचिकाघ्न कर्णशोथघ्नञ्च । मद. व ६ । "मधुककटिका स्वादी रोचनी शीतला गु रु । रक्तपित्तक्षयश्वासकास हिक्काभ्रमापहा ॥" भा पू १भ आम व । मधुखर्ज्जूरीवृक्षे । रा नि व ११ ।

**मधुकसार** । पु । गडपुष्पवृक्षसारे । मउलेर आठी । वै निघ सुप्तनेत्र चि.।

**मधु(धू)कसुरा** । स्त्री । मधुकमद्ये । मउयेर मद । गुणा —"वातपित्तकरं रूक्षं कषाय विशद गुरु । श्लेष्मल भेदन ग्राहि मूत्रकृच्छ्रशिरोऽर्त्तिनु त ॥" अत्रि १८अ ।

**मधुका** । स्त्री । यष्टिमधुनि । प सु । लता भेदे । गुडूच्याम् । मे । मधुरनिम्बवृक्षे । वै निघ । कृष्णकटुक्यां । हे च. ।

**मधुकादि** । पु । विषमज्वरे कषायभेदे । "म धुकं चन्दनं मुस्त धात्री धान्यमुशीरकं । छिन्नोद्भव

पटोलिष क्काथ. समधुशर्करं । ज्वरमष्टविधं हन्ति ...॥" भैष.ज्व चि.।

**मधुकाद्यिघृतम्** । क्ली । काशाधिकारे घृतम् । गव्यघृत ४ श. । क्वाथार्थे—यष्टिमधु ८ प. द्राक्षा १६ प. । पाकार्थे— जल १६ श. शे. श. । कल्कार्थे—पिप्पली ८ प. । पाकसिद्धौ अवतार्य शीते मधुन शर्करायाश्च प्र. ८ प. प्रचेयम् । घृत ४श। क्वाथार्थ—यष्टिमधु ८प. द्राक्षा १६ प.। पाकार्थ—जल १६ श शे. ४ श। कल्कार्थ—पिप्पुल ८ प। पाक हइले मधु ८ प शर्करा ८ प. प्रक्षेप दिबे। [निघ ।

**मधुकाश्रयः** । पु । मधूच्छिष्टे । मम । वै

**मधुकाष्ठ.** । पु । मधूकवृक्षे । मउल गाछ । वै निघ ।

**मधुकुक्कुटिका (टी)** । स्त्री । मातुलुङ्गवृक्षे, जम्बीरभेदे । महर इति भाषा । गुणा —"मधुकुक्कुटिका शीता श्लेष्मलास्यप्रसादनी । रूच्या स्वादुर्गुरुः स्निग्धा वातपित्तविनाशिनी ।" राज ३प.।

**मधुकृत्** । स्त्री । मधुमक्षिकायाम् । हे.च.।

**मधुकेशट** । पु । भ्रमरे । त्रिका. ।

**मधुकोदकम्** । क्ली । यष्टिमधुकसिद्धजले । क्षद क्षणाहरम् । सि यो ह.चि. ।

**मधुकोषः** । पु । चीद्रपटले । मौचाक । श. च. । कागसुक्के । श कल्पद्रुम ।

**मधुक्रमः** । पु । मध्वाशये । मौचाक । श.च ।

**मधुक्रीडा** । स्त्री । घृततैलभर्ज्जिते समधुपिष्टकभेदे । भा. पूर्व. पुष्टिकारी. व. । व. म. ५०५ म. ।

**मधुखर्ज्जु(र्ज्जू)रिका (री)** । स्त्री । मिष्टफलखर्जूरीवृक्षे । मिष्टे खेज्जुरगाछ । म मिष्टसेन्दी । क सीहईखिजु । गुणा —मधुरा हृद्या शीतलासन्तापपित्तघ्नी क्रिमिजननी वीर्यवर्द्धनी च । रा नि व.११ ।

**मधुगन्धः** । पु । वकुलवृक्षे । अर्जुनवृक्षे । वै. निघ ।

**मधुगन्धप्रसूनकः** । पुं । अर्जुनवृक्षे । वै निघ ।

**मधुगायनः** । प । कोकिले । रा नि व.१९।

**मधुगुञ्जनः** । पु । शोभाञ्जनवृक्षे । सजिना गाछ । श.मा. ।

**मधुघातकः** । पु । पक्षिविशेषे । वै निघ ।

**मधुघोषः** । पु । कोकिले । श मा. ।

**मधुच्छदा** । स्त्री । मयूरशिखायाम् । भा ।

**मधुजः** । पु, क्ली । मधूच्छिष्टे । रा.नि.व १४।

**मधुजम्बीरः** । पु । (Citrus limetta) Sweet lime of India मधुरजम्बीरवृक्षे। मिष्टे लेबुगाछ । हिं मिठानिबु । रा नि व.११ ।

**मधुजम्भः** । पु । मधुरजम्बीरे । रा.नि व ११।

**मधुजा** । स्त्री । मधुशर्करायाम् । रा नि.व १४। सितायां । चिनि । त्रिका. ।

**मधुजीरकः** । पु।(Pimpinella anisum.) Common anise जीरकभेदे । मिठाजीरा । हि सौंफ । तै पेद्दजिलकर । ता. सोम्बु । वम्. आनिसून् । पुलकालरम् ।

**मधुजीवन.** । पु । बिभीतकवृक्षे । वै निघ. ।

**मधुतालः** । पु । शीतालवृक्षे । रा नि व ८। नकुल १०च । [व.१४ । त्रिका. ।

**मधुतृणः** । पु, क्ली । इक्षौ । पत्र । रा नि.

**मधुतैलवस्तिः** । पु । निरूहवस्तिभेदे । यथा —"एरण्डक्काथतुल्यांशं मधुतैलपलाष्टकम् । शतपुष्पापलार्द्धेन सैन्धवार्द्धेन संयुतम् । मधुतैलकसंज्ञोऽयं वस्तिर्दोषविवर्जितः । मेदोगुल्मक्रिमिप्लीहमलोदावर्त्तनाशनः । बलवर्णकरश्चैव वृष्यो दीपनबृंहणः ।" भा. ।

**मधुत्रयम्** । क्ली । मधुरत्रये, घृतमधुशर्करासु। रा नि व.२२ । भा म ४म कुष्ठ.चि. ।

**मधुदला** । स्त्री मूर्व्वायां । मूर्वा। रा.नि व ३।

**मधुदूतः** । पुं । आम्रवृक्षे । भा. । कोकिले । वै. निघ. ।

**मधुदूती** । स्त्री । पाटलवृक्षे । भा. ।

**मधुद्रुः** । पु । भ्रमरे । त्रिका. ।

**मधुद्रवः** । पु । मधुशिग्रौ रक्तशिग्रुवृक्षे । रांग सजिना गाछ । श च. । वा.चि ३ ।

**मधुद्रुमः** । पु । मधूकवृक्षे । मउल दा धुड़

पुष्पवृक्ष। र.मा.। आम्रातकवृक्षे अम्लष्ठायाम्। वै.निघ.। [रा.नि.व.१०।

**मधुधातुः** । पुं। स्वर्णमाक्षिके। रूप्यमाक्षिके।

**मधुधूलिः** । स्त्री। खण्डशर्करायाम्। थाँड़। हे.च.।

**मधुनारिकेरकः** । पुं। नारिकेलवृक्षविशेषे। एरनारिकेर इति कोङ्कणे प्रसिद्ध.। बम् मीठानारल। बामननारिकेल। फलगुणाः—मधुरं शीतलं तृष्णादाहपित्तघ्नं बलपुष्टिकरं कान्तिजनकं वीर्यवर्द्धनं रुच्यञ्च। दुर्जरं क्रमिकरं स्निग्धं वातातिसारश्रमशमनम् अग्निदीप्तिनाशनम् आमदोषप्रकोपजनकञ्च। रा.नि.व.११।

**मधुनिष्पावः** । पुं। मुकुटशिम्ब्याम्। मुकुटम् शीम। प.मु। गुणाः—रुच्यः मधुरः ईषत्कषायः शीतलः वातलो बल्यः आध्मानकरः गुरुः पुष्टिकरश्च। रा नि व.१६।

**मधुनी** । स्त्री। क्षुपविशेषे। माकड चाउलि, माकड शाता। र.मा.अत्रि: स्थान २अ.।

**मधुपञ्जरः** । पुं। वकुलवृक्षे। प.मु।

**मधुपर्णिका** । स्त्री। गाम्भारीवृक्षे। भा.म ४ भ.गर्भ.चि.। नीलीवृक्षे। भा.। सुदर्शनायाम्। पद्मगुलञ्च। गुडूच्या। रा.नि.व.३। प्रसारण्याम्। गन्धभादालिया। वराहक्रान्तायाम्। वराक्रान्ता। श.च.।

**मधुपर्णी** । स्त्री। विकङ्कतक्षुपे। वइचिगाछ। र.मा.। गुडूच्यां। र.मा.। रा.नि.व.३। च.सू.४ अ.। भा.जीवकादिमिश्रके, अ.पि.च.। वराहक्रान्तायां। वराक्रान्ता। च.द.शूल.चि. रामसखूरे। गाम्भारीवृक्षे। रा.नि.व.९। यष्टिमधुनि। भा.मे.४भ.कर्णरो.चि,त्रिफलाद्यघृते। मधुरबीजपूरके। मिठे लेबु। रा.नि.व.११। नीलीवृक्षे। मे.। प्रसारण्याम्। वै.निघ.।

**मधुपाका** । स्त्री। षड्भुजायां, खर्मूजा इति ख्यातायां फलशाकलतायाम्। रा.नि व.७।

**मधुपालिका** । स्त्री। गाम्भारीवृक्षे। श.मा.।

**मधुपीलुः** । पुं। महापीलुवृक्षे। आकरोट। रा.नि.व.११।

**मधुपुष्पः** । पुं। मधूकवृक्षे। मउलगाछ। हि महुया। र.मा। रा.नि.व.२३। अशोकवृक्षे। रा.नि.व.१०। शिरीषवृक्षे। रा.नि व.९।२३। वकुलवृक्षे। रा.नि.व.१०। दन्तिवृक्षे। रा.नि.व.२३।

**मधुपुष्पा** । स्त्री। दन्तिवृक्षे। रा नि.व.६। धातकीवृक्षे। वै.निघ। नागदन्तिवृक्षे। रा.नि व.५।

**मधुपुष्पी** । स्त्री। अन्धाकपुष्प्यां। चोरहुली। दन्तिवृक्षे। पुत्रञ्जीववृक्षे। वै.निघ.।

**मधुप्रियः** । पु। भूमिजम्बूवृक्षे। जटा.।

**मधुफलः** । पुं। मधुनारिकेलवृक्षे। रा.नि.व.११। विकङ्कतक्षुपे। श.च। राजादनीवृक्षे। थीर्णी। रा.नि व.११। मधुखर्जूरीवृक्षे। वै निघ.।

**मधुफला** । स्त्री। मधुपाकायाम्। खर्बूजा। मातुलुङ्गवृक्षे। कपिलद्राक्षायाम्। वै.निघ.। वा. सू १२अ.। [नि.व ११।

**मधुफलिका** । स्त्री। मधुखर्जूरिकायां। रा.

**मधुबहुला** । स्त्री। वासन्तीलतायाम्। वासन्ती गाछ। रा.नि.व.१०। शुक्लयूथिकायाम्। वै.निघ.।

**मधुबिम्बी** । स्त्री। कुन्दुरुलतायाम्। कुँदरुकी। वै निघ.।

**मधुबीजः** । पुं। दाडिमवृक्षे। वै निघ.।

**मधुभवा** । स्त्री। मधुशर्करायाम्। वै निघ।

**मधुमज्जा** । पुं। अक्षोटवृक्षे। आखरोट गाछ। रा नि.व.११।

**मधुमती** । स्त्री। गाम्भारीवृक्षे। मूर्वायां। रा नि.व.३।९। काश्मीरदेशीयनद्यां। तज्जलगुणाः—अग्निदीपनं तथा- चन्द्रभागाजलसदृशगुणम्। रा नि.व १४। [रा.नि.व.९।

**मधुमत्तः (त्ता)** । पुं, स्त्री। महाकरञ्जवृक्षे।

**मधुमल्ली** । स्त्री। मालतीलतायाम्। श.मा.।

**मधुमस्तकम्** । क्ली। पिष्टान्नविशेषे। लक्षणं—"समिता वेष्टिता मध्ये मधु दत्त्वा घृता पचेत्। मधुमस्तकमुद्दिष्टं तद्रूप्यं गुरु दुर्जरम्।" राज.३ प.। चि। मधुना उपलिप्ते। भा.म.४अ.।

**मधुमक्षिका** । स्त्री। मक्षिकाविशेषे। मौमाछि। अम.।

**मधुमाधवकः** । पुं। पलाण्डने। वै निघ.।

**मेधा** । स्त्री । मेदायां । रा.नि.व.५ । धारणाव त्या बुद्धौ । अम. । सल्लकीवृचे । वै.निघ. ।

**मेधाकरी** । स्त्री । शङ्खपुष्प्याम् । वै निघ. । ब्राह्मीचुपे । वै.सयह ।

**मेधाकृत्** । क्ली । गितावरीचुपे । थुथुनि शाक । रा.नि.व.४ । ब्राह्मीचुपे । वै.निघ. ।

**मेधाजननम्** । क्ली । कृष्णसर्षपे । वै.निघ. ।

**मेधायुः** । स्त्री । ब्राह्मीचुपे । वै.निघ ।

**मेधावती (विनी)** । स्त्री । महाज्योतिष्मतीलतायां । रा नि व.३ । शारिकायां । शालिक पाखी । वै.निघ. ।

**मेधावी** (न्) । पुं । शुकपचिणि । शारिकायां । चिका. । क्ली । मद्ये । रा.नि.व.१४ ।

**मेधिः** । पुं । धान्यमर्दनस्थाने पशुबन्धनार्थस्तम्भदारुणि । भ. । [वै.निघ. ।

**मेधिका** । स्त्री । तन्नामकवृचे । মেদী গাছ ।

**मेध्यः** । पुं । खदिरवृचे । वर्करे । छागल । रा.नि.व.८।१२ । यवे । प.मु. । स्त्री (ध्या) । रजत धार्या, श्वेतवचायाम् । प सु. । रा.नि.व.६।२३ । महाज्योतिष्मतीलतायाम् । शङ्खपुष्प्याम् । रा नि. व.३।२३ । ब्राह्म्याम् । रा.नि.व.५।३२ । मतेकवृचे । रा नि.व.८ । केतकीवृचे । কেয়া গাছ । रा.नि व १० । गोरोचनायां । रा.नि.व.१२ । अपराजितायाम् । स्त्री । शर्करायां । रा.नि.व.२३। मण्डूक्याम् । रा नि.व.५ ।

**मेन्धिका (न्धी)** । स्त्री । मेन्दीति ख्याते वृचे । মেন্দী গাছ । कौपालरम् ।

**मेरुकः** । पुं । मूषिके । वै.निघ । यचधूपे । धूना । श च. ।

**मेरुपादजम्** । क्ली । रौप्ये । वै.निघ ।

**मेलकलवणम्** । क्ली । मणिकालवणे । रा. नि.व ६. । [शाखने । हि च. ।

**मेला** । स्त्री । महानील्याम् । रा.नि.व.४ । ह

**मेलान्धुः** । स्त्री । मस्याधारे । जटा. ।

**मेषः (कः)** । पुं । पशुविशेषे । ভেড়া । प सु. । एरके । मेषमेदे दर्दे । भा.म,४म.मेदमेदचि. ।

"कौमारभृत्ये मेषाय प्रथमूलि निवेदयेत् ।" मांसगुणा.—मधुर शीतल गुरु विष्टम्भि वृंहणञ्च । रा. नि.व.१७। पित्तश्लेष्मकर कुसुम्भशाकेन सह त्याज्यञ्च । राज. । जीवशाके । रा.नि.व ७ । मेषराश्याँ ।

**मेषकम्बलः** । पुं । मेषलोमकृतकम्बले । अम. ।

**मेषकुसुमः** । पुं । चक्रमर्दे । চাকন্দা । वै. निघ । [वै.निघ. ।

**मेषपुष्पा** । स्त्री । मेषशृङ्ग्याम् । মেড়াশিঙে ।

**मेषलोचनः** । पुं । चक्रमर्दवृचे । भा. ।

**मेषवल्ली** । स्त्री । मेषशृङ्ग्याम् । भा. ।

**मेषविषाणिका** । स्त्री । मेषशृङ्गी । মেড়াশিঙে । र.मा. । वै निघ.२भ,च्य चि,शिवगुटी ।

**मेषशृङ्गम्** । क्ली । मेषस्य शृङ्गे । ভেড়ার শিঙ্ । रावणकृतकुमारतन्त्र ।

**मेषशृङ्गः** । पुं । स्वनामख्याततिक्तशाकवल्लीयौषधविशेषे । মেড়াশিঙে । प सु. । कर्कटशृङ्गे । स च पुत्रञ्जीवसदृशतरुविशेष । কাঁকড়াশৃঙ্গী । सु सू ३८भ । पुत्रञ्जीवभेदे । सु चि.२ख. ।

**मेषशृङ्गी** । स्त्री । अजशृङ्ग्यां । মেড়াশিঙে । কাঁকড়াশৃঙ্গী । रा.नि.व.८ । सु.सू.३८।२६भ. । See अजशृङ्गी ।

**मेषा** । स्त्री । सूक्ष्मैलायाम् । श च. ।

**मेषाख्यः** । पुं । बालग्रहविशेषे, नैगमेषे । वा. उ.२भ. । [বেঁটে । रा.नि.व.२ ।

**मेषान्त्री** । स्त्री । अजान्त्रीलतायाम् । ছাগল-

**मेषालुः** । पुं । बर्बरावनस्पती । श.च. ।

**मेषाह्वयः** । पुं । चक्रमर्दचुपे । रा.नि.व ४ ।

**मेषाक्षिकुसुमः** । पुं । चक्रमर्दचुपे । र.मा. ।

**मेषिका** । स्त्री । मेषपर्ण्याम् । श.र. ।

**मेषी** (न्) । पुं । तिनिशवृचे । তিনিশ, সাদন । रा नि व ८ । जटामांस्यां । रा.नि.व.१२ । मेषपर्ण्याम् । चिका. । मेषशृङ्ग्याम् । মেড়াশিঙে । भैष.वाजी. ।

**मेहः** । पुं । प्रमेहरोगे । रा.नि.व.२० । चद्यौ-ते । मूत्रे । हे च. । मेषे । श.च. ।

**मेहकुलान्तकरसः** । पुं । प्रमाहे ओष

टफलं चौचारं मज्जी यमानी सैन्धवं विडं। तालीशकेशरं पत्र लवंगा च फलं तथा। यावन्त्येतानि चूर्णानि तावदेव च मेथिका। सचूर्णं गुड़कद्वायैं पुरातनगुडेन तु। घृतेन मधुना मिश्रं खादेदग्नि वर्ण प्रति ॥" रस.र.।

**मेदः** । क्ली। शरीरस्थचतुर्थधातौ। मांसजले हे। मांससारभूतधातौ। (मेदधातु)। तत्स्वरूपादि—"यन्मांस स्वाग्निना पक्वं तन्मेद इति कथ्यते।" गुणा—"तदतीव गुरु स्निग्धम्बलकार्य्यं तिर्य्यक्धणम्। मेदो हि सर्व्वभूतानामुदरेष्वस्ति संस्थितम्। ग्रतएवोदरे वृद्धि प्रायो मेदस्विनो भवेत्॥" भा.। पु। चलम्बुषायाम्। रा.नि.व.५।

**मेदःसारः** । त्रि। मेदस्विनि। बलवर्णनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषत स्नेह मेद सारात्। स सारता वित्तैश्वर्य्यसुखोपभोगप्रदानान्यर्ज्जवं सुकुमारोपचारतामाचष्टे। च.वि.८घ.। स्त्री (रा)। मेदायाम्। (मेदा)। रा.नि.व ५।

**मेदकः** । पु। जगलसुरायां घनतरसुरायां। "मेदको जगलाह्वन।" प.प्र ३ख.। च शा ८घ.।

**मेदकोद्भवा** । स्त्री। मेदायां। र.मा.।

**मेदगज्वरः** । पु। तदाश्रितज्वरे। लक्षणम्—"भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च। दौर्गन्ध्यारोचको ग्लानिर्मेदस्थे चासहिष्णुता॥" भा.नि.।

**मेदजः** । पुं। भूमिजगुग्गुलौ। रा.नि.व १२।

**मेदपुच्छः** । पुं। एडके। दुम्बा (मेष)। तन्मांसगुणा—"मेदपुच्छोद्भवं मांसं ...... गुरु" सु.सू.४६ध.।

**मेदभवः** । पु। मेदधातौ। वै.निघ.।

**मेदसमुद्भवम्** । क्ली। अस्थनि। स्त्री (वा)। वसायां। वै.निघ।

**मेदसमुद्भूता** । स्त्री। मेदधातौ। वै निघ.।

**मेदस्कृत्** । क्ली। मांसे। है.च.।

**मेदा** । स्त्री। स्वनामख्यातलताजातशकन्दविशेषे। सा च मधादेशजाता लघुमेदा इति गौड़देशे प्रसिद्धा। ते ज्योतिष्मतीभेदे, महापुष्पभेदे। गुणा—मधुरा शीता पित्तदाहकासघ्नी राजयक्ष्महरी वातला च। "मेदापि शुक्लकन्दः स्यात् मेदोधातुमिव स्रवेत्।" रा नि व.५। See महामेदा।

**मेदाद्वयम्** । क्ली। मेदाया महामेदायाश्च। वा.सू.१५ध जीवन्त्यादि। 'जीवन्ती, काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च।"

**मेदिनी** । स्त्री। मेदायां। अजमोदायां। गान्धारीवृक्षे। रा नि.व.५।८।८।

**मेदुरः** । पु। सप्तकीनिर्यासे। वै निघ.। त्रि। अतिस्निग्धे। अम.। स्त्री (रा)। काकोल्याम्। कौंदना। रा.नि.व ७।

**मेदोगण्डः** । पु। गलरोगभेदे। निदा।

**मेदोगतज्वरः** । पुं। तद्धातुगज्वरे। मा नि.। See मेदगज्वर।

**मेदोगला** । स्त्री। लज्जालुकाभेदे। वै निघ।

**मेदोग्रन्थिः** । स्त्री। मेदसः ग्रन्थौ। लक्षणं—"प्रवृद्ध मेदुरैमेदो नीतं मांसेऽथवा त्वचि। वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुचलम्। श्लेष्मतुल्याकृतिं देहक्षयवृद्धियोदयम्। स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत्॥" वा.उ.२९ध.।

**मेदोजम्** । क्ली। अस्थिधातौ। हाड़। रा.नि. व १८।

**मेदोदाहः** । पुं। पुरलाचादिभिर्व्वह्निमदाहु- लाड़त्वा तया दाहे। च द.१४ध.।

**मेदोद्भवा** । स्त्री। मेदायां। रा नि.व.५।

**मेदोधरा** । स्त्री। देहे तृतीयकलायां। "मेदो हि सर्व्वभूतानामुदरस्थमणुस्थिषु च महत्सु च मज्जा भवति।" सु.शा ४ध.।

**मेदोरोगः** । पु। तद्वृद्धिरोगे। निदा.। [दा.]

**मेदोरोहिणी** । स्त्री। गलरोगविशेषे। नि

**मेदोऽर्व्वुदः** । पुं। ओष्ठरोगभेदे। क्ली। मेदोजार्व्वुदे। निदा। See मेदोग्रन्थिः।

**मेदोवती** । स्त्री। मेदायां। रा.नि.व ५।

**मेदोवृद्धिः** । स्त्री। देहस्थौल्ये। अण्डवृद्धौ। निदा.।

**मेद्यः** । त्रि। मेदोजनके। सु.नि.६ध.।

**मोचसारः** । पुं । मोचरसे । रा.नि.व.८ ।
**मोचस्रवः (स्रावः,वी(इन),सुत्)** । पुं । मोचरसे । रा.नि.व.८ । वै.निघ. ।
**मोचा** । स्त्री । शाल्मलिवृक्षे । शिमुल गाछ । रा.नि.व.८ । कदलीवृक्षे । भा. । रा.नि.व.११ । नीलीवृक्षे । नील गाछ । रा.नि.व.४ । मल्लकीवृक्षे । वा.सू.१५श.रोध्रादिः । "शैलवालुपरिपेलवमोचाः ।"
**मोचाटः** । पुं । कृष्णजीरके । श्यम. । कदलीवृक्षे । कदल्यस्थनि । थोड़ । मे. । चन्दनवृक्षे । वै.निघ । [संग्रहः ।
**मोचाफलम्** । क्ली । कदल्याम् । कला । वै.
**मोचारसः** । पुं । कदलीसारभवले । "मोचारसेन सहितं ।" भा.म.४भ.मसूरि.चि.शीतलाधिकारे ।
**मोचास्रावः** । पुं । मोचरसे । वै.निघ. ।
**मोचाह्वः** । पुं । शाल्मलीवेष्टके । मोचरस । चि.यो.रक्तार्श: चि. । "समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ।" वै.निघ. ।
**मोचिका** । स्त्री । मत्स्यभेदे । वै.निघ. ।
**मोचिनी** । स्त्री । कण्टकार्याम् । वै.निघ. ।
**मोचिलिन्दा** । स्त्री । राजादनवृक्षे । वै.निघ. ।
**मोची** । स्त्री । हिलमोचिकायाम् । हिञ्चे । र.मा. । See मोचा ।
**मोक्तिकायन्त्रम्** । क्ली । सुरापोतनयन्त्रे । मदेर भाटी । भैष.सतसञ्जीवनीसुरा. ।
**मोटनम्** । क्ली । वायवे । निद्रा. ।
**मोटा** । स्त्री । बलवलावृपे । छोट वेरेला । रा.नि.व.४ । जयन्त्याम् । जुर्मे । छूका गाछ । वै.निघ. ।
**मोणः** । पुं । शुष्कफले । वै.निघ. । नक्रे । मक्षिकायां । सर्पकरण्डे । मे. ।
**मोथः** । पुं । मुस्तके । कोथासरम् ।
**मोदः** । पुं । आमवृक्षे । सुरभिगन्धे । वै.निघ. ।
**मोदकः** । पुं । गुडः । यवासशर्करायाम् । रा.नि.व.१४ । लड्डुके । लाड़ू । मे. । गुडशर्करादिपाकेन यस्य पूर्वपीठ्ये यथासं तिष्ठति । सुखदीधः । मोदकावौषधमात्रादि यथा— "मोदको वटकः पिण्डो तन्मात्रा चूर्णवन्मता । मोदकेषु हिगुणिता गुडः सिता चतुर्गुणा । पक्वेन वटकाः कार्या गुड़ेन सितयाथवा । परं हि वह्निसम्पर्कात्सिधिमानं भजन्ति ते । चूर्णावलेहगुडिकाकल्कानामनुपानकम् । वातपित्तकफातङ्के द्वित्रिकपलमाहरेत् ॥" गोपुरः ।
**मोदकी** । स्त्री । मूर्वायाम् । वै.निघ.२भ. वा.व्या.चि.षडशीतिगुग्गुलौ । लिङ्गिन्याम् ।
**मोददायिनी** । स्त्री । जातीपुष्पवृक्षे । प. मु. ।
**मोदनम्** । क्ली । सिक्थके । रा.नि.व.१३ । पुं । मदनवृक्षे । मयना गाछ । (सौभाग्यशुण्ठीमोदके ।)
**मोदनी** । स्त्री । यूथिकायां । श्वेत जूँई । वनमल्लिकायाम् । रा.नि.व.१० । उपोदिकायाम् । पुँई गाछ । प.मु. ।
**मोदमोदिनी** । स्त्री । जम्बूवृक्षे । जाम गाछ । रा.नि.व.११ ।
**मोदयन्ती** । स्त्री । त्रिपुरमल्लिकायाम् । नवमल्लिका, काठमल्लिका । प.मु. । सु.चि.२५श. । "पिष्टा च सर्वं सह मोदयन्त्या ।"
**मोदा** । स्त्री । शाल्मलिवृक्षे । शिमुल गाछ । र.मा. । अजमोदायां । वनयवानी । मद.व.२ । रा.नि.व.६ ।
**मोदाख्यः** । पुं । आम्रवृक्षे । रा.नि.व.११ ।
**मोदाढ्या** । स्त्री । अजमोदायाम्, वनयमान्याम् । रा.नि.व.६ ।
**मोदिनी** । स्त्री । यूथिकायाम् । मल्लिकापुष्पवृक्षे । मल्लिका गाछ । वनमल्लिकायां । रा.नि.व.१० । कस्तूर्याम् । मृगनाभि । वै.निघ. । अजमोदायां । रा.नि.व.६ । मदिरायां । रा.नि.व.१४।
**मोरट(क)म्** । क्ली । प्रसवात् सप्तरात्रादनन्तरं यत्क्षीरं तन्मोरटमुच्यते । र.मा. । रा.नि.व.१४ । (कम्) इक्षुमूले । भा.म.ख.४भ.मसूरि.चि. । इक्षुविकर्णपलाशे । सु.सू.३८श. । च.द क्षीरतराटी. । अङ्कोटपुष्पे । आँकोड़ फुल । मे. ।

थम्। पाठ —"मृतं वङ्गं मृताभ्रं शुद्धपारदगन्धक। भूनिम्ब पिप्पलीमूल त्रिकटु त्रिफला शिवत्। रसाञ्जन विडङ्गाब्द बिल्वगोक्षुरदाडिमम्। प्रत्येक तोलक माद्य शुद्धमम्लजती पलम्। गोपालकर्कटीमूलस्वरसैर्वटिका कुरु। ... अनुपानमथोक्तञ्च छागीदुग्धम्पयोऽथवा ॥" भैष.।

**मेहघ्नी** । स्त्री । हरिद्रायाम्। प.मु.।

**मेहनम्** । क्ली । लिङ्गे । रा.नि.व.१८। मूत्रणे। वा.उ.६ष । पु । मुष्ककवृक्षे। घण्टापारुल। रा.नि.व.११। [वै.निघ.।

**मेहनाशिनी** । स्त्री। श्वेतापराजितायाम्।

**मेहहररसः** । पु । प्रमेहाधिकारे रस । पाठ —'गन्धेन सूत द्विगुणं प्रगृह्य विमर्दयेत् गोक्षुरनीरयुक्त। शुष्कञ्च कृत्वाथ सुतप्ततान्नचक्रञ्च तस्योपरि विन्यसेच ॥ चक्रं विलिप्तञ्च तत मृगृह्य मूषोदरे भापय टङ्कणेन। संगृह्य चक्रं च निधाय गोलं त्रि सप्तकान्मेहविमुक्तिरेति ॥" रस चि.८ष।

**मैत्रम्** । क्ली । ब्रेहे । मलमूत्रत्यागे। राज.।

**मैत्री** । स्त्री। मित्रतायाम्। अनुराधायाम्। सर्व्वप्राणिष्वात्मबुद्धौ। च.मू.१ष.।

**मैत्रीपरः** । त्रि। मैत्रीप्रधाने। च.मू. चक्रद टी।

**मैथुनम्** । क्ली। स्त्रीपुरुषसङ्गमे। विवाहे। स्त्रीविशेषमैथुने तत्कालनिर्णयो यथा—"निदाघ शरदोर्बाला मौढा वर्षावसन्तयो। हेमन्ते शिशिरे योग्या न वृद्धा क्वापि शस्यते ॥" मैथुननिषेधो यथा—"नर्तौ च षोडशाद्वर्षात् सप्तत्या परतो न च। आयुष्कामो नरः स्त्रीभिः संयोग कर्त्तुमर्हति ॥" सामान्यतो मैथुनकालनिर्णय —"त्रिभिस्त्रिभिरहोभिश्च सेवेत प्रमदां नरः। सर्व्वेष्वृतुषु घर्मेषु पक्षात्पक्षात् व्रजेद्बुध ॥" मैथुनगुणा —"व्यवायी धातुपचय कुरुते स्वप्नसद.। ग्लानि कम्पोरुदौर्ब्बल्य धात्विन्द्रियबलक्षय'। अपवृद्धयपदेशाद्या आयन्तेऽतिव्यवायत.। अतिव्यवायाज्जायन्ते कासश्वासज्वरादय ॥" मैथुनाकरणगुणा —"असेवनान्मेहमेदोवृद्धिरप्येव मार्दवम्।" परिमितस्य गुणा —"स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलै। अधिकानन्दजरसो भवन्ति स्त्रीषु सयुता ॥" राज ५प।

**मैरेयः** । पुं, क्ली। सुराविशेषे। तच्च धातकीपुष्पगुडधान्याम्लसन्धानेन कृतम्। 'मैरेय धातकीपुष्पगुडधान्याम्लसंहितम्।" प.प्र.१ष.। यद्वा सुरासवयो प्रत्येकं निष्पादितयोरेकीकृत्य पुन. सन्धानम्। तत्र च मधु देयम्। "आसवस्य सुरायाश्च द्वयोरेकत्र भाजने। सन्धानं तद्विजानीयात् मैरेय मुभयात्मकम् ॥" वृद्धशौनकात् चन्द्रिका। 'मैरेय धातकीपुष्पगुडधान्याम्लसाधितम्। सचातुर्जातकाजाजीमरिचोषणनागरम् ॥" वाचस्पति। गुणा —"तीक्ष्ण कषायो मदकृत् दुर्नामकफगुल्मकृत् क्रिमिमेदोऽनिलहरो मैरेयो मधुरो गुरु ॥" सु.सू.४५ष.। इक्षवमद्ये। धान्यासवे। आसवे। अम.। [च.द विद्रधि.चि.।

**मैरेयाम्बु** । क्ली। काञ्जिकभेदे। মৈরেয়মদ্য।

**मैला** । स्त्री। नीलीवृक्षे। वै.निघ.।

**मोघा** । स्त्री। विडङ्गायाम्। रा.नि.व.६। च.शा.८ष.। बदर्य्याम्। কুল গাছ। मद.। पाटलवृक्षे। मे.।

**मोचम्** । क्ली। शाल्मलीवेष्टे। মোচরস। च.द.चि यो यद्वणो चि बालचाङ्गेरीघृते। मोचाफले। মোচা। अम.। भैष पाददारी चि.।

**मोचः (कः)** । पु। शोभाञ्जनवृक्षे। रा.नि.व.७। मुष्ककवृक्षे। घण्टापारुल। रा.नि.व.११। मोचरसे। च.द.बाल.चि। वै निघ.२भ.यक्ष्मचि.शोथनादिचूर्णे। कदलीवृक्षे। हे.च.। [१ष.।

**मोचका (की)** । स्त्री। शाल्मलीवृक्षे। सु.चि.

**मोचनम्** । क्ली। मोचने। विस्रावणे। भा.म.कुष्ठ.चि। स्त्री (नी)। कण्टकार्य्याम्। शुटा.।

**मोचनिर्यासः** । पु। मोचरसे। रा.नि.व.८।

**मोचपुष्पा** । स्त्री। बन्ध्यायां स्त्रियाम्। বাঁঝা মেয়ে। रा.नि.व १८। कदलीवृक्षे।

**मोचरसः** । पु। स्वनामख्यातशाल्मलीनिर्यासद्रव्यभेदे, शाल्मलिवेष्टे। মোচরস, শিমুলের আটা। र.मा। सु.सू.३८ष.प्रियङ्ग्वादि। गुणा —कषाय.कफवातघ्न योगेन रसायन बलपुष्टिवर्णवीर्य्यायुर्देहवृद्धिकर ग्राही च। रा.नि.व.८। वा.
[illegible] "[illegible]मोचरस ।"

**म्लेच्छदारुकम्** । क्ली । चीवचीनीति ख्याते द्रव्ये । চোপচিনি । वै.निघ ।

**म्लेच्छभोजनः** । पुं । दण्डगोधूमे । गोधूमे । गम् । रा.नि.व.१६ । त्रिका. । क्ली । यवकगोधूमे । यावके । श.र. ।

**म्लेच्छमुखम्** । क्ली । ताम्रधातौ । ताम्रा । रा.नि.व.१२ । [निघ. ।

**म्लेच्छाशः** । पुं । म्लेच्छभोजने । गोधूमे । वै.

**म्लेच्छास्यम्** । क्ली । ताम्रधातौ । ताम्रा । र.मा ।

## य

**यकृत्** । क्ली । दक्षिणकुक्षेरधःस्थशरीरावयवविशेषे, कालखण्डाभिधरञ्जकपित्ताधारे । যকৃৎ । हिं कलिजा । रा नि.व.१८ । तच्च रक्तजन्यं । "गर्भस्थस्य यकृत्प्लीहानौ शोणितजौ ।" सु श ४ अ. । तत्स्वरूप यथा—"अधो दक्षिणतश्चापि हृदयाद्यकृतस्थितिः । तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् । प्लीहामयस्य इत्यादि समस्तं यकृदामये । किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः ॥" भा. । [মেটে । ম.চ ।

**यकृदात्मिका** । स्त्री । तैलपायिकायाम् ।

**यकृद्दाल्युदरम्** । क्ली । उदररोगभेदे । लक्षण यथा—"वामे च पार्श्वे परिवृद्धिरेति विशेषत. सीदति चातुरोऽत्र । मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतो हीनबलोऽतिपाण्डुः । सव्येतरस्मिन् यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव ॥" सु नि.७अ. ।

**यकृद्वैरी** (इन्) । पुं । रक्तरोहितकवृक्षे । লাল রোহিত, বয়না । श.च ।

**यजा** । स्त्री । कृष्णतुलसीवृक्षे । वै.निघ. ।

**यज्ञज्ञाता** (तृ) । पुं । महासोमलतायाम् । [नि व.३ ।
वै.निघ ।

**यज्ञधूपः** । पुं । सर्ज्जवृक्षे । धुनाव गाछ । रा.

**यज्ञनेता** (तृ) । पुं । महासोमलतायाम् । वै. निघ ।

**यज्ञपशुः** । पुं । घोटके । श.मा. ।

**यज्ञपादपः** । पुं । विकङ्कतवृक्षे । বঁইচি গাছ । भा. । [रा.नि.व ८ ।

**यज्ञभूषणः** । पुं । सितदर्भे । শ্বেত কুশ ।

**यज्ञयोग्यः** । पुं । उदुम्बरवृक्षे । रा नि.व.११ ।

**यज्ञवल्ली** । स्त्री । सोमलतायाम् । रा.नि.व.३।

**यज्ञवृक्षः** । पुं । वटवृक्षे । नदीवटे । रा.नि.व. ११ । विकङ्कतवृक्षे । বঁইচি গাছ । भा. ।

**यज्ञश्रेष्ठा** । स्त्री । सोमलतायाम् । रा नि.व.३।

**यज्ञसंस्तरः** । पुं । शुक्लदर्भे । वै.निघ. ।

**यज्ञसाधनी** । स्त्री । सोमलतायां । वै निघ ।

**यज्ञसारः** । पुं । यज्ञोदुम्बरवृक्षे । रा.नि.व.११।

**यज्ञसूत्रम्** । क्ली । यज्ञोपवीते ।

**यज्ञाङ्गः** । पुं । उदुम्बरवृक्षे । যজ্ঞডুমুর । र. मा. । खदिरवृक्षे । रा.नि.व.८ । भार्ग्यां । বামনহাটি । श च. ।

**यज्ञाङ्गा** । स्त्री । सोमलतायाम् । रा.नि व.३।

**यज्ञिकः** । पुं । पलाशवृक्षे । जटा. ।

**यज्ञि(ज्ञी)यः** । पुं । विकङ्कतवृक्षे । বঁইচি গাছ । रा.नि.व.९ । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । रा.नि.व.११ ।

**यज्ञियपत्रकः** । पुं । सितदर्भे । শ্বেত কুশ । रा.नि व.८ । 'घातकपत्रकः' इत्यपि पाठ. पुस्तकान्तरे दृश्यते ।

**यज्ञीयब्रह्मपादपः** । पुं । विकङ्कतवृक्षे । বঁইচি গাছ । रा.नि.व ९ ।

**यज्ञेष्टम्** । क्ली । दीर्घरोहिषवृक्षे । रा.नि.व.८।

**यज्ञोदुम्बरः** । पुं । (Fycus glomerata.) उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । हिं गुलार, उमर । तै मयडीचेट्टु । ता. अत्ति । गुणा.—हिमः रूक्षः गुरुः पित्तकफरक्तघ्नः मधुरः तुवरः वर्ण्यः व्रणशोधनः रोपणश्च । भा. । See उदुम्बरः ।

**मोरटः (कः)** । पुं । लताकराड इति प्रसिद्धे वृक्षभेदे । प.मु. । क्षीरमोरटे वा । लताकराड, क्षीरकराड । गुणा.—सकषायमधुरः हृद्यः व ल्यः पित्तदाहज्वरघ्नश्च । रा नि व.३ । अङ्कोलवृक्षे । आँकोड गाछ । सु.सू.३८अ. । खदिरभेदे । श्वेत खदिर । वै.निघ. ।

**मोरटा** । स्त्री । मूर्व्वायाम् । मूर्गा । प.मु. । रा.नि.व.३ । सु सू.३८अ. । वा.सू.१५अ.वरणादि. । गाङ्खीटकवृक्षे । मेओड़ा गाछ । सु.सू.३८अ. । [दुग्धकूर्चिकायाम् । वै.निघ. ।

**मोरणम्** । क्ली । तक्रनिर्यासे । क्षीरनिर्यासे ।

**मोर्वी** । पुं । मूर्व्वायाम् । वै.निघ. ।

**मोहः** । पु । विपरीतज्ञाने ।•भा.मध्य.श्लेष्म.चि. चि. । म.ख.४अ विस्फोट.चि. । मूर्च्छायाम् । भा. नि. । [ख्याते वृक्षविशेषे रा.नि.व.९ ।

**मोहकारी (इन्)** । पुं । माड इति कीटभेदे

**मोहनः** । पु । धुस्तूरवृक्षे । रा.नि.व.१० । कामुककवृक्षे । चित्तविभ्रमे । वै.निघ. । क्ली । सुरते । हे.च. ।

**मोहनभोगः** । पुं । See लप्सिका ।

**मोहनवल्ली** । स्त्री । वन्दाके । वा.उ.५५अ. ।

**मोहना (नी)** । स्त्री । त्रिपुरमल्लिकायाम् । रत्ना. । वनमल्लिकायाम् । रा.नि.व.१० । उपोदिकायाम् । रा.नि.व.७ ।

**मोहनिका (हिनी)** । स्त्री । त्रिपुरमल्लिकायाम् । र.मा. । सु.चि.२८अ. । वनमल्लिकायाम् । रा.नि.व.१० । शतदलमल्लिकायाम् । प.मु. । कटफली । वटपत्रपाषाणभेदे । भद्रायाम् । भिक्षि । मद्यविशेषे । उपोदिकायाम् । शूंठे । वै.निघ. ।

**मोचः (कः)** । पु । पाटलवृक्षे । मे. । (कः) मुष्ककवृक्षे, पलाशवत्पर्णतरुवृक्षे । घण्टापारुल । भा । [ड काक । वै.निघ. । काके । हे.च. ।

**मौकुलिः (ली(इन्))** । पुं । द्रोणकाके । वै.-

**मौक्तिकम्** । क्ली । चर्म्मे । वै.निघ. । मुक्तायाम् । मुक्ता । हि मोती । गुणा.—मौक्तिक शीतलं वृष्यं चक्षुष्यं बलपुष्टिकृत् । भा.पु.१भ.रत्न वर्गः । शोधनादिकं माणिक्यशब्दे द्रष्टव्यम् । तस्यैव, मात्रादिकः । वा.उ.२०अ. ।

**मौक्तिकतण्डुलः** । पुं । धवलयावनाले । श्वेत जनार । रा.नि.व.१६ ।

**मौक्तिकप्रसवा** । स्त्री । मुक्ताशुक्तौ । मुक्ताशिनुक । रा.नि.व.१३ । [व.१३ ।

**मौक्तिकशुक्तिः** । स्त्री । मुक्ताशुक्तौ । रा.नि.

**मौक्तिकसम्पुटः** । पु । मुक्ताशुक्तौ । मुक्ताशिनुक । प.मु. ।

**मौक्तिकसम्भवम्** । क्ली । मुक्ताजनने । वै निघ.।

**मौक्तिकस्थानम्** । क्ली । शुक्तिशूकरशङ्खसर्पभेकमत्स्यवेणुगजेषु । वैद्यकम् ।

**मौग्धिकः** । पुं । मधवृक्षे । वै.निघ. ।

**मौञ्जीतृणाख्यः** । पु । मुञ्जतृणे । मुञ्ज । रा.नि व ८ । [नि.व.८ । मुञ्जतृणे । वै.निघ. ।

**मौञ्जीपत्रा** । स्त्री । वल्वजायां । उलू । रा.

**मौच्यम्** । क्ली । मोचे । हे च ।

**मौद्गदलम्** । क्ली । मुद्गदाल्याम् । मुगेर दाल । का.चि.६अ. । [भिक्षा ।

**मौद्गलिः** । पु । द्रोणकाके । वै.निघ । काके ।

**मौनम्** । क्ली । मूकतायाम् । अम. ।

**मौर्व्वी** । स्त्री । मेखलायाम् । चक्रमर्दा । र.मा. । मौरमुखी इति प्रसिद्धौषधौ । प.मु. । [च.

**मौलकः** । त्रि । मूलाकरजे (लवणे) । च.वि ८

**मौलिः** । पु, स्त्री । मस्तके । रा.नि.व.१८ । केशपाशे । अम. । पु । कङ्केलिवृक्षे । भिक्षा. । अशोकवृक्षे । मे. । [घ.१अ.गुडूच्यादिमोदके ।

**मौषली** । स्त्री । मुषल्यां । तालमूली । वै.नि

**मौहूर्त्तिकः** । पुं । ज्योतिर्विदि । अम. ।

**म्रक्षणम्** । क्ली । तैलस्नानाभ्यङ्गे । टेलन इ-त्यादि भाषा । रा.नि.व १५ । तैले । हे.च ।

**म्रातनम्** । क्ली । कैवर्त्तमुस्तके । श.च ।

**म्लाना** । स्त्री । रक्तम्लायाम् । रा नि व.१८ ।

**म्लेच्छम्** । क्ली । हिङ्गुले । रा.नि.व.१३ । भा. को.त्रिपुरभैरवरसे । वै.निघ.१अ.शा ज्वा.चि.मत सञ्जीवनीरसे । ताम्रे । र.मा.सं.मतकञ्जीवनीरसे ।

**म्लेच्छकन्दः** । पुं । श्वेतरशोने । रा.नि.व.७ ।

**यतिः** । पु । यमनियमवति । वै.निघ. । जितेन्द्रिये । अम. । [केन खाड । श र. ।

**यतु(तू)का** । स्त्री । वालुकायन्त्रे । बेतो शां

**यत्नसाध्यः** । त्रि । यत्नेनारोग्यार्हे ।

**यथेष्टचारी** (इन्) । पु । पक्षिणि । अ च. । त्रि. । स्वेच्छाचारिणि ।

**यन्त्रम्** । क्ली । शल्याकर्षणोपायभूतस्वस्तिकादौ । तच्च एकोनशतम् । तदुक्तं—"हस्तमेव प्रधानतमं यन्त्राणामवगच्छ । किं कारणं यस्माद्धस्तादृते यन्त्राणामप्रवृत्तिरेव तदधीनत्वाद्यन्त्रकर्म्मणाम् ।" तानि च षट्प्रकाराणि स्वस्तिकसन्दंशताल नाडीशलाकोपयन्त्रभेदेन इति । तत्र च तुर्विंशति स्वस्तिकानि, द्वे सन्दंशयन्त्रे, द्वे एव तालयन्त्रे, विंशतिर्नाड्यः अष्टाविंशति शलाका, पञ्चविंशतिरुपयन्त्राणीति । यन्त्रकर्म्माणि चतुर्विंशति निर्घातनपूरणादि । सु.सू.७अ. । एषां विशेष स्वस्वपर्य्याये द्रष्टव्य । औषधपाकपात्रविशेषे । तत्र साधारणत षड्विध वालुकादोलास्वेदनविद्याधरभूधरयन्त्राणीति । तेषां लक्षण तत्तत्पर्य्याये दृश्यम् । पारदबन्धनोपायविशेषे । तदुक्तं—"यन्त्रते पारदो यस्मात्तस्माद्यन्त्रमिदं स्मृतम् ।" वै निघ. । [शानियन्त्र । है.च. ।

**यन्त्रगृहम्** । क्ली । तैलनिष्पीडनयन्त्रगृहे ।

**यन्त्रगोलः** । पु । कलायभेदे । मटर । अ च. ।

**यन्त्रणम्** । क्ली । बन्धने । रक्षणे । मे ।

**यन्त्रणवासः** । क्ली । क्षतादिबन्धनार्थं शाटके । वान्धिवार वस्त्र वा न्याटेञ्जल । मा.चि.८७ अ पाण्डुपद्रवे च । "अथ यन्त्रणवाससा ।"

**यन्त्रणा** । स्त्री । पीडायां । व्याक. ।

**यन्त्रापीड़ः** । पु । सन्निपातज्वरभेदे । लक्षण—"येन मुहुर्ज्वरवेगाद् यन्त्रेणेवापीड्यते गात्रम् । रक्तं पीतश्च भवेत् यन्त्रापीडः स विज्ञेय ॥" भा. म १भ ।

**यमः** । पु । इन्द्रियनिग्रहे । काके । छट्टे । कदपविपिणि । मे । कीनाशे । त्रिका ।

**यमकम्** । क्ली । युगले । घृततैल । च.सू.१अ. । ता चि.१५. ।

**यमकबन्धः** । पु । यमलनामव्रणबन्धनभेदे । लक्षणम्—"बध्यते मण्डलाकारो यमलव्रणयोस्तु य । बन्ध यमकनामान भिषजो वर्णयन्ति तम् ॥" सु.सू.१८अ. । [त्रिका ।

**यमकीट.** । पु । भूकीटविशेषे । घुवघुरे ।

**यमचिञ्चा** । स्त्री । अत्यम्लचिञ्चायाम् । थाग्रा तेंतुल । र.मा.मयष्ट, रसाध्याये ।

**यमजः** । त्रि । युग्मजाते । यमज सन्तान । पु । काके । मे । दोषान्विते घोटके । "एकेनाङ्गेन हीनेन भिन्नेन च विशेषत । यमज वाजिन विद्यात् ॥" अ द १अ. ।

**यमदग्नि.** । पु । ऋषिविशेषे । च. ।

**यमदूतकः** । पु । काके । अ र. ।

**यमदूतिका** । स्त्री । तिन्तिडीवृक्षे । अम. ।

**यमद्रुमः** । पु । शाल्मलिवृक्षे । रा.नि.व.८।२१।

**यमप्रियः** । पु । वटवृक्षे । श.र. ।

**यमरथः** । पु । महिषे । वै निघ. ।

**यमलम्** । क्ली । युग्मे । है.च. ।

**यमलच्छद.** । पु । काञ्चनारवृक्षे । रक्त काञ्चन गाछ । रा.नि व १० ।

**यमलपत्रकः** । पु । अश्मन्तकवृक्षे । कोविदारवृक्षे । रा नि व ९ ।

**यमला (ली)** । पु । हिक्काभेदे । त्रिका. । लक्षण—"चिरेण यमलैर्वेगैर्या हिक्का सम्प्रवर्त्तते । कम्पयन्ती शिरोग्रीवं यमला सा विनिर्दिशेत् ॥" मा नि ।

**यमवाहकः** । पु । महिषे । त्रिका. ।

**यमवृक्षः** । पु । शाल्मलिवृक्षे । रा नि.व.८ ।

**यमा(वा)निका (नी)** । स्त्री । (Ligusticum ajwan or Carum copticum Syn Ammicopticum ) Ajara seeds. स्वनामख्यातपण्यद्रव्ये । दण्डान । हि अन् अजवाइन । म ईवा । क न्ड । तै वोमनी । ता ओमम । सा चतुर्धा—यमानीवनयमानीपारसीकखोरासानीभेदेन । गुणा —"रुचनी (देहस्थधातुमलान् विशोषयित्वा) पाचनी रूक्षा गौल्मी-

यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा ॥" क्वाथ सिद्धयवाग्वां क्वाथ्यद्रव्यस्याञ्जलिर्ग्राह्य, वारिच प्रस्थ, पादावशेषो ग्राह्य । "क्वाथ्यद्रव्याञ्जलिं चुष श्रावयित्वा जल तत । पादावशेषे तेनाथ यवागूमुपकल्पयेत् । यूषांश्च रसकांश्चैव क्वथेनानेन साधयेत् ॥" प म १ख । "यवागू षड्गुणे तोये सिद्धा स्यात् कृसरा घना । तण्डुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हि सा । यवागूर्ग्राहिणी बल्या त र्पणी वातनाशिनी ॥" प म २ख. । गुणा —'य वागूर्ज्वरतृष्णाघ्नी लघ्वी बस्तिविशोधनी । अतीसारे ज्वरे दाहे हिता वह्निप्रदीपनी ॥' राज ३प. । "यवागू षड्गुणे तोये संसिद्धा विरलद्रवा । यवागूर्ग्राहिणी तृष्णाज्वरघ्नी बस्तिशोधनी । पित्तश्लेष ज्वरे देया मध्याह्ने सा प्रकीर्त्तिता । वातज्वरेऽपराह्ने सा गोधूमजलनिर्म्मिता ॥" द्रव्यगुण । यवागूर्म दात्ययादौ निषिद्धा—"मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके । ऊर्द्ध्वगे रक्तपित्ते च यवागूरहिता ज्वरे ॥" च द ज्व चि ।

**यवाग्रम्** । क्ली । यवतुषे । यवेर तुष, आ गुडा । वै निघ. १भ पाण्डुचि पञ्चकोलघृते ।

**यवाग्रज.** । पु । यवक्षारे । यवक्षार वा সো রা । च द च च चि. । यमानीक्षुपे । रा नि व ६ । क्ली । काञ्जिके । वै.निघ. ।

**यवान(क)म्** । क्ली,पु । यमान्याम् । वै निघ ।

**यवानिका (नी)** । स्त्री । यमानीक्षुपे । रा नि व ६ । यमान्यां । भा.पू १भ । पारसीकयमान्याम् । वै निघ. ।

**यवानीकः** । पुं । यमानीभेदे । वा.चि ६च. ।

**यवानीशाकम्** । क्ली । यमानीदले । यमा নের শাক । हिं मवाइन । [वै.निघ. ।

**यवान्नम्** । क्ली । यवकृतभक्ते । ख'বের ভাত ।

**यवापत्यम्** । क्ली । यवक्षारे । रा नि व.६ ।

**यवाम्लम्** । क्ली । यवकाञ्जिके । যবের কাঁজি । गुणा —"आम यवाम्लं कटुकं विपाके वातापहं श्लेष्मकरं सरञ्च । पित्तप्रकोप कुरुते समेदि विदाहि पित्तमदात्ययञ्च ॥" चवि ११च ।

**यवाम्लजम्** । क्ली । यवाम्ले, सौवीरकाञ्जिके । रा.नि व १५ ।

**यवास' (कः)** । पुं । (Alhagi maurorum, Syn Hedysaram Alhagi) The camel's thorn. यासक्षुपे । দুরালভা । तें पिल्लरेगटिट्टुलगोंडि । रा नि व ४ । सि यो. पित्तातिसारचि कलिङ्गादौ । च द पि श्लेष्मज्व चि. कण्टकार्य्यादि । च द ज्व चि वासादघृते ।

**यवासशर्करा** । स्त्री । यवासजातशर्करायाम् । तवराज, स्याना, सीरखस्त इति लोके । गुणा —अतिमधुरा पित्तघ्नी श्रमघ्नी तृष्णाघ्नी वृष्या सरा मूर्च्छादाहभ्रमघ्नी च । रा.नि व.१४ । मधुरक षाया तिक्तानुरसा श्लेष्मकरी सरा चेति । सु सू ४५च इक्षुव. । [दुरालभायाम् । वै निघ ।

**यवासा** । स्त्री । गुच्छासिनीक्षुपे । रा.नि,व ८ ।

**यवाह्वः** । पु । यवक्षारे । सु.चि २०च अलस चि । यमान्याम् । स्त्री (ह्वा) । दुरालभायाम् वै निघ.२भ.उन्मा.चि. । यमान्याम् । यवक्षारे । वै निघ. । [रा नि.व.१५ ।

**यवोत्थम्** । क्ली । काञ्जिके । सौवीरकाञ्जिके ।

**यवोद्भवः** । पु । यवक्षारे । रा नि व ६ ।

**यवोद्भूता** । स्त्री । यवशर्करायाम् । वै निघ. ।

**यव्यम्** । क्ली । यवक्षेत्रे । रा.नि व.२ ।

**यशदम्** । क्ली । (Zinkum) Zink धातु विशेषे । दस्ता । यशद बङ्गसदृश रीतिहेतुश्च तन्म त । गुणा —"यशद तुवर तिक्त शीतल कफपि त्तहृत् । चक्षुष्यं परमं मेहान् पाण्डु श्वासञ्च नाशयेत् ॥" भा.पू १भ.धा व ।

**यशस्करी** । स्त्री । ऋद्धजीवन्तीलतायाम् । रा. नि व ३ । मञ्जिष्ठायाम् । वै निघ. ।

**यशस्या** । स्त्री । ऋद्धौ । ঋদ্ধি ওষধি । रा नि व ५ । जीवन्तीलतायाम् । रा नि व ३ ।

**यशस्विनी** । स्त्री । यवतिक्तालतायां । महाज्योतिष्मतीलतायां । रा नि व.३ । वनकार्पासे । श र. ।

**यशोदः** । पुं । पारदे । रा नि व.१३ ।

**यष्टिः** । पुं, स्त्री । भार्ग्यां । বামনহাটী । रा. नि व.६ । वै निघ,मधुरत्र,चि मधुकादि । यष्टि-मधुके । श. ।

वीकरणमङ्गाना बल्यं वह्निविवर्द्धनम्।" राज,२प.।

**यापनवस्तिः** । पुं । निरूहवस्तिभेदे । "घृत-क्षौद्राज्यचीरतैलानां प्रसृतं प्रसृतं भवेत् । हवुषासैन्धवाचाग्नो वस्ति. स्याद्यापन परः॥" भा. ।

**याप्यः** । त्रि । दुःखसाध्ये । तल्लक्षणम्—"यापनीयन्तु तं विद्यात् क्रिया धारयते हि यम् । क्रियायान्तु निवृत्तायां सद्यो यस्तु विनश्यति ॥" भा। याप्यत्वमसाध्यत्वञ्च द्विधा प्रकृतित उपेक्षयाचेति। "याप्याः केचित् प्रकृत्यैव केचिदाप्या उपेक्षया।" सारचन्द्रिका।

**यामघोषः** । पुं । कुक्कुटे । श.मा.। स्त्री (षा) । घटिकायन्त्रे । घडि । चिका. ।

**यामनादी** (इन्) । पुं । कुक्कुटे । वै.निघ. ।

**यामिनी** । स्त्री । हरिद्रायाम् । रा निःव.६ ।

**यामिनीचरः** । पुं । गुग्गुलौ । पेचके । वै. निघ. । [श.र.।

**यामिनीपतिः** । पुं । कर्पूरे । मे. । चन्द्रे ।

**यामुन(नेय)म्** । क्ली । स्रोतोऽञ्जने । तथा । सौवीराञ्जने । रा.नि व.१३।

**यामुनेष्टकम्** । क्ली । शीषधातौ । जटा. ।

**याम्यम्** । क्ली। चन्दने । मे । वै निघ चयरी. चि.चन्दनादितैले ।

**याम्यज्वरः** । पुं । मज्जहीनमध्यगतादिजनितसन्निपातज्वरे। लक्षण—"हृदयं दह्यते चास्य यकृत्प्लीहान्त्रफुप्फुसाः । पच्यन्तेऽत्यथमूर्द्धञ्च पूय शोणितनिर्गमः। शीर्णदन्तश्च मृत्युश्च तचाप्येतद्विशेषतः। भिषग्भिः सन्निपातोऽयं याम्यो नाम्ना प्रकीर्तित ॥" भा.म.१म । [निघ. ।

**याम्यदिग्भवा** । स्त्री । तमालपत्राम् । वै.

**याम्यद्रुमः** । पुं । शाल्मलिवृक्षे । वै निघ ।

**याम्योद्भूतः** । पुं । कोड़्ये प्रसिद्धे शीतालवृक्षे । रा.नि.व ८ । [वै.निघ. ।

**यायः** । पुं । चलक्तके । अम. । लाक्षायाम् ।

**यावकः** । पुं । कुलत्थे । प.मु. । यवाम्बौ । यदेवर याउ । हि च. । च.चि १ध.। माषे । माष कलाया अम । बोरोधान्यद्वये । माषाकारपचे का सुलक्षीति ख्याते । सुभूतिः । अलक्तके । श.र. । यवान्ने । सिद्ध यव । हि च. । गुणाः—"यावकोऽतिगुरुः स्वादुर्वृष्य. स्निग्ध. प्रकीर्तितः । गुल्मज्वरप्रतिश्यायकण्ठकासमिहहा ॥" वै निघ. ।

**यावनः** (कल्क.) । पु । शिलारसे । अम. ।

**यावनकः** । पुं । रक्तैरण्डे । वै निघ ।

**यावनालः** । पुं । (Zea mays) स्वनामकशिम्बीधान्ये । काल जनार जनार, जुयारा । हि भुट्टा, मक्का । तें मक्का जोन्नलु । बम् मकई, बुट, वजा । ता. मक्कशोल्लम् । गुणाः—अस्य शरमूलम् ईषन्मधुर रुच्य शीतं पित्तघ्न तृषाहरं पथ्यना दौर्बल्यकरञ्च । रा.नि.व.१६ ।

**यावनालनिभः** (भा) । पु । यावनाले । रा.नि व.८।

**यावनालरसजगुड़ः** । पुं । तद्रसजातगुडे । जनारेर गुड । गुणाः—चारः कटुः सुमधुर कफवातघ्न. पित्तल. नित्यसेवनेन कण्डूकुष्ठजनन. रक्तदाहघ्नश्च । वै निघ । •

**यावनालशरः** । पु । यावनालस्य शरे । जनारेर शर । हि जोहरली । गुणाः—ईषन्मधुरः रुच्य शीतल. पित्तदाहहर. पथ्यनासबलप्रदश्च । रा.नि.व.१६ ।

**यावनाली(शर्करा)** । स्त्री । यावनालगुडजातशर्करायां । जनारेर चिनि। गुणाः—शैत्या उष्णा तिक्ता अतिपिच्छिला वातघ्नी सारका रुच्या दाहपित्तासंदा च । रा.नि व १४ ।

**यावनी** । स्त्री । करडशालिनामिकौ । रा.नि. व.१४ । रसालिको । वै.निघ ।

**यावशूकः** (जः) । पुं । यवक्षारे । च.द.सि. यो कास.चि.कुलत्थाद्यघृते । "दाडिमगुडयावशूकानाम् ।" (लवङ्गादिचूर्णे) ।

**यावि:** (वी) । स्त्री । शङ्खिन्याम् । वै.निघ । (वी) यवतिक्तालतायां । रा.नि.व.३ । [मु. ।

**याविकः** । पु । यवनाले । काल जनार । प.

**याव्यः** । पु । यवक्षारे । वै.निघ. ।

**यासः** (कः) । पु । रक्तदुरालभायां । गुणाः—मधुरः तिक्तः शीतः पित्तदाहहरः बल्यः तृषाकफच्छर्दिघ्नश्च । रा.नि.व.४ । सि.यो ज्व चि,षष्टा-

**यष्टि(ष्टी)कः** । पु, क्ली । यष्टिमधुनि । रा.नि व ६। च.सू ४अ। टिट्टिभे । तितिव पाखी । श.र. । स्त्री । भार्ग्यां । वामनहाटी । प मु. । भद्विडायाम् । सि यो.वटकरञ्जतैले । यष्टिमधुनि श.र. । [करणोपायै । सु सू.४३अ. ।

**यष्टिकाम्लामणम्** । क्ली । जलस्य शीतली

**यष्टि(ष्टी)पुष्पः** । पु । पुत्रञ्जीववृक्षे । भा ।

**यष्टि(ष्टी)मधु (कम्)** । क्ली । (Glycyrrhiza glabra.) स्वनामख्यातमधुरकाष्ठे । यष्टिमधु । हला । हि जेठीमधु । मुलहटी । तें मिष्ट मूलविशेषस्तु । जलजस्थलजभेदेन द्विधा । "आनूप स्थलजञ्चैव प्रत्येक द्विविधं स्मृतम् ।" च सू १अ. । गुणा.—मधुर किञ्चित्तिक्त चक्षुष्य शीतल पित्तघ्न शोथघ्न व्रणापहम् । रा.नि.व ६ । सुश्रुतेऽस्य मूलस्य माधुर्य, किन्तु विरेचनं प्रति फलमेव प्रशस्तम् । च सू १अ.टी. । स्निग्ध शिथिलकारकञ्च । केचित् ।

**यष्टिमधुका** । स्त्री । यष्टिमधुनि । अम. ।

**यष्टिलता** । स्त्री । भ्रमरारिपुष्पवृक्षे । भ्रमरमारीति मालवदेशे प्रसिद्धा । रा.नि.व.१० ।

**यष्टी** । स्त्री । यष्टिमधुनि । प मु । रा.नि.व.६ । रस र स्वनरी वि । वा.सू.१५अ सारिवादि । "यष्टी परुषक हन्ति ।" च.द.ज्व चि शिरोलेपे । "यष्टीवदरकाञ्जिकम् ।" भैष हृद्रक्तखदिरवटी. ।

**यष्टीकर्णः** । पु । तन्नामककर्णव्यधनाकृतौ । "तदाकार यष्टितमासमस्यं शिरातत सूक्ष्मपालि च ।" सु.सू १६अ. ।

**यष्ट्याह्वम्** । क्ली । यष्टिमधुनि । रा.नि व.६ । वा सू.हरिद्रादिव. । सि.यो.र पि.चि सुशादि । चक्रद.चि.कुष्माण्डकघृते ।

**यक्षकर्दमः** । पु । कर्पूरादिकृतगन्धानुलेपने । स च समभागकर्पूरागुरुकस्तूरीकङ्कोलात्मक । "कर्पूरागुरुकस्तूरीकङ्कोलैर्यक्षधूपक. । चन्दनागुरुकर्पूरनाभिकाचन्द्रचन्दनसमांशसम्भृतम् । यक्षपूजनपरैकगोचर यक्षकर्दममिम प्रचक्षते ।" रा. नि.व.२२ ।

**यक्षग्रहः** । पु । यक्षोन्मादे । रा.नि व.४५ ।

**यक्षतरुः** । पु । वटवृक्षे । रा.नि.व ११ ।

**यक्षधूपः** । पु । सर्जरसे । धूना । प मु. । रा.नि व.१२ । सर्जतरौ । सरलनिर्यासे । डामिन ठैल । है.च । यक्षकर्दमे । रा.नि.व २२ ।

**यक्षरसः** । पु । पुष्पमद्ये । विका. ।

**यक्ष(क्षा)वासः** । पु । वटवृक्षे । मद.व.५ । रा.नि व ११ । [श.भा. ।

**यक्षामलकम्** । क्ली । पिण्डीखर्जूरकफले ।

**यक्षोदुम्बरकम्** । क्ली। अश्वत्थफले । विका ।

**यक्षोन्मादः** । पु । यक्षावेशकृते उन्मादविशेषे । लक्षण—"ताम्राक्ष प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक सहिष्णु । तेजस्वी वदति च किं ददामि कस्मै ॥" भा. ।

**यक्षाङ्गी** । स्त्री । द्राक्षायाम् । श.मा. ।

**यक्ष्मा (क्ष्मन्)** । पु । तन्नामकरोगे । यक्ष्मारोगे । यक्ष्यते पूज्यते इति । तन्निदान—"वेगरोधात् च यासैव साहसाद्विषमाशनात् । त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥" तन्निरुक्ति —"वैद्यो व्याधिमता यस्मात् व्याधिर्येनेन यक्ष्यते ।" भा. । See राजयक्ष्म ।

**याचनक.** । पु । रक्तैरण्डवृक्षे । रा नि व ८ ।

**याजः** । पु । अन्ने । सिद्धतण्डुलान्न । हे च. ।

**याज(ज्ञि)कः** । पु । पलाशवृक्षे । रा नि.व. १० । कुशतृण । कुश । श.र । रक्तखदिरवृक्षे । रा नि व.८ । अश्वत्थवृक्षे । रा नि.व ११ ।

**याजुष.** । पु । तित्तिरपक्षिणि । वै निघ. ।

**यातना** । स्त्री । अतितीव्रवेदनायाम् । अम. ।

**यातयामः** । पु । वृद्धे । रा नि व.१८ । त्रि । जीर्णे । अम. । उच्छिष्टे । मे ।

**यातुक.** । पु । पत्रशाकविशेषे । गुणा –पौलुपर्णवत् । च सू.२७अ. । स्त्री (का) । मयूरशिखायाम् । वै.निघ ।

**यातुघ्नः** । पुं । गुग्गुलौ । रा नि व.१२ ।

**यादः** । क्ली । जलजन्तौ । अम. ।

**यादोनिवासः** । पु । जले । हे.च. ।

**यानम्** । क्ली । गमने । हस्त्यादिधर्मभवे । गुणा —"हस्त्यश्वरथदोलादेर्भ्रमण वातकोपन। स्थि-

**युवतीष्टा** । स्त्री । स्वर्णयूथिकायाम् । रा.नि.व.१० । [वयस्के । युवा । रा नि व.१८ ।

**युव (न्)** । पुं । षोडशमारभ्य पञ्चाशत्पर्यन्त-

**युवानपिडका** । स्त्री । यौवनकृतमुखव्रणे । बयसफोड़ा । भैष.चद्रपी.चि. ।

**युवावस्थ:** । पुं । यूनि । रा.नि.व.१८ । [क्व.।

**यू:** । स्त्री । मुद्गादिद्विदलधान्यकृतयूषे । यूष । इ

**यूक:** । पुं । वकवृक्षे । प.मु. । मत्कुणे । त्रटा.। स्त्री (का) । कृष्णोदुम्बरे । यमान्यां । वै.निघ. ।

**यूकाण्ड:** । पुं । लिक्षायां । लिखि । वै.निघ.।

**यूकारी** । स्त्री । लाङ्गलिकायाम् । विंषलाङ्गलिया । वै निघ. । [छ । रा.नि.व.६ ।

**यूकावास:** । पुं । आखोटवृक्षे । श्याओड़ा गा

**यूथप:** । पुं । सुनिषण्णकशाके । वै.निघ. ।

**यूथा** । स्त्री । पाठायां । आकनादि । वै.निघ.।

**यूथिका** । स्त्री । (Jasminum auriculatum.) स्वनामख्यातपुष्पवृक्षे । जूहि । हिं जूही, स्वर्णजूही । मं पांडरीजूई । कं विलियमौल्लि । यूथिका श्वेतवर्णभेदेन द्विधा । गुणा: —यूथिकायुगलं स्वादु शीतलं शर्करार्ध पित्तदाहतृषार्थं स व्रणास्दोषघ्न । "सितपीतनीलमेचकनाम्ना कुसुमेन यूथिका: कथिता: । तिक्ताहिमपित्तकफामयज्वरघ्ना: श्रमादिदोषहरा: । इति साधारणगुणा: । सर्वासां यूथिकानान्तु रक्तशोधादिसाम्यता, स्वर्णयूथिकायान्तु सुरूपता सुगन्धता च विशेषतो वर्त्तते । रा.नि.व.१० । "यूथीयुगं हिमं तिक्तं कटुपाकरसं लघु । मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम् । व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम् ॥" भा. । पाठायां । आकनादि । रा.नि.व.६ । अम्बष्ठके । मे. ।

**यूथिकापर्ण:** । पुं । पालोमपर्णे । वै निघ. ।

**यूथी** । स्त्री । यूथिकायां । अ.र. । एकयूथिकायाम् । स्वर्णयूथिकायाम् । वै.निघ. ।

**यूप: (क:)** । पुं । मदनवृक्षे । मद.व. ।

**यूपद्रु: (म:)** । पुं । खदिरवृक्षे । त्रिका. । रक्तखदिरे । रा.नि व.८ ।

**यूपलक्ष्य:** । पुं । पक्षिणि । श.मा. ।

**यूष:** । पुं, क्ली । मुद्गादिरसे । डाल, कलायादिर झोल । "अष्टमुद्गदलानान्तु पलेकेन विपाचित: । पूतापनीतविदल: तनुर्यूष: कृताकृत: । तद्वैद्या. पलं द्रव्यं ग्राहयन्ति कलादके । भेषजस्यातिबाहुल्यात्कदाचिद्दुषितभवेत् । पेया मण्डादियोगेषु भेषजं यत्प्रकीर्त्तितम् । तत्तथैव प्रयोक्तव्यमकृचिनं भवेत् यथा ॥" तोड़नानन्दोद्धृतनलात् । चतुर्भागाम्बुसाधितनिष्पीडितवैदलादिसम्भूतवारि यूष उच्यते । "वैदलान् वितुषान् भृष्टान् चतुर्भागाम्बुसाधितान् । निष्पीड्य तोयमेतेषां संस्कृतं यूष उच्यते ॥" प.मु । "… यूष: किञ्चिद्घन: स्मृत: ।" गुणा —"यूषो बल्य: स्मृत: कण्ठ्य: लघुपाक: कफापह: ।" प.प्र २ख. । द्विदलादिरन्धनद्रवे । "रन्धनद्रवो यूष ।" इति । सा.कौ. । मांसरसे । "यूषो बहुविध: वैदलादीनां वैचित्र्यात् । विशेषा: स्वस्वपर्याये मन्त्या. । पुं । अमदारुवृक्षे । श.र. ।

**योकम्** । क्ली । यूकाण्डे । सि.यी कमि चि. ।

**योग:** । पुं । औषधे । द्रव्ये । उपाये । त्रिका.। येन वाक्यं युज्यते स योग. । सु.उ.६१ष. । "यदौषधन्तु प्रथमं यस्य योगस्य कथ्यते । तन्नाम्नैव स योगो हि कथ्यतेऽत्र विनिश्चय: ॥" प प्र.१ख. । वपुस्थैर्ये । मे. । [विशेषे श्रीहर्षसूरिकृते ।

**योगचिन्तामणि:** । पुं । चिकित्सासंग्रह-

**योगजम्** । क्ली । अगुरुणि । कालागुरुणि । भा. । [विशेषे त्रिमल्लभट्टकृते ।

**योगतरङ्गिनी** । स्त्री । वैद्यकचिकित्सासंग्रह-

**योगनाविक:** । पुं । मत्स्यविशेषे । हारा. ।

**योगरङ्ग:** । पुं । नागरङ्गवृक्षे । रा.नि व.११ ।

**योगरत्नाकर:** । पुं । चिकित्साग्रन्थविशेषे ।

**योगराजगुग्गुलु:** । पुं । कफवाताधिकारे, आमवाते च औषधम् । पाठ:—"चित्रक पिप्पलीमूलं यमान्यौ कारवीन्तथा । विडङ्गान्यजमोदाश्च जीरकं सुरदारु च । चव्यैला सैन्धवं रास्ना तथा गोक्षुरधान्यकं । त्रिफला मुस्तकं व्योषं त्वगुशीरं यवाग्रजं । तालीसपत्रं पत्रञ्च तुल्यचूर्णानि कारयेत् । यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुं ।

न्नावलीहे । "ब्यीवं यासक कारवीभ" च.द.चभि न्यासञ्ञ.चि. । "यासमर्गीपुनर्नवा ।" [निघ ।

**यासशर्करा** । स्त्री । यवासशर्करायाम् । वै

**यासा** । स्त्री । मदनशलाकापक्षिणि । श.मा । सि यी.कास चि. । "मूर्वातिक्ता निशा यासा ।"

**युक्तरथः** । पुं । निरूहवस्तिभेदे । 'एरण्डमूल निक्काथो मधुतैल ससैन्धव । एष युक्तरथो वस्तिः सवचापिप्पलीफल' ॥" भा. ।

**युक्तरसा** । स्त्री । गन्धरावाया । सामान्यरासा यां । रा.नि.व.६ । काँटा चामदली इति भाषा । अम.भ. ।

**युक्तश्रेयसी** । स्त्री गन्धरावायां । रा.नि.व ६।

**युक्ता** । स्त्री । रासायां । वा.सू.१५च.रौप्रादिः। वृक्षभेदे । एखानीति लोके । र.मा. ।

**युक्तिव्यपाश्रयः** । त्रि । या चेष्टा प्रत्यक्ष फलति तदौषधवाचके, समीचनसमसमौषधवाचके च । च वि ८च. ।

**युगम्** । क्ली । ऋद्धी । मेथजे । हस्तचतुष्टये । भी. । "न युगमात्रदृक् ।" च.सू.८च ।

**युगच्छदः** । पुं । चापटा इति ख्याते वृक्षे । वै.निघ.उन्मा.चि ।

**युगन्धरः** । पुं । यावनाले । जनार्द्र । वै निघ.

**युगन्धरभक्तम्** । क्ली, पुं । यावनालभक्ते । गुणा:—' चप्रसाधितभक्तो युगन्धरायां भक्तश्च यन्मो विशदमधुरश्च । कफे त्रिदोषप्रशमने च कथ्यते वा सो च श्वासात्मकरव स स्मृत. ॥" चवि.२१च. ।

**युगन्धराम्लम्** । क्ली । यावनालकृतकाञ्जिक विशेषे । गुणा.—"युगन्धराम्ल कफवातहृन्न् मूत्रामयानां जरणकर्तुं । तीक्ष्णं तयाम्ल श्रमदीपदृन्न मेहार्शसो: रक्तहितं मतच ॥" चवि ११च.।

**युगप(पा)त्रः (कः)** । पुं । रक्तकाञ्चनवृक्षे । प.मु. । चम. । कञ्चनके । लोभ्रे । वै.निघ. ।

**युगपत्रिका** । स्त्री । शिंशपावृक्षे । सर्पवृक्षे । त्रिका. ।

**युगपात्रिका** । स्त्री । शिंशपावृक्षे । त्रिका. ।

**युगभद्रराजः** । पुं । भद्रराजे केशराजे च । संग्रह: ।

**युगलाक्षः** । बर्बूरकवृक्षे । बाबला गाछ । रा. नि.व.८ ।

**युगाचिगन्धा** । स्त्री । वृद्धदारकलतायाम् । वीजताडक । प मु । [निघ. ।

**युग्मला** । स्त्री । सुगन्धवृषे, रोहिषवृषे । वै

**युग्मम्** । क्ली । युगले । [छ । मद.व.६ ।

**युग्मकण्टका** । स्त्री । बदरीवृक्षे । कुल गा-

**युग्मपत्रः (कः)** । पुं । रक्तकाञ्चनवृक्षे । र. मा. । भूर्जवृक्षे । सप्तपर्णवृक्षे । वै.निघ. ।

**युग्मपत्रिका** । स्त्री । शिंशपावृक्षे । श र. ।

**युग्मपर्णः** । पुं । रक्तकाञ्चनवृक्षे । रा.नि व. १० । सप्तपर्णवृक्षे । रा.नि.व.१२ । स्त्री (र्णा) । वृश्चिकालीक्षुपे । श चि ।

**युग्मफला** । स्त्री । इन्दीवरामलतायाम् । रा. नि व ३ । वृश्चिकालीलतायां । विछाति गाछ । रा.नि व.६ । [प.मु. ।

**युग्मफलिनी** । स्त्री । दुग्धिकायां । थिङ्कई ।

**युग्माञ्जनम्** । क्ली । अञ्जनद्वये । एकं स्रोतोऽञ्जनम् अपरं सौवीरमिति । अरुण. । वा.सू.१५ च.प्रियङ्ग्वादिव. । [वै.निघ. ।

**युग्या** । स्त्री । ऋद्धी । ऋद्धि । वृद्धी । वृद्धि ।

**युजौ** । पुं द्वि. । अश्विनीकुमारौ । त्रिका. ।

**युञ्जातकः** । पुं । वृक्षविशेषे । गुणा.—"बल्यः शीतो गुरु. स्निग्धस्तर्पणो बृंहणात्मकः। वातपित्तहरः स्वादुः वृष्यो युञ्जातकः परं ॥" च.सू.२७च.।

**युद्धसारः** । पुं । अश्वे । श.च. ।

**युधिष्ठिरराजः** । पुं । कदम्बविषे । कौद् गाछ । त्रिका. ।

**युयुः** । पुं । घोटके । हला. ।

**युयुक्खुरः** । पुं । क्षुद्रव्याघ्रे । श.च. ।

**युवगण्डः** । पुं । पोन्के । त्रिका. । यूनी गण्डस्थले । वयस्फोड़ा । श.र. ।

**युवती** । स्त्री । हरिद्रावर्णायां क्षिति । रा.नि.व. १८ । प्रियङ्गी । च.चि.१च.ब्राह्मरसायने । स्वर्णयूथिकायाम् । वै.निघ. । हरिद्रायां । श.च. ।

समम्यं सर्पिषा गाढं स्निग्धे भाण्डे निधापयेत्। त तो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि। योगराज इति ख्यात ·॥" চিতামূল, পিপুলমূল, যমান, কৃষ্ণজীরা, বিডঙ্গ, বনযমান, জীরা, দেবদারু, চই, এলাইচ, সৈন্ধব, কুড, রাস্না, গোক্ষুর, ধনিয়া, আমলা, হরীতকী, বহেড়া, মুতা, শুঁট, পিপুল, মরিচ, গুড়ত্বক্, বেণার মূল, যবক্ষার, তালীশপত্র তেজপত্র প্রত্যে কে সমভাগ চূর্ণ সমষ্টি করিবে, সেই চূর্ণ সমষ্টির সমান শুদ্ধ মহিষাক্ষগুগ্গুল। গুগ্গুল ঘৃতের সহিত মাড়িয়া পরে তাহার সহিত চূর্ণ মিশাইবে। মাত্রা ॥॰ তো.। रस ६.। भा.। [रदे। मधुनि। इ.च.। धारि। वै.निघ.।

**योगवाही (इन्)**। पुं। सर्जिकाक्षारे। पा

**योगशतकम्**। क्ली। चिकित्सासंग्रहग्रन्थे स ; चौदासकृते। • [व.६।

**योगसारः (कः)**। पु। नागरङ्गवृक्षे। मद

**योगा(गी)रङ्गः**। पु। नागरङ्गवृक्षे। रा नि. व.११। [रा.नि.व.७।

**योगिदण्डः**। पु। वेत्रवंशे। বেউড় বাঁশ।

**योगी(गि)ष्टम्**। क्ली। सीसधातौ। र.मा.। रा.नि.व.१३।

**योगेश्वरी**। स्त्री। वन्ध्याकर्कोटक्याम्। भा। नागदमन्याम्। नागदमनी। वै निघ।

**योग्यम्**। क्ली। पुष्पकासीसे। रा.नि.व.१३। ऋद्धौ। वृद्धौ। वम। चन्दने। वै.निघ.। स्त्री (ग्या)। ऋद्धौ। रा.नि.व.५। वृद्धौ। गोरोचना याम्। वै.निघ.। [सि.। भजयपाल।

**योजनगन्धा (न्धिका)**। स्त्री। कस्तूर्याम्।

**योजनपर्णी**। स्त्री। मञ्जिष्ठायाम्। प सु.।

**योजनमल्लिका**। स्त्री। आस्फोतायाम्। रा- पदमाली। भैष श्च चि.पानीयवटी।

**योजनवल्लिका (ल्ली)**। स्त्री। मञ्जिष्ठायां। रा.नि.व.६। वा.सू.१५अ.प्रियङ्ग्वादिग.। "प्रियङ्- ग्वी योजनवल्यनन्ता।" सु सू.३८अ प्रियङ्ग्वादि.।

**योमलः**। पु। यावनाले। जनार्द्र। हे.च.।

**योनिः**। पु, स्त्री। स्त्रीचिह्ने। रा.नि.व.१८। सा तु गर्भस्थाया स्तम्भमासैर्भवति। सुखबोधः। स्वरूप यथा—"शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता सा प्रकीर्तिता। तस्यास्तृतीये त्वावर्ते गर्भशय्या प्रति- ष्ठिता॥" उपस्थे। जले। कारणे। हे च.। उत्प- त्तिस्थाने। सा चतुर्विधा जरायुजाण्डजस्वेदजोद्भि- ज्जभेदात्। च शा.३अ।

**योनिकन्दः**। पु। स्त्रीरोगविशेषे। निदाना- दिक कन्दशब्दे द्रष्टव्यम्। [नित्यापदि। निदा.।

**योनिदोषः**। पु। उपदंशे। स्त्रीरोगे। यो

**योनिभ्रंशः**। पु। योनिबहिर्गमने। सु.नि. ८अ.।

**योनिरञ्जनः**। पु। योनिदोषभेदे। निदा।

**योनिरोगः (व्यापत्)**। पु, स्त्री। उदाव र्तादिस्त्रीरोगे। निदान—"प्रहृष्टलिङ्ग पुरुष या त्यर्थमुपसेवते। रूक्षदुर्बलबालायास्तस्या वायुः प्र- कुप्यति। स दुष्टो योनिमासाद्य योनिरोगाय क- ल्पते। त्रयाणामपि दोषाणां यथास्वं लक्षणेन तु॥ विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे। मिथ्या- चारेण ता स्त्रीणां प्रदुष्टेनार्तवेन च। जायन्ते बी जदोषाच्च दैवाच्च शृणु ताः पृथक्॥ सर्व्वलिङ्गसमु त्थाना सर्व्वदोषप्रकोपजा। चतसृष्वपि चाद्यासु सर्व्वलिङ्गोच्छ्रयो भवेत्। पञ्चसाध्या भवन्तीह यो- नय सर्व्वदोषजा॥" सु उ.३८अ.। नामानि यथा—उदावर्ता वन्ध्या विप्लुता परिप्लुता वात- ला, वातदोषेण। लोहितक्षरा वामिनी वामिनी पुत्रघ्नी पित्तला, पित्तदोषेण। अत्यानन्दा कर्णिनी अचरणा (चरणा वा) अतिचरणा श्लेष्मला, श्लेष्म दोषेण। षण्ढी अण्डिनी (वा फलिनी) महती सू- चीमुखी त्रिदोषिणी, त्रिदोषदोषेण। मा नि.। अतिचरणा उदावर्ता प्रस्रता जातघ्नी अन्तर्मुखी सूचीमुखी शुष्काख्या वामिनी षण्ढसंज्ञा महायो- नि. रक्तयोनि पैत्तिकी श्लैष्मिकी लोहितक्षया प- रिप्लुता उपप्लुता विप्लुता कर्णिनी सान्निपातिकी चेति। वा.उ ३३अ.। आसां लक्षणानि स्वस्वप- र्याये मन्तव्यानि। [योन्यार्शः। निदा.।

**योनिशूलम्**। क्ली। योनिरोगविशेषे। योनि-

**योनिशूलघ्नी**। स्त्री। शतपुष्पायां। शुल्फा। वै.निघ। [कुटीरे। सु.नि.८अ.।

**योनिसंवरणम्**। क्ली। गर्भकन्दरोगे, गर्भ-

or Coccinea. Syn. P. Rosea ) रक्तवर्ण दण्डपत्रचित्रकक्षुपे । रक्तचित्रा । म रक्तचित्रक । क केंपिनचित्रमूल । तें एर्रचित्र । ता शिवप्पु चित्तिर । गुणा —स्थौल्यकर कृच्छ्र कुष्ठघ्न रसनियामक लौहवेधक, रसायनं चित्रकान्तराहु याख्यय । रा.नि.व.६ । [विटो । वै निघ ।

**रक्तचिल्लिका** । स्त्री । मधरवास्तुके । मिठो

**रक्तचूर्ण(क)म्** । क्ली । सिन्दूरे । लोहितचूर्णमात्रे । पुं । कम्पिल्लके । कमलागुडि । रा.नि.व. १३ ।

**रक्तजकृमिः** । पु । रक्तजन्यकृमिरोगे । लक्षण —"रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणव । अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शना । केशादा रोमविध्वंसा रोमद्वीपा उदुम्बरा । षट् ते कुष्ठैककर्माणः सहसौरसमातर ॥" मा.नि. ।

**रक्तजन्तुकः** । पुं । भूनागे । शीर । रा.नि.व. १३ । लोहितप्राणिमात्रे ।

**रक्तजिह्वः** । पु । सिंहे । श.मा. ।

**रक्तझावुकः** । पुं । (Tamarix dioica.) स्वनामख्यातवृक्षे । लाल झाउ । हि लालझाउ । श.चि. । [See रक्तकुरण्टक ।

**रक्तझिण्टी** । स्त्री । रक्तपुष्पझिण्टीक्षुपे । श्रम ।

**रक्ततरम्** । क्ली । स्वर्णगैरिके । वै.निघ. ।

**रक्ततुण्ड; (कः)** । पु । सारसपक्षिणि । शुकपक्षिणि । रा नि.व.१९ (क ) भूनागे । रा नि व १३ । [(का) । गोमूत्रिकायाम् । रा.नि.व ८ ।

**रक्ततृणम्** । क्ली । तृणविशेषे । वै.निघ. । स्त्री

**रक्तचित्रक्** । स्त्री । रक्तमूलचित्रके । लाल चेंउड़ी । म लोहितो तियर । क केंपिनेय तियडे । गुणा —तिक्ता कटूष्णा रोचनी पाचनी मलविष्टम्भहरी च । रा नि व ६ ।

**रक्तदला** । स्त्री । चिविल्लिकायां । नलिकायां । रा.नि.व.५ । नलिकानामगन्धद्रव्ये । रा.नि.व १२ ।

**रक्तदृक्** । पु, स्त्री । कपोते । आगपायरा ।

**रक्तद्रुमः** । पु । रक्तबीजासनवृक्षे । पियाशाल ना ह । रा नि व.९ ।

**रक्तधरा** । स्त्री । मांसाश्रितकरे द्वितीयायां कलायाम् । "मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च शिरासु यकृत्प्लीह्नोश्च भवति ।" सु शा ४अ ।

**रक्तधातुः** । पु । गैरिकधातौ । गिरिमाटी । पस्त । ताम्रे । रा.नि व.१३ । रक्तवर्णधातुमात्रे ।

**रक्तनाड़ी** । स्त्री । दन्तमूलगतरक्तजनाडीरोगविशेषे । मा नि ।

**रक्तनालः** । पुं । जीवशाकक्षुपे । रा.नि.व.७ । जीवन्त्याम् । क्ली । कह्लारे । वै निघ. ।

**रक्तनासिकः** । पु । पेचके । श.र. । [व ९ ।

**रक्तनिर्यासः** । पु । रक्तबीजासनवृक्षे । रा नि.

**रक्तनीलः** । पु । महाविषवृश्चिकविशेषे । सु कल्प ८अ. । [निघ. ।

**रक्तनेत्रः** । पुं । सारसपक्षिणि । कपोते । वै.

**रक्तनेत्रत्वम्** । क्ली । रक्तविकारजनेत्ररोगे । निदा. ।

**रक्तपत्रः** । पु । पीण्डालौ । रा.नि.व ७ ।

**रक्तपत्रा (त्रिका)** । स्त्री । रक्तपुनर्नवायां । वै.निघ । नाकुल्यां । रा नि व ७ । [जटा ।

**रक्तपदी** । स्त्री । क्षुद्रक्षुपविशेषे । लज्जावती ।

**रक्तपद्मः** । पु, क्ली । रक्तकमले । तत्पुष्पगुणा. —पद्मं कषायमधुरं शीतपित्तकफास्रजित् । रा ल.५प. ।

**रक्तप(पा)दी** । स्त्री । लज्जालुकायां । ईषत्पत्रपरनामलज्जालुकायां । रा.नि व ५ ।

**रक्तपर्णः** । पुं । रक्तपुनर्नवायाम् । वै.निघ. ।

**रक्तपल्लवः (कः)** । पुं । अशोकवृक्षे । रा. नि व.१० ।

**रक्तपा** । स्त्री । जलौकायाम् । जोँक । मि ।

**रक्तपाका (की)** । स्त्री । बृहतीक्षुपे । र.मा. ।

**रक्तपात्री** । स्त्री । जलौकायाम् । श.र. ।

**रक्तपादः** । पुं । शुकपक्षिणि । हे.च । हंसे । वै.निघ. । [व.१९ । मत्कुणे । वै निघ. ।

**रक्तपायिनी** । स्त्री । जलौकायाम् । रा.नि.

**रक्तपायी (यिन्)** । पुं । मत्कुणे । हारावलि । व्याक. ।

**रक्तप्रतिश्याय:** । पुं । दुष्टरक्तजप्रतिश्यायरोगे । लक्षणम्—"रक्तजे तु प्रतिश्याये रक्तास्राव. प्रवर्त्तते । ताम्राक्षश्च भवेज्जन्तु रुरोघातप्रपीडित । दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति स ॥" मा. नि. ।

**रक्तप्रवृत्ति:** । पुं । पित्तजरोगे । भा. ।

**रक्तप्रसव:** । पु । रक्तकरवीरे । मुचुकुन्दवृक्षे । मूचकुन्द गाछ । रक्ताम्लाने । वक्क झाँटी । रा नि. व.१० ।

**रक्तफल:** । पुं । वटवृक्षे । रा.नि.व.११ । श्वाल्मलीवृक्षे । रा.नि.व.८ । रक्तापामार्गे । स्त्री (ला)। विम्बीलतायाम् । তেলাকুচা । प मु. । स्वर्णवल्ल्याम् । শোণালু । रा.नि व.८ । वार्त्ताकुवृक्षे । वटवृक्षे । वै निघ. । [हे.च. ।

**रक्तफेनज:** । पु । फुस्फुसे, वामपार्श्वस्थक्लोम्नि ।

**रक्तवम्नु:** । पुं । महावृश्चिकविशेषे । सु कल्प ८भ. । [रे । हारा. । त्रिका. ।

**रक्तबाल(लु)कम् (का)** । क्ली,स्त्री । सिन्दू

**रक्तबिन्दु.** । पु । रक्तापामार्गे । रा.नि व.४ ।

**रक्तबिन्दुच्छदा** । स्त्री । पुत्रदायाम् । पुत्रकण्टकार्य्याम् । वै निघ ।

**रक्तबीज:** । पुं । दाड़िमवृक्षे । रा.नि.व ११ । रोठाकरञ्जे । रिठा । रक्तबीजासनवृक्षे । আসন গাছ । रक्तकुलत्थे । वै निघ. । *[रा नि.व.८ ।

**रक्तबीजका** । स्त्री सरटीवृक्षे । তরুই গাছ ।

**रक्तभस्म** । क्लो । रससिन्दूरादिकरणे । एतस्य धनमयाणो र.सा संपद्य सम्या ।

**रक्तमञ्जर:** । पुं । वेतसलतायाम् । त्रिका. । निम्बवृक्षे । वै.निघ. ।

**रक्तमञ्जरी** । स्त्री । रक्तकरवीरे । वै.निघ. ।

**रक्तमण्डल:** । पुं । मण्डलिसर्पविशेषे । सु.कल्प ४भ. । [লাল নজ্ঞাবতী । वै निघ. ।

**रक्तमण्डलिका** । स्त्री । रक्तलज्जालुकायाम् ।

**रक्तमण्डूक:** । पुं । रक्तवर्णमण्डूकजातीयकीटे । सु कल्प.८भ ।

**रक्तमत्स्य:** । पुं । रक्तवर्णमत्स्यविशेषे । মাছ । तल्लक्षणगुणा:—"यो रक्ताङ्गो नातिदीर्घो न चाल्पो नातिस्थूलो रक्तमत्स्य स चोक्त । शीतो रुच्य. पुष्टिकृद्दीपनोऽसौ नाशं धत्ते किञ्च दोषत्रयस्य ॥" रा.नि व.१७ ।

**रक्तमरिचम्** । क्ली । मरिचभेदे । লঙ্কামরিচ । হি लालमरिच । वै.निघ. ।

**रक्तमातृका** । स्त्री । रसधातौ । वै.निघ. ।

**रक्तमिल्लातक:** । पुं । रक्ताम्लान-पुष्पवृक्षे । वक्कझाँटी । रा नि.व.१० । [वै निघ. ।

**रक्तमुख:** । पुं । रोहितमत्स्ये । षष्टिकधान्ये ।

**रक्तमूत्रता** । स्त्री । रक्तप्रस्रावरोगे । निदा. ।

**रक्तमूर्द्धा (न्)** । पु । सारसपक्षिणि । वै.निघ ।

**रक्तमूलक.** । पुं । देवसर्षपक्षुपे । रा.नि.व ८ ।

**रक्तमूला (ली)** । स्त्री । लज्जालुकालतायां । रा नि.व ५ ।

**रक्तमृत्** । स्त्री । गैरिके । गिरिमाटी । वै.निघ ।

**रक्तमेह:** । पु । रक्तस्राविप्रमेहरोगे । लक्षणं —"विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिन:।" भा ।

**रक्तमोक्षणम्** । क्ली । जलौकावचारणे । জোঁক ধরান । शोणितबाहुल्यात् बहुविषरोगजनकत्वाच्च स्रावणस्यातीव प्रयोजनं भवति प्रयोजने च सञ्जाते जलौकालाबुकाभिरुपायै. शिरामोक्षेण तत्स्रावणं क्रियते । परन्तु क्षयातिव्यवायिक्लीबादीनां न शिरामोक्ष: कार्य्यं, जलौकावचारणन्तु शस्तम् । विषदुष्टं वातादिदुष्टं वा शोणितं जलौकालाबुभि शस्तम् । भा । [त्रिकायां । प मु ।

**रक्तयष्टि: (ष्टी)** । स्त्री । लज्जालुकायां । म-

**रक्तयष्टिका** । स्त्री । मञ्जिष्ठायाम् । रा.नि व. ६ । [ञ्जिष्ठा । रा.नि व.१६ ।

**रक्तयावनाल:** । पुं । तुवरयावनाले । লাল

**रक्तयोनि:** । पुं । योनिव्यापद्विशेषे । लक्षणम् —"रक्तयोन्याख्यासृगतिस्रुति ।" मा.उ.३३भ. ।

**रक्तरङ्गा** । स्त्री । मेन्दीतिख्याते वृक्षे । वै निघ. ।

**रक्तरज:** । क्ली । सिन्दूरे । वै निघ ।

**रक्तरस:** । पुं । रक्ताम्लनवृक्षे । वै.निघ ।

**रक्तरसा** । स्त्री । रास्नायाम् । वै निघ. ।

**रक्तपारदम्।** क्ली, पुं। हिङ्गुले। त्रिका। जटा। [वै निघ।

**रक्तपाषाणः।** पु, क्ली। गिरिमृत्तिकायाम्।

**रक्तपिण्डम्।** क्ली। जपापुष्पवृक्षे त्रिका। रक्तालौ वै निघ। चौमदगोयगुलावपुष्प। श चि।

**रक्तपिण्डक।** पु। रक्तवर्णपिण्डालौ। रा नि व ७। जपाहवे त्रिका।

**रक्तपिण्डालु।** पुं। रक्तवर्ण पिण्डालौ। ना म चुवड़ि आलु। मं रातालु। कं केंपिनहेडल। गुणा —शीत मधुर अम्ल अमघ्न दाहपित्तघ्न हृद्य गुरु बलपुष्टिकरश्च। रा नि व ७।

**रक्तपित्तम्।** क्ली। तन्नामकरोगभेदे। निदान —"घर्म्मव्यायामशोकाध्वव्यवायैरतिसेवितैः। तौ क्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च। पित्तं विद ग्धं स्वगुणैर्विदहत्याशु शोणितम्। ततः प्रवर्त्तते रक्तमूर्द्धञ्चाधो द्विधापि वा। ऊर्द्ध्वं नासाक्षिकर्णास्यै र्मेढ्रयोनिगुदैरधः। कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते॥" इति निदानम्। "सदनं शीतकामत्व कण्ठधूमायनं वमिः। लोहगन्धश्च निश्वासो भव त्यस्मिन् भविष्यति॥" पूर्व्वरूपम्। वातिकादिलक्ष ण —"सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वि तं। श्यावारुणं सफेनञ्च तनु रूक्षञ्च वातिकम्। रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभं। मेचका गारधूमाभमञ्जनाभञ्च पैत्तिकम्। संसृष्टलिङ्गं स सर्गात् त्रिलिङ्गं सान्निपातिकम्। ऊर्द्ध्वगं कफसं सृष्टमधोगं पवनानुगम्। द्विमार्गं कफवाताभ्यामु भाभ्यामनुवर्त्तते। ऊर्द्ध्वं साध्यमधो याप्यमसाध्यं यु गपद्गतं। एकमार्गं बलवतो नातिवेगमवोत्थितं। रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम्। एक दोषानुगं साध्यं द्विदोषं याप्यमुच्यते। यत्त्रिदोषम साध्यं स्यात् मन्दाग्नेरतिवेगवत्॥" मा नि। अथ प्रथममपतर्पणम् ऊर्द्ध्वगे रेचनं अधोगे च वमनं शस्तम्। पु। हारीतपरिचिथि। भा।

**रक्तपित्तहा।** स्त्री। वन्दिदूर्व्वायां। गेँटे दूर्व्वा। श च।

**रक्तपित्तान्तकरस।** पु। रक्तपित्ताधिकारे रस। पाठ —"मृताभ्रं मृतलौहञ्च माक्षिकं रसतालकं। मर्द्दयेच्च भवेत्तुल्यं यष्टिद्राक्षामृताद्रवैः। दिनैकं मर्दयेत् खल्वे सिताक्षौद्रसमन्वितं।" माषा मात्रया च। रसा स। [निदा।

**रक्तपीटिकादर्शनम्।** क्ली। रक्तविकारे।

**रक्तपीतफला।** स्त्री। मधुरबिम्बिकायाम्। वै निघ।

**रक्तपुनर्नवा।** स्त्री। स्वनामख्यातपत्रशाकवि शेषे। गादापुण्या। म रक्तघेंटुलि। क केंपिन बेलडाकलु। गुणा —तिक्ता सारणी शोथघ्नी रक्तप्रदरघ्नी पाण्डुविषघ्नी च। रा नि व ५।

**रक्तपुष्प।** पु। रक्तवकवृक्षे। नाम वकफूलेर गाछ। र मा। रक्तकरवीरवृक्ष। जटा। रोहितकवृक्षे। श मा। दाड़िमवृक्षे। ध मु। रक्तकाञ्चनवृक्ष बन्धूकवृक्षे। पुन्नागवृक्षे। रा नि व १०। पर्पटके। शाल्मलीवृक्षे पलाशवृक्षे। पारिभद्र वृक्षे। जवावृक्षे। रक्तार्के वै निघ।

**रक्तपुष्पक।** पु। पलाशवृक्षे। रोहितकवृक्षे। जटा। पर्पटके। रा नि व ५। शाल्मलीवृक्षे। रा नि व ८।

**रक्तपुष्पा।** स्त्री। शाल्मलीवृक्षे। जटा। कमल कदलीवृक्ष। चाँपाकला गाछ। ध मु। नागद मन्याम्। नागदना। रा नि व ५।

**रक्तपुष्पिका।** स्त्री। भूपाटल्यां। रक्तपुनर्नवा यां। रा नि व ५। लज्जालुकायाम्। श च। पाट लीवृक्षे। पारल गाछ। रा नि व १०। मञ्जिष्ठायाम्। लाङ्गलिकायाम्। रक्तमञ्जुषायाम्। शा ल्मलीवृक्ष। वै निघ।

**रक्तपुष्पी।** स्त्री। धातकीवृक्षे। र मा। पाट लीवृक्ष। जटा। जवापुष्पवृक्षे। रा नि व १०। आवर्त्तकीलतायां। रा नि व ३। नागदमन्यां। रक्तार्के। रक्तपुनर्नवायाम्। वै निघ। काकपदे शीयकदलीपुष्पवृक्ष। रुद्रकाण्डीपुष्पवृक्ष। रा नि व १०। [नि व ६।

**रक्तपूरकम्।** क्ली। वृक्षाम्ले। टेंकुल। रा.

**रक्तपूर्व्वक।** पु। रक्तापामार्गे। वै निघ।

**रक्तपोस्त।** पु। (Papaver Rhoeas) Red poppy रक्तवर्णपोस्तवृक्षे। नाम पोस्त। हिं लालपुस्ता। मं एरएरगमलाचेहुं। ता. मि गप्पु पोस्तकायडि। कापाल्लंम्।

रक्तशिग्रुः । पुं । रक्तशोभाञ्जनवृक्षे । लाल स-जिना गाछ । म् रक्तसेगुवा । कं केंपिनेगुगि । गुणाः—महावीर्य्यः मधुरः रसायनः शोफाध्मान वातघ्न पित्तश्लेष्मघ्न । रा.नि.व.७ । [वै.निघ ।

रक्तशिम्बी । स्त्री । शिम्बीभेदे । लाल शिम् ।

रक्तशीर्षकः । पुं । लवणखोर्य्यां । प.मु. । सारसपक्षिणि । च.सू २७ अ ।

रक्तशृङ्गिकम् । क्ली । विषे । रा.नि.व.६ ।

रक्तशेखरः । पुं । पुन्नागवृक्षे । र.मा. ।

रक्तश्रीखण्डकम् । क्ली । रक्तचन्दने । वै. निघ.२भ.वा.व्या.चि.महाराजादौ ।

रक्तश्वेतः । पुं । तदर्थमहाविषवृश्चिकभेदे । सु कल्प.८अ. ।

रक्तष्ठीविसन्निपातः । पुं । स्वनामख्यात सन्निपातविशेषे । तस्य लक्षणं—"रक्तष्ठीवी ज्वर-वमिवपासामोहशूलातिसारहिक्काध्मानभ्रमणदवथुश्वा-सभ्रमश्रान्तास. । श्यामा रक्ताधिकतररसा मण्ड-लोत्थानवपुः रक्तष्ठीवी निगदित इह प्राणहन्ता म-निषः ॥" निदा । [निका. ।

रक्तसंज्ञ(सञ्जीवपिशुन)म् । क्ली । कुङ्कुमे ।

रक्तसंवरणम् । क्ली । लाक्षाद्रुमे । वै.निघ ।

रक्तसन्दंशिका । स्त्री । जलौकायाम् । जोंक । रा.नि.व.१८ ।

रक्तसन्ध्यकम् । क्ली । रक्तकह्लारे । रक्तकम- म । अम. । रक्तोत्पले । वै.निघ. ।

रक्तसरोरुहम् । क्ली । रक्तपद्मे । अम. ।

रक्तसर्षपः । पुं । (Brassica nigra) रक्त वर्णसर्षपे । राई वा प्रकृतराई । हिं लालराइ, माकडाराइ । मं मडूरी । कं सासिराइ । तें नल्लावालु । गुणाः—कटुः तिक्त उ-ष्णः वातघ्नः शोफघ्नः दाहपित्तकरः कफगुल्म कृमिघ्नश्च । रा.नि.व.१६ ।

रक्तसहा (ह्वः) । स्त्री, पुं । रक्तम्लानपुष्प-वृक्षे । रक्तपुष्पकोर्जे गाछ । रा.नि.व.१० ।

रक्तसारम् । क्ली । रक्तचन्दने । प.मु. । रा.नि.व.१२ । रस.र.च.इ.मिश्र.नि.महौषधादिषु ।

पत्तङ्गचन्दने । रक्तकाष्ठे । प.मु. । पुं । अम्लवे-तसे । रा.नि.व.६ । रक्तखदिरवृक्षे । रा.नि.व.८ सु.चि.१अ. । रक्तबीजासनवृक्षे । रा.नि.व.८ । र-क्तशिग्रपायाम् । वाराहीकन्दे । वै.निघ. ।

रक्तसूः । स्त्री । शरीरस्थरसधातौ । रसधातु । रा.नि.व.१८ । [जटा. ।

रक्तसौगन्धिकम् । क्ली । रक्तकह्लारपुष्पे ।

रक्तस्थज्वरः । पुं । रक्तगतज्वरविशेषे । लक्षणं —"रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ । प्र-लापः पिडका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥" मा नि. ।

रक्तस्रावः । पुं । अम्लवेतसे । जटा. । नेत्र-सन्धिगतरोगे । निदा. । अस्य रक्तस्रावनेत्ररोगे । लक्षणं यथा—"रक्ताभिष्यन्दिनोऽस्रस्य नेत्रं भवति लोहितं । सर्वं त्रिभागमर्द्धं वा यावत्कन्दाहपीडि-तम् । रक्तस्रावोऽथवा यस्य वाजिनो लोचनाद्भवेत् । रक्तस्रावाभिधानन्तु नेत्ररोगं समादिशेत् ॥" अ द. १०अ. ।

रक्तस्रुतिः । स्त्री । रक्तस्रावे । व्याक ।

रक्तहरः । पुं । भल्लातके । भाउना । वै.निघ. । त्रि । रक्तप्रद्रव्यमात्रे ।

रक्ता । स्त्री । गुञ्जायां । कुँच । रा.नि.व.३ । सु. चि १०अ.,सु.कल्प.१अ. । लाक्षायां । मञ्जिष्ठायां । रा.नि.व.६।१२ । शिम्बीभेदे । प.मु. । उष्ट्रकाण्डी-नामपुष्पवृक्षे । रा.नि.व.१० । मूषकाकर्ण्यां । वचा-याम् । वै.निघ. । रक्तवर्णगलपद्मां । लाल केन्दु-रे । सु.कल्प.८अ. । कृष्णसारगन्धमूलविशेषे । कर्ण-शिराभेदे । वा.उ.१अ. ।

रक्ताका(ङ्कु)रः । पुं,क्ली । प्रवालद्रुमे । पला-श गाछ । रा.नि.व.११ ।

रक्ताक्तम् । क्ली । रक्तचन्दने । जटा. । [निघ. ।

रक्ताख्यातः (क.) । पुं । रक्तापामार्गे । वै.

रक्ताङ्गम् । क्ली । रक्तचन्दने । प.मु. । कुङ्कुमे । त्रि. । पुं । कम्पिल्लके । कवलारिंडि । प.मु. । प्रवालमणौ । रा.नि.व.१३ । मत्कुणे । छारपोका । रा.नि.व.१८ ।

रक्ताङ्गी । स्त्री । कटुकायां । कठेली । रा.नि,

**रक्तारसोन:** । पुं । लोहितरसोने । लाल र-शुन । सं लोहितावीलुरसश्च । कं कैपिनवेलुलि । गुणा:—मधुर. कटु: बलकर: । पत्र तिक्तं । ह्र-स्वि सलवणञ्च । रा.नि.व.७। पत्रं मधुरं चार नाली मधुरपिच्छल: कषाय. इति । मद.व.७ ।

**रक्ताराजालुकम्** । क्ली । रक्तवर्णालुकभेदे । एतच्च किञ्चिदुष्णम् आग्नेयं वातकफहरञ्च । द्रव्य-गुण: । [व्यकीटविशेषे । सु.कल्प.८अ. ।

**रक्ताराजि: (जी)** । स्त्री । सर्षपिकानामवाय

**रक्तारेणु:** । पु । सिन्दूरे । भा । पलाशकलिकायां । मे । पुन्नागवृक्षे । रा नि.व.१० ।

**रक्तारेणुका** । स्त्री । पलाशकलिकायां । पला-शकुँड़ि । श.मा. । [नि.व.११ ।

**रक्तारैवतक:** । पु । दीपाल्यखर्ज्जूरीवृक्षे । रा.

**रक्तारोहितक:** । पुं । (Rheum w.ghtu.) । रक्तरोहिड़ा । हिं रक्तरोहिडा ।

**रक्तालशुन:** । पुं । रक्तरसोने । लाल रशुन । रा.नि.व.७ । [व्यालतायां । रा.नि.व.२ ।

**रक्तालता** । स्त्री । काकादन्यां । कुँच गाछ । मू

**रक्तालोचन:** । पु । कपोते । हे च. । भा ।

**रक्तावटी** । स्त्री । मसूरिकायां । वसन्त । भिका.।

**रक्तावरटी** । स्त्री । मसूरिकायाम् । वसन्त । जटा. ।

**रक्तावर्ग:** । पुं । दाड़िमकिंशुकलाक्षाहरिद्रा दारुहरिद्राकुसुम्भपुष्पमञ्जिष्ठाबन्धूकेषु । "दाड़िमं किंशुकं लाक्षा बन्धूकञ्च निशाद्वयम् । कुसुम्भपुष्प मञ्जिष्ठा इत्येते रक्तवर्गक: ॥" रा.नि.व.२१ ।

**रक्तावर्ण:** । पुं । इन्द्रगोपकीटे । लाल आवा-ड़े पोका । रा.नि.व.१८ । गोमेदमणौ । मन:शि-ले । कम्पिल्लके । वै.निघ । ।

**रक्तावर्त्तक:** । पुं । विष्किरपक्षिविशेषे । लाल वटेर । च.सू.२७अ. ।

**रक्तावर्म्मा** । पुं । कुक्कुटे । वै.निघ. ।

**रक्तावर्द्धन:** । पुं । वार्त्ताकौ । श.च. । [व.५।

**रक्तावर्षाभू:** । स्त्री । रक्तपुनर्नवायां । रा.नि,

**रक्तावल्ली** । स्त्री । पीतपुष्पदग्धोत्पलौ । रमा मञ्जिष्ठायां । नलुकायाम् । वै.निघ ।

**रक्तावात:** । पुं । वातरक्तनामरोगविशेषे । यं रोग. रक्तवस्त्रप्रवालहरणादुत्पद्यते । निष्कृतिश्च रत्नात् पद्मरागसहितसवस्त्रमहिषीदानाद्भवति । "रक्तवस्त्रप्रवालानां हारी स्याद्रक्तवातवान् । सवस्त्र महिषीं दद्यात् पद्मरागसमन्विताम् ॥" कर्म्मवि पाक: । नारिकेलमूलं छागीदुग्धेन पीतं वातरक्त नश्यति । पुराणम् । [रा.नि.व.१० ।

**रक्तावारिजम्** । क्ली । कोकनदे । रक्तपद्म ।

**रक्तावास्तुक:** । पुं । गौरवास्तुकशाके । लाल वेतो शाक । वै.निघ. ।

**रक्ताविकार:** । पुं । रक्तजरोगे । निदा. ।

**रक्ताविद्रधि:** । पुं । रक्तजन्यविद्रधौ । लक्षणं —"कृष्णस्फोटावृत: श्याव: तीव्रदाहरुजाकर: । पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥" मा.नि. ।

**रक्ताशृन्तक:** । पुं । पुनर्नवायाम् । वै.निघ. ।

**रक्ताशृन्ता** । स्त्री । शेफालिकावृक्षे । शिउलि गाछ । प.मु. । [ड़ि । वै निघ. ।

**रक्ताशमनम्** । क्ली । कम्पिल्लके । कमलागुँ-

**रक्ताशालि:** । पु, स्त्री । (Oriza sativa.) रक्तधान्ये । लालधानि मिहि चाउल । प.मु. । तैमेर्निवर्णगलधान्यम् । गुणा:—सुमधुर: लघु: स्निग्ध. बलकर. रुचिकृद्दीपन सुखजाड्यहर: पथ्यश्च । सर्व्वरोगघ्न. हृद्य: पित्तदाहवातरक्तघ्नश्च । रा.नि.व.१६ । त्रिदोषघ्न: चक्षुष्य. शुक्रल: मूत्रल: तृष्णाघ्न: बल्य: स्वर्य. हृद्यश्च । राज. । त्रिदोषघ्नी चक्षुष्या मूत्ररोगहा । भाव.१४अ. । चा.सू.६अ. । "रक्तो महान् सकलम: ।" च.द.ज्व.चि. । "पेयां वा रक्तशालीनां पार्श्ववस्तिशिरोरुजि ।" तन्मण्ड-गुणा:—रक्तशाल्युद्भव मण्ड मधुरं चापि शीतलम् । प्रमेहानलशूलौ हन्ति वातल पित्तहरम् ।" चनि. १२अ. । [न्दे । रक्तपद्मेर गेंड़ । वै.निघ. ।

**रक्ताशालुक: (का)** । पुं, स्त्री । रक्तकमलक-

**रक्ताशाल्मलि:** । पु । रक्तपुष्पशाल्मलिवृक्षे । रक्तशिमुल । वै.निघ. ।

**रक्ताशासनम्** । क्ली । सिन्दूरे । शब्द. ।

**रक्तिका** । स्त्री । गुञ्जायां । कुँच । र.मा. । रा नि व ३ । रक्तिकायाम् । रा.नि व १६ ।

**रक्तेक्षु** । पु । रक्तवर्णेक्षौ । दशाई आक् । गुणा.—पाके मधुर शीतल, सद्यः पित्तदाहहर तथ्य तेजोवलवर्द्धनश्च । रा.नि व.१४ ।

**रक्तेक्षुशर्करा** । स्त्री रक्तेक्षुजातशर्करायाम् । गुण —पित्तघ्नी । रा नि.व.१४ ।

**रक्तेरण्ड:** । पु । रक्तवर्णैरण्डवृक्षे । লাল ভেরেণ্ডা । अय प्रायेण श्वेतवद्गुण । विशेषतु शोथघ्न लघु, भरोचकघ्न, कफश्वासघ्न ज्वरघ्न रक्तपाण्डुभालिनाशनश्च । रा.नि.व ८ । "रक्तैरण्डकमुष्णं वीर्ये कटुलघु स्मृत' । तिक्तो वातकफश्वासकासक्षयगर्भपीडा । रक्तदोषपाण्डुरुशाधाल्यरोचकनाशन । माथस्त्वो गुणायास्य श्वेतवच्च समीरिता. ॥" वै निघ । [व.३ ।

**रक्तैर्वारु:** । पु । इन्द्रवारुणीलतायां । रा.नि.

**रक्तोच्चटा** । स्त्री । श्वेतगुञ्जायाम् । भा. ।

**रक्तोत्पलम्** । क्ली । लघुरक्तपद्मे । कोकनदे । प.सु. । रा.नि.व.१० । सु सू.१८च. । गैरिके । पु, स्त्री (ला) । शाल्मलीवृक्षे । रा.नि.व.८ ।

**रक्तोदर:** । पु । रोहितमत्स्ये । महाविष मध्य विष वृश्चिकविशेषे । सु कल्प.८च. ।

**रक्तोपलम्** । क्ली । गिरिमृत्तिकायां । हारा ।

**रक्तौदनम्** । क्ली । रक्तशाल्यादिभक्ते । भलक्तकरञ्जितभक्ते । च.द.बाल चि. ।

**रघुनाथ:** । पु । वैद्यविलासनामग्रन्थकारे ।

**रङ्कु:** । पुं । 'मत्सरङ्के । वै.निघ. । प्रबलपृष्ठहरिणविशेषे । रा.नि.व.१९ ।

**रङ्गम्** । क्ली । वङ्गधातौ । রাঙ্ । प.सु । रा. नि व.१३ । पु । टङ्कणे । সোহাগা । रा.नि.व ६ । खदिरसारे । रा.नि.व.८ । [नि.व १२ ।

**रङ्गकाष्ठम्** । क्ली । पत्तङ्गे । वकमकाष्ठे । रा

**रङ्गजम्** । क्ली । सिन्दूरे । र मा. ।

**रङ्गद:** । पु । खदिरसारे । रा.नि.व.८ । टङ्कणक्षारे । रा.नि.व.६ । [निघ ।

**रङ्गदलिका** । स्त्री । नागवल्लीलतायाम् । वै.

**रङ्गदा** । स्त्री । स्फटिकायां । फटकिरि । भा. ।

**रङ्गदायकम्** । क्ली । कङ्कुष्ठे । रा नि.व.१३ ।

**रङ्गदृढ़ा** । स्त्री । स्फटिकायाम् । रा.नि व १३ ।

**रङ्गपत्री** । स्त्री । नीलीवृक्षे । নীল গাছ । रा. नि.व.४ । [वाङ्गचे । वै.निघ ।

**रङ्गपुष्पी** । स्त्री । नीलीवृक्षे । रा नि.व ४ । व

**रङ्गबीजम्** । क्ली । रूप्ये । त्रिका. । [व.१३ ।

**रङ्गमाणिक्यम्** । क्ली । माणिक्यरत्ने । रा.नि.

**रङ्गमाता (तृका)** । स्त्री । लाक्षायां । ला-क्षा । रा.नि.व.६।२२ । त्रिका. ।

**रङ्गलता** । स्त्री । (Helicteres Isora.) आवर्त्तकीलताग्राम् । আঁতমোড়া । हि मरोर फली मेन्दु कपासी । ते गुवादरर । वम्. मेरा दम्रि, केवान् । गुण —शूलघ्नी । केचित् ।

**रङ्गलासिनी** । स्त्री । शेफालिकावृक्षे । श. च. ।

**रङ्गसट्टकम्** । क्ली । यमदे । मञ्जौ । भा. ।

**रङ्गक्षार:** । पु । टङ्कणक्षारे । সোহাগার খৈ । वै.निघ ।

**रङ्गा** । स्त्री । जवावृक्षे । জবা গাছ । वै निघ ।

**रङ्गाङ्गा** । स्त्री । फटिकारिकायां । फटकिरि । रा नि.व.१३ । [र मा ।

**रङ्गारि:** । पुं । करवीरवृक्षे । করবী গাছ ।

**रङ्गिणी** । स्त्री । शतमूल्याम् । লটা । कैवर्त्तिकायाम् । কেওটমুতা । रा.नि व.६१ । हरिद्रायाम् । वै.निघ. । [রাঙা আলু । त्रिका ।

**रङ्गेष्टालुकम्** । क्ली । स्वनामख्याते आलौ ।

**रज:** । पु । पर्पटके । ক্ষেৎপাপড়া । भा.म.१ भ.चित्तभ्रम ज्व.चि । "पथ्यारिवितरामसेनकरज ।" भा.म.१भ ज्वरे काम चि. । "कलिङ्गदुफल रज ।" वै निघ.दुर्जलज्व चि ग्रानीदयरसे । क्ली । स्त्रीकुसुमे । श.च. ।

**रज. (स्)** । पुं, क्ली । स्त्रीपुष्पे । अमरदत्तः । श र. । "पाचिता पित्ततापेन रसाद्या धात्वक्रमात् । प्रकत्य यानि मासेन तथा स्त्रीणां रजो भवेत् ॥" शार्ङ्ग.६च. । रूपये । रुद्रके । कालुष्ये ।

व ६। मञ्जिष्ठायां। भा। जीवन्त्यां। गी।"जनु
काश्याम्। वै निघ। [निश्रा। च द चारतैल।

**रक्ताम्लना।** स्त्री। रक्ताम्लनिकायां। रक्ताम्ल

**रक्ताढकी।** स्त्री। रक्तपुष्पाढकाम्। लाल व
हव। गुणा —रुच्या बल्या पित्ततापादिहरी च।
रा नि व ११। [१०म। See अण्डस्कन्द।

**रक्ताण्ड:।** पु। अण्डस्य अण्डरोगभेदे। ज द

**रक्तातिसार।** पु सरक्तातिसाररोगे। तस्य
सम्प्राप्ति — पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति
पैत्तिके। तदीपजायतेऽभीक्ष्णं रक्तातीसार उल्व
णः।' मा नि।

**रक्ताधार:।** पु। चर्म्मणि। रा नि व १८।

**रक्तापराजिता।** स्त्री। रक्तपुष्पापराजितायां।

**रक्तापहम् (हा)।** क्ली स्त्री। बोलनामग
न्धद्रव्ये। थुनशारापि। रा नि व ६।

**रक्तापामार्ग।** पु। स्वनामख्यातक्षुपे। लाल
आपाङ्। हि लालचिरचिरा। म रक्तअटजी
रा। क वडाआघाडा। तें केम्पिगुरुचे। गुणा
—शीत कटु कफवातघ्न व्रणकण्डूविषघ्न स
ग्राही वान्तिघ्नश्च। रा नि व४। वातविष्टम्भी क
फकृत् शीतल। भा पू १भ।

**रक्ताज(क)म।** क्ली। रक्तकमले। वै निघ।

**रक्ताभ (भा)।** पु, स्त्री। रक्तजपायाम्।
लाल जवा। इन्द्रगोपकीटे। वै,निघ।

**रक्ताभिष्यन्द।** पु। सर्वगतनेत्ररोगभेदे।
यथा—"रक्ताश्रुराजीदूषीकधकृमण्डलदर्शनम्। र
क्तस्यन्देन नयने सपित्तस्यन्दलक्षणम्॥" वा उ १५
अ। [रा नि व १३।

**रक्ताभ्रम्।** क्ली। रक्तवर्णाभ्रके। लाल अभ्र।

**रक्ताम्भोजम।** क्ली। कोकनदे। रक्तकमल।
र नि व १०। [नि व ११।

**रक्तास्र।** पु। कोषामञ्चे। कमपाटे। रा

**रक्ताम्लातक** / **रक्ताम्लान** } पु। रक्तझिण्टीक्षुपे। रक्त
झाँटी गाछ। हि लालकट
सरैया। म वाणझाड़। क वप्पदगिड्डु। गुणा —
लघु कटु वातामयशोफघ्न ज्वरघ्न आमानशूल
न नाशघ्न वर्ण्यश्च। रा नि व १०।

**रक्तारि:।** पु। महाराष्ट्रीक्षुपे। प स्तु।

**रक्तार्क।** पु। अरुणार्कवृक्षे। लाल आकन्द
गाछ। गुणा —"अर्कद्वय मरुद्वातकुष्ठकण्डूविषव्र
णान्। निहन्ति शोफगुल्मार्शोयकृत्प्लीहोदरकृमी
न्॥" मद व १। रा नि व १०।

**रक्तार्त्ति:।** स्त्री। शोणितामये। रा नि व २०।

**रक्तार्म्म (न)।** क्ली। नेत्ररोगभेदे। लक्षण यथा
—"पद्माभं मृदु रक्तार्म्म यन्मांसं चीयते सिते।"
मा नि। [See अर्बुद।

**रक्तार्बुद।** पु। मुखरोगे। रक्तजन्यार्बुदरोगे।

**रक्तार्श।** क्ली। रक्तजन्यगुदजरोगे। लक्षण—
"तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम्। कट्यू
रुगुदशूलञ्च दौर्ब्बल्यं यदि चाधिकम्। तत्रानुब
न्धो वातस्य हेतुर्यदि च रूक्षणम्। शिथिलं श्वेत
पीतञ्च विट स्निग्धं गुरु शीतलम्। यदार्शसां
घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलम्। गुदं सपिच्छं
स्तिमितं गुरु स्निग्धञ्च कारणम्। श्लेष्मानुबन्धौ वि
ज्ञेयश्च रक्तार्शसां बुधैः॥" मा नि। [घ।

**रक्ता(लता)।** स्त्री। मञ्जिष्ठायां। सु कल्प ५

**रक्तालु।** पु। (Dioscorea sativa)
Common Yam रक्तपिण्डालुके। लाल पिण्ड
आलु। हि रताळू, रतआलु, रक्तालु। ता याम
स्कीज। गुणा —शीतल मधुर अस्र श्रमपित्त
दाहघ्न पथ्य बलपुष्टिकर गुरुश्च। रा नि व७।
शालिधान्यविशेषे। प स्तु। [२म।

**रक्तावसेचनम्।** क्ली। रक्तमोक्षणे। च चि

**रक्ताश्वमारपुष्पम्।** क्ली। रक्तकरवीरपुष्पे,
रक्तकरवी फूल। चि यो विषमज्वरे। "रक्ताश्व
मारपुष्पस्य।' [ति शतके।

**रक्ताश्वारि।** पु। रक्तकरवीरवृक्षे। रावणक

**रक्तास्राव।** पु। रक्तजनेत्रसन्धिरोगे। लक्ष
णं यथा—"रक्तास्रावः शोणितोत्थः सरक्तं कोष्ण
माल्पं चबहुलातिसान्द्रम्।" सु उ.२अ।

**रक्ताक्ष।** पु। महिषे। पारावते। चकोरे।
स्री। सारसपक्षिणि। रा नि व १९। [चि।

**रक्ताक्षी।** स्त्री। गुग्गुली। वै निघ १म च शो,

**रक्ति।** पु। अष्टकर्षपरिमाणे। च,कल्प १२अ।

**रणपक्षी (इन्)** । पु । रणारम्भे । श्येन पाखी । वै निघ । [श्येनपक्षिणि । रा नि व १८ ।

**रणप्रियम्** । क्ली । उशीरे । रा नि व १२ । पुं ।

**रणमुष्टि.** । पुं । विषमुष्टिक्षुपे । कुचिला इति भाषा । रा नि व ४ । [व ६ ।

**रणमुद्गजा** । स्त्री । कर्कटशृङ्गयाम् । रा नि

**रणरण** । पु भ्रमरे । मशके । मश । त्रिका । (क ) उत्कण्ठायाम् । हे च ।

**रणालङ्करण.** । पु । कङ्कपक्षिणि । काँक पाखी । रा नि १८ । [च ।

**रण्डक** । पु । अफलवृक्षे । राँड़ा गाछ । श

**रण्डा** । स्त्री । मूषिककर्णाम् । अम । प्र दत्त सोमनाथरसे ।

**रतम्** । क्ली । मैथुने । अम । गुह्ये । मे ।

**रतकील:** । पु । कुक्कुरे । हे च ।

**रतज्वर** । पु । काके । त्रिका ।

**रतनारीच** । पु । कुक्कुरे । वै निघ. ।

**रतनिधि.** । पु । खञ्जनपक्षिणि । श र. ।

**रतव्रण** । पु । कुक्कुरे । त्रिका । मे ।

**रतशायी (इन्)** । पु । कुक्कुरे । हे च ।

**रताङ्गी** । स्त्री । कुष्माण्डिकायां । त्रिका ।

**रतान्दुक** । पुं । कुक्कुरे । हे च ।

**रतामर्द.** । पु । कुक्कुरे । श.मा ।

**रति** । स्त्री । प्रीत्याम् । सुरते । गुह्यदेशे । मे ।

**रतिकुहरम्** । क्ली । भगे । त्रिका ।

**रतिगृहम्** । क्ली । भगे । त्रिका. ।

**रतिचर्य्या** । स्त्री । स्त्रीसेवायाम् । वा सु.४०अ ।

**रतिमन्दिरम्** । क्ली । योनौ । जटा ।

**रतिवल्लभमोदक:** । पु । वाजीकरणाधिकारे औषधम् । पाठ —"महाशणस्य बीजानि चूर्णितानि पलाष्टक । कुडवं हविषश्चैव क्षीरप्रस्थं प्रदद्य च । शतपुष्पीरसप्रस्थं प्रस्थं मकामनस च । स्थानार्थे पय प्रस्थं दत्वा प्रमध्य पचत् । धात्री त्रिफीरक सुत लवीनापत्रकेशरं । चातुर्जाता त्रिवृता तालाङ्कुरकर्केचक । शृङ्गाटक त्रिकटुकं धन्याक चित्रकं तथा । पथ्या द्राक्षा च काकोल्यौ खर्ज्जूर छुरक तथा । कटुका मधुक कुष्ठ लवङ्ग सारसैन्धव । यमानिका चाजमोदा जीवन्ती गज पिप्पली । प्रत्यक कर्षमेकञ्च चूर्णितानि शुभानि च । मधुन कुडवार्द्धञ्च पाकशेषे तथा क्षिपेत् । मृगाण्डजं सकर्पूर यथालाभ विनिक्षिपेत् । रतिवल्लभनामाय सेव्यमानो रसायन ॥' सिद्धिबीज चूर्ण ८ प (मतान्तरे ५ प ) घृत ४ प शर्करा २ श शतावरीरस गव्यदुग्ध छागदुग्ध प्र ४ श । प्रक्षेप —आमलकी जीरक कृष्णजीरकं मुस्ता त्वक् एला तेजपत्र नागकेशरं कपिकच्छूबीज (आलाकुशीर बीज) गोरक्षतण्डुला (গোরক্ষচাকুলিয়া) तालास्थिशस्य कशेरुक शृङ्गाटकं त्रिकटु धान्यकं चित्रक (मतान्तरे अभ्र वङ्गञ्च) हरीतकी द्राक्षा काकोली क्षीरकाकोली पिण्डखर्ज्जूर काकिलाक्षबीज कटुकी यष्टिमधु कुष्ठ लवङ्ग सैन्धव यमानी वनयमानी जीवन्ती गजपिप्पली प्र २ तो मधु २ प । रस र. । भैष । [श च ।

**रतिसत्वरा** । स्त्री । पृक्कायां । पिडिंशाक ।

**रतिसाधनम्** । क्ली । शिश्ने । वै निघ. ।

**रती** । स्त्री । रक्तगुञ्जायाम् । वै निघ ।

**रतोद्वह** । पु । कोकिले । श मा ।

**रत्नम्** । क्ली । हीरके । रा नि व १३ । मुक्तादौ । रत्नानि नव—रत्न गारुत्मत (पान्ना) पुष्पराग माणिक्य पद्मराग इन्द्रनील मरकत गोमेद (वैदूर्य्य) मौक्तिक विद्रुमयोत विष्णुधर्मोत्तरे । तन्निरुक्ति —"धनार्थिनो जना सर्व्वे रमन्तेऽस्मिन्नतीव यत् । ततो रत्नमिति प्रोक्तम् ।" भा पू १भ रत्न च रत्नसाधारणगुणा —"रत्नानि भक्षितानि स्युर्म्मधुराणि सराणि च । चक्षुष्याणि च शीतानि विषघ्नानि धृतानि च । मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च ।" इति । माणिक्यं तरण सुजातममलं मुक्ताफलं शीतगो, माहेयस्य तु विद्रुमो निगदित सौम्यस्य गारुत्मतम् । देवज्यस्य च पुष्पराग मसुराचार्य्यस्य वज्र मणि, नील निर्म्मलमन्ययोर्निगदिते गोमेदवैदूर्य्यके ।" आ । तन्त्र च रत्न दीतिग्रहणम् । सु चि २४अ । "वज्र माणिक्यमादुर्भामरत्नमनूदन । देव च प्रमीजप्य रत्नाभरणधारणम् । राज १प ।

मतिभ्रमे। "रजोरूपगुणसुद्रेक कालुष्यं मतिविभ्रम।" रा नि व.२१। प्रागे। मे।

**रज.भय.** । पु। कुक्कुरे।॰ज.मा।

**रज.सारम्** । क्ली। कर्पूरे। नकुल.१२च।

**रजतम्** । क्ली। रौप्ये। अम.। स्वर्णे। वि.ज्व.चि.ज्वरकुञ्जरपारीन्द्ररसे। हस्तिदन्ते। वै.च.।

**रजतप्रभः** । पु। सोमलताभेदे। (सोमलता)। सु.चि.२६च.।

**रजतोपमम्** । क्ली। रौप्यमाक्षिके। वै.निघ.।

**रजनकः** । पु। काम्पिल्लके। कमलाग्डि। सा.सु.२४च ग्यामादि। "स्निग्धरजनकम्पिल्लक...हा करञ्जा।" [भटी.।

**रजनि.** । स्त्री। वालुके। रात्रौ। हरिद्रायां।

**रजनिपुष्पम्** । क्ली। हरिद्रापुष्पे। हलुदफुल। रस.र नागार्ज्जनचूर्णे।

**रजनी** । स्त्री। हरिद्रायां। रा.नि.व ६। सि यो.पाण्डु चि.। सु सू ३८च वल्लीपञ्चके। यतुकालतायां। रा नि व ३। नीलिन्याम्। नील। मे। दारुहरिद्रायां। वालुके। वै निघ। रात्र्यां। अम.।

**रजनीगन्धा** । स्त्री। (*Polianthes tuberosa.*) Tuberose. स्वनामख्यातपुष्पवृक्षे। रजनीगन्ध। हिं गुलशब्बू। भूरिप्र.।

**रजनीजलम्** । क्ली। नीहारे। हारा.।

**रजनीद्वयम्** । क्ली। हरिद्राद्वये, हरिद्रादारुद्वयो। च.द विषमज्वरे।

**रजनीपुष्पः** । पु। पूतिकरञ्जे। रा.नि व ८।

**रजनीहासा** । स्त्री। शेफालिकापुष्पवृक्षे। म र.।

**रजसानुः** । पु। मनसि, हृदये। छगा.।

**रजस्वर्णः** । पु। पीतभृङ्गराजे। वै निघ.।

**रजस्वलः** । पु। महिषे। त्रिका.। पारदे। वै.निघ.। स्त्री(ला)। जातरजस्कायां स्त्रियि। रा. नि व,। ८। स्वरूप यथा—"द्वादशाद्वत्सरादूर्द्ध्वमापञ्चाशत्समाः स्त्रियः। मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत्। आर्त्तवस्रावदिवसात्तु षोडशरात्रयः। गर्भग्रहणयोग्यस्तु स एव समय क्षतः॥" रज.स्वलाक्रम—"आर्त्तवस्रावदिवसाद्‌अहिंसाब्रह्मचारिणी। शयीत दर्भशय्यायां पश्येदपि पतिं न च॥" इत्यादि। भा.। ऋतुस्नानानन्तरं नारी पतिमेव पश्येत्।

**रज्जुः** । पु। केशवेण्याम्। दामनि। मडि। मांसरज्ज्वाम्। "पृष्ठवंशोभयत्र महत्यो मांसरज्जव.। चतस्रो मांसपेशीनां बन्धन तत्प्रयोजनम्॥" भा.।

**रञ्जकः** । पु। काम्पिल्लके। कमलाग्डि। रा नि व १३। भल्लातकवृक्षे। वै निघ.। तद्यान कजठराग्नौ। तस्य स्थानं यकृत्प्लीहमध्यम्। स रसाख्यरसं रञ्जयति। सु.सू.२१च। क्ली। हिङ्गुलि, हिङ्गुलविशेषे। रा नि व १३। स्त्री (का)। नखरञ्जिका। (मेहेदि गाछ)। वै निघ.।

**रञ्जनम्** । क्ली। रक्तचन्दनभेदे। वकम काठ। र.भा.। रक्तचन्दने। मद व.१। हिङ्गुले। रा.नि. व.१३। स्वर्णे। जातीफले। वै निघ। पारदरञ्जनद्रवे। तारकम्मणस्तु न तथा प्रयोगो दृश्यते। "केवलं निर्मलं ताम्रं वापितं रञ्जनेन तु। कुरुते चित्रणं जीर्ण लाक्षारसनिभं रसम्॥" रस चि ३ च.। पु। मुञ्जवृक्षे। मूञ। रा.नि.व ८। काम्पिल्लके। कमलाग्डि। वै निघ.।

**रञ्जनकः** । पु। कट्फलवृक्षे। रा नि.व.९।

**रञ्जनकेशी** । स्त्री। नीलीवृक्षे। वै.निघ.।

**रञ्जनगणः** । पु। रञ्जनद्रव्यवर्गे। "चतुर्विधा हरिद्रा स्यात् पतङ्गः रक्तचन्दनम्। नीलीकुसुम्भमञ्जिष्ठालाक्षामहिकिंशुकम्॥" रा नि व.६।

**रञ्जनद्रुः (मः)** । पु। चक्रुकवृक्षे। आङ्कुलेर गाछ। श.चि.। धूनकवृक्ष। वै निघ।

**रञ्ज(ञ्जि)नी** । स्त्री। गुण्डारोचनिकायाम्। श.च.। नागवल्लीलतायाम्। वै निघ.। नील्यां। रा नि.व.४। जन्तुकालतायां। रा नि.व.३। मञ्जिष्ठायाम्। शेफालिकायां। मे। हरिद्रायां। रा. नि व ६। पर्पट्यां। रा.नि.व.११। (रा नि.व.९।

**रञ्जनीपुष्पः** । पु। पूतिकरञ्जे। नाटाकरञ्ज।

**रण.** । पु। दुन्दुभौ। हारा। वै निघ.।

**रणघण्टासमाकृतिः** । पु। महावटे। वै. निघ.।

**रन्ध्रम्** । क्ली । दूषणे । छिद्रे मे. । शरीरे रन्ध्राणि नेत्रश्रवणनासानां द्वे द्वे रन्ध्रे भवतः । तथा मुखमेहनपायूनामेकैकमिति नव । दशमञ्च मस्तके । स्त्रीणाञ्च त्रीणि स्तनगर्भमार्गेषु । स च श्वरस्य उदरगह्वरे । ज.द.२श. । [रा.नि.व.८ ।

**रन्ध्रकण्टः (कः)** । पुं । ज्वालावर्वूरकवृक्षे ।

**रन्ध्रपत्रः** । पुं । नले । नल गाछ । रा.नि.व. ८ ।

**रन्ध्रवभ्रुः** । पुं । उन्दुरौ । इन्दुर । त्रिका. ।

**रन्ध्रवंशः** । पुं । छिद्रवंशे । फोँपरा बाँश, बाँशिनी बाँश । गुणाः—कषायः तिक्तः शीतलः मूत्रकृच्छ्रप्रमेहार्शःपित्तदाहास्रजिच्च । कच्यः शूलघ्नः गुल्मघ्नः । रा.नि.व.८ ।

**रन्ध्री (न्)** । पुं । दैवज्ञे । वै.निघ. ।

**रभसः** । पुं । वेगे । पौर्वापर्यविचारे । हर्षे ।

**रमः** । पुं । रक्ताशोकवृक्षे । मे. ।

**रमठम्** । क्ली । हिङ्गुनि । हिङ् । त्रिका. ।

**रमठध्वनिः** । पुं । हिङ्गुनि । हिङ् । श.च ।

**रमणम्** । क्ली । पटोलमूले । मे. । जघने । हे. च. । जघने । श.र. । पुं । गर्दभे । हे च. । कपर्दे । श.च. । महारिष्टवृक्षे । घोड़ानिम् । कैटर्यनिम्बे । रा.नि.व.८ ।

**रमतिः** । पुं । काके । श.र. ।

**रमाप्रियम्** । क्ली । पद्मे । श.च. । पुं । दत्तचौमीतिख्याते मिष्टफले । वै.निघ. ।

**रमावेष्टः** । पुं । श्रीवासचन्दने । रा.नि.व.१२।

**रम्भा** । स्त्री । कदलीवृक्षे । कला गाछ । रा. नि.व.११ ।

**रम्य(क)म्** । क्ली । पटोलमूले । मे. । त्रिका. । सु.सू.।८च.श्लामादि । प्रधानधातौ । जटा. । पुं । स्वर्णचम्पकवृक्षे । चाँपा गाछ । मे. । वकवृक्षे । वकफुलेर गाछ । श.च. । चिरबिल्वकवृक्षे । जटा. ।

**रम्यकः** । पुं । महानिम्बे । वै.निघ. ।

**रम्यकक्षीरः** । पुं । महानिम्बे । घोड़ानिम् । रा.नि.व.८ । [रा.नि.व.८ ।

**रम्यपुष्पः** । पुं । शाल्मलीवृक्षे । शिमुल गाछ ।

**रम्यफलः** । पुं । कारस्करवृक्षे । कुचिलागाछ । रा.नि.व.८ ।

**रम्या** । स्त्री । स्थलपद्मिन्यां । रा.नि.व.५ । रात्रौ । मे. । महेन्द्रवारुणीलतायां । माकाल । रा. नि.व.३ । लवणाकन्दे । वै.निघ. ।

**रम्यामली** । स्त्री । भूधात्र्यां । भूँइ आम्ला । रा.नि व.५ ।

**रराटी** । स्त्री । ललाटे । पुराणम् ।

**रलकः** । पुं । कम्बले । श्रम. । म्रगवृक्षे । मृगविशेषे । च.टी.रा । पक्ष्मणि । सुभूतिः ।

**रवणम्** । क्ली । कांस्ये । पुं । उष्ट्रे । हे.च. । कोकिले । तथा. ।

**रवथः** । पुं । कोकिले । तथा. ।

**रविः** । पुं । अर्कवृक्षे । आकन्द गाछ । रा. नि.व.१० । ताम्रे । पथ्यामलतरसे । अजीर्णचि.नि. लौहितरसे ।

**रविकान्तः** । पुं । सूर्यकान्तमणौ । रा.नि. व.१३ । सूर्यावर्त्तक्षुपे । हुडहुडिया । वै.निघ. ।

**रविकीर्णः** । पुं । अर्कवृक्षे । वै.निघ. ।

**रविग्रहः** । पुं । बालस्य ग्रहविशेषे । तदाक्रान्तलक्षणं यथा—"उद्वेजितात् क्षिपत्र संरक्तौतद्गुरु थ. । कम्पमानश्च यो बालो स रविग्रहपीडितः ॥" ज.द. ।

**रविजप्रियः** । पुं । नीलकान्तमणौ । वै.निघ. ।

**रविजलम्** । क्ली । अर्कमूलरसे । आकन्दमूलेर रस । वै.संग्रह.पथ्यामलतरसे ।

**रविदुग्धम्** । क्ली । अर्कक्षीरे । आकन्देर आठा । र.सा.सं.कैलीसविषमज्वरसे ।

**रविद्रुमः** । पुं । सदापुष्पवृक्षे । आकन्द गाछ । रा.नि.व १० । [क्ली । मद्ये । श.च. ।

**रविनाथः** । पुं । बन्धूकवृक्षे । बान्धुलि गाछ ।

**रविनामकम्** । क्ली । ताम्रे । तामा । वै. निघ. । [गाछ । रा.नि.व.१ ।

**रविपत्रः** । पुं । आदित्यपत्रवृक्षे । आकन्द

**रविप्रियम्** । रक्तकमले । ताम्रे । रा.नि.व. १०।१३ । पुं । आदित्यपत्रे । आकन्द गाछ ।

**रत्नकान्तम:** । पुं । प्रवाल । पना । श.र ।

**रत्नगर्भपोटलीरस:** । पुं । यक्ष्माधिकारे रस । पाठः –"रस वज्रं हेम तार नाग लौहञ्च ताम्रकम् । तुल्यांश मरिच देय मुक्ताविद्रुममाक्षिकै । अत्र तुल्यञ्च तुल्यांश (चार्द्रकद्रवे) सप्ताह चित्रकद्रवे (अत्रञ्च तुल्यतुल्यांश भेष) । मर्दयित्वा विचूर्ण्याथ तेन पूर्या वराटिका । टङ्कण रविदुग्धेन मुख लिप्ता निरोधयेत् । मृद्भाण्डे ता निरुध्याथ सम्यग्गजपुटे पचेत् । आदाय चूर्णयेत् सर्व्व निर्गुण्ड्या सम भावयेत् । आर्द्रकस्य रसै. सप्त चित्रकस्य च विंशति (चित्रकस्यैकविंशति) । द्रवै र्भाव्य ततश्चास देय गुञ्जाचतुष्टयम् ।" र.सा.स । भैष. ।

**रत्नगिरिरस:** । पु । ज्वराधिकारे रस । पाठ —"सूताभ्रस्वर्णताम्रार्कि गन्धधार्द्राग्नलौहक । लौहाढं प्रत्येकान्त मर्द्दयेद्भृङ्गजैर्द्रवै । पर्पटीरसवत् पाच्य चूर्णित भावयेत् पृथक् । शिग्रुवासक निर्गुण्डी गुडूच्युग्राग्निभृङ्गजै । चुद्रामुस्तोजयन्ती भिर्मुनिनिम्बाग्निषु तिक्तकै । कन्याद्याच द्रवैर्भाव्य त्रिभिर्वार पृथक् पृथक् । ततो लघुपुटे पाच्य स्वाङ्गशीत समुद्धरेत् । माषो द्वन: क्वाथाद्यनुपुक्त थाभिनवज्वरे ॥" प्रम, अभ्र, स्वर्ण, ताम्र, गन्धक प्रत्येकের সমান, লৌহার্দ্ধ বঙ্গ, দেবদারু, ভীমরাজরসে মাড়িয়া পর্পটীবৎ পাক করিবে। পরে শজিনাদির রসে ভাবনা দিয়া লঘুপুটে পাক করিবে। রস.চি. ।

**रत्नजाति:** । स्त्री । श्वेत रक्त नील पीतवर्णे, ब्राह्मण क्षत्रिय वैश्य शूद्रेषु ।

**रत्ननायक:** । पुं । माणिक्ये । रा.नि.व.१२ ।

**रत्ननिधि:** । पुं । खञ्जनपक्षिणि । त्रिका. ।

**रत्नमाला** । स्त्री । वैद्यकचिकित्साशास्त्रभेदे ।

**रत्नमुख्यम्** । क्ली । हीरके । है.च. ।

**रत्नराट्** । पु । माणिक्ये । रा नि.व १२ ।

**रत्नाङ्ग:** । पुं । प्रवाले । रा.नि.व.१२ ।

**रत्नावली** । स्त्री । पथ्यापथ्यविनिश्चयाभिधाने ।

**रत्नि.** । पुं; स्त्री । बद्धमुष्टिहस्ते । মুষ্টিম হাত । अम ।

**रत्यङ्गम्** । क्ली । योनौ । श.र. ।

**रथ:** । पुं । तिनिशवृक्षे । रा नि.व.९ । वेतसवृक्षे । अम । काये । विश्व । शकटे । গাড়ি । रथभ्रमणगुणा —वातकोपन शरीरदार्ढ्यकर बल्यम् चाग्निवर्द्धनञ्च । राज. ।

**रथचरण:** । पुं । चक्रवाकपक्षिणि । श.र. ।

**रथद्रु:** । पु । तिनिशवृक्षे । वेतसवृक्षे । अम. ।

**रथपर्य्याय:** । पु । वेत्रलतायाम् । श.च । तिनिशवृक्षे । रा.नि व ९ । [तिनिशवृक्षे । अम ।

**रथलघ:** । पु । वृक्षौ । वृद्धि ওষধি । वै.निघ. ।

**रथाङ्ग.** । पु । चक्रवाकपक्षिणि । अम. ।

**रथाङ्गाह्वयनामक.** । पु । चक्रवाके । अम. ।

**रथाङ्गी** । स्त्री । ऋद्धौ । रा.नि.व.५ ।

**रथाभ्र.** । पु । वेतसवृक्षे । अम. ।

**रथाभ्रपुष्प:** । पु । वेतसवृक्षे । अम. ।

**रथावर्त्ता** । स्त्री । स्थलपद्मिन्याम् । वै निघ. ।

**रथिक: (का)** । पु, स्त्री । तिनिशवृक्षे । मा-মন গাছ । रा.नि व ९ ।

**रथी (इन्)** । पु । चक्रवाके । वै.निघ. ।

**रथ्य:** । पुं । अश्वे । अम । .

**रद: (न.)** । पुं । दन्ते । रा नि व १८ ।

**रदच्छद:** । पु । ओष्ठे । रा नि व १८ ।

**रदनच्छद:** । पुं । ओष्ठे । रा.नि व.१८ ।

**रदनी (इन्)** । पु । हस्तिनि । हला. ।

**रदितम्** । क्ली । सर्पदंष्ट्रभेदे । सु.कल्प.४अ. ।

**रन्तिदेव:** । पुं । कुक्कुरे । श र ।

**रन्धनम्** । क्ली । शाककरणे । शाक्ष । व्याक. ।

**रन्धित.** । त्रि । पाचिते । क्ली । कृतरन्धनद्रव्ये । রাঙ্গা জিনিস । तस्य पात्रान्तरे स्थापनविधि — "भक्तं स्वपात्रे स्थाप्यं न पात्रान्तरे, घृतं काष्ठपात्रे, मांस तद्वच्च हैमे राजते लौहे काष्ठे वा, पश्चादशाक काष्ठाम्ललौहजे पक्वान्न,पिष्टकादि लौह्यजे काष्ठजे वा, भृतक्षीर मण्मये दारुजे वा । पानीय पायस तक्र मृण्मय एव, काचजे स्फाटिके वा रागखाण्डवादीन् स्थापयेत् । एव सति निर्दोष्य रोगहरे भवत् । पाकराज. ।

पित्तस्य नाशी मधुरः सतिक्तः कटुः कषायः शम नः कफस्य। अन्योन्यमेतत्क्रमनं वदन्ति परस्पर दोषविहन्तिमन्तः॥ मधुरकटुकावन्योन्यस्य प्रकर्ष विघायिनौ, लवणविपुतोऽम्लकः प्रोक्तो विशेषरसा- नुगः। अविकृतस्तथा तिक्तैर्युतः कषायरसो लघुभ- वति सुतरां स्वादुः श्रेष्ठो गुणं करोति तथा। कटु तिक्तकषायाश्च कोपयन्ति समीरणं। कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम्॥" अथ ये रसा य द्दोषविरुद्धास्तदाह—"समीरणे तु नो देयाः क टुतिक्तकषायकाः। पित्ते कट्वम्ललवणाः स्वाद्वम्ल लवणाः कफे॥" अथ ये रसा यद्दोषहराः— "स्वाद्वम्ललवणान् वाते तिक्तस्वादुकषायकान्। पित्ते कफे तिक्तकटुकषायान् योजयेद्रसान्॥ म धुराम्लौ क्षारकटुकौ तिक्तकषायकौ चेत्येतावन्यो -न्यरसविरोधिनौ भवेताम्॥" अथ मधुररसवी- र्य्यम्—"यः स्वादुः श्रमशोषहारिबलकृद्दीर्घ्यप्रदः पुष्टिदः, प्रह्लादी रसने करोति तदनु श्लेष्मप्रवृद्धिं तत.। पित्तानां दमनः श्रमोपशमनो हृष्यो नरा णां हितः, क्षीणानां क्षतपाण्डुनेत्ररुजसद्वर्णां भ वेन्माधुरः॥" अथ तिक्तरसवीर्य्यं—"यस्तिक्तो म धुरात्मकोऽमृतसमः कुष्ठादिदोषापहः, शान्तः सर्व्वरुजापहो भ्रमहरो रुच्यो न संक्लेदनः। जि ह्वास्फोटकनाशनोऽथ भवति चोष्णचतानां हितो, वक्त्रोल्लासकरः प्रकृष्टकथितो निम्बादिकास्वादक त्॥" अथ कटुरसवीर्य्यम्—"नेत्रं स्रावयते मुखं विदहते यः कर्णनाड्यं वहन्, बीभत्सं तनुते मुखं विकुरुते पित्तास्रजः कोपनम्। अग्निं दूषयते क्षणं विदहते जीर्णो न शस्तो भवेत्, वातानाह रते कफाय कटुको दद्येत् महारोद्रकः॥" अम्ल- रसवीर्य्यम्—"जिह्वाक्लेदं जनयति तथा नेत्रनि- मीलनञ्च, बीभत्सं वा जनयति सदा वातरोगाप- हारी। कण्डूकुष्ठचतरुजकरो नो हितः शोफिनः स्वादम्ल. प्रोक्तो मरुतशमनोऽस्रकप्रकोपं तनोति॥" अथ कषायरसवीर्य्यम्—"जिह्वा कण्ठ ग्रसति नि तरां पाककृदतिसारे,श्लेष्मव्याधेरुपशमकर श्वास कासापहर्त्ता। हिक्काशूलं हरति नितरा शो धनः स्वादनानां, प्रोक्तश्चायं समधिकगुण, श्रेष्ठ- काषायनामा॥" अथ क्षाररसवीर्य्यम्—"क्षारः क्लेदं जनयति मुखे स्वादुरुष्णो विदाही यतस्त्रे- ष्मारुचिकरदत्तमूत्रकोपणञ्च। वातादृश्वास जयति पुनर्वृद्धिरसच्छयः स्यात्, श्रेष्ठः प्रोक्तो रसवरमहान् सर्व्वतो योग्यभूतः॥" अत्रि.६ष.।

**रसकः**। पुं। निष्क्वाथमासे। हेम.। क्ली। स्फटिकाख्यां। फटकिरि। र.सा.सं.भञ्जनरसे। मांसरसे। च.द.शूल चि.। खर्परीतुत्थके। वै.निघ. २भ.चयचि.नवरत्नराजमृगाङ्के। "खर्परीतुल्यकं तु- त्यादन्यत्तत् रसकं स्मृतम्। ये गुणास्तुत्थके प्रोक्ता- स्ते गुणा रसके स्मृताः॥" भा.पू.१भ.उपरसव.।

**रसकर्पूरम्**। क्ली। (Percloride of mercury.) स्वनामख्यातधातौ। रसकर्पूर। पारदस्य श्वेतभस्मीकरणे। चन्द्रिकाकारः। एत- त्साधनप्रणाली—"पिष्टं पांशुपटु प्रगाढममलं व- ज्राम्बुना नैकशः, सूतं धातुगतं खटीकबलितं तं सपुटे रोधयेत्। अन्त.स्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं दृढं, घस्त्रं ग्राह्यमथेन्दुकुन्दधवलं भस्मोपरिस्थं शनै.। तद्वद्दिनत्रयं लवङ्गसहितं मा- त्र प्रयुक्तं भजेत्॥" र.सा.स.। गुणाः—फिरङ्ग- रोगघ्न दीपनं पुष्टिकरं बलवीर्य्यकारकं कुष्ठघ्नं व्रणघ्नञ्च। द्रव्यगुणः।

**रसकल्पलता**। स्त्री। वैद्यकरसग्रन्थे।

**रसका**। स्त्री। क्षुद्रकुष्ठभेदे। लक्षणम्—"क- ण्डून्विता या पिडका शरीरे संस्रावहीना रसको- च्यते सा।" सु.।

**रसकेशरम्**। क्ली। कर्पूरे। हारा.।

**रसकेसरी** (इन्)। पु। अरोचके रसः। पाठः —"रसगन्धौ समौ शुद्धौ दन्तीक्वाथेन मर्दयेत्। देवपुष्पं वाणमितं रसपादं तथामृतम्। माषमात्र- न्तु तत्सेव्यं नागरेण गुडेन वा॥"......रस.को.।

**रसक्रिया**। स्त्री। द्रव्यस्य घनीभूतसारकरणे। পাক হৈলে দ্রবের সারকরণ। "क्वाथादीनां पुन पाकात् घनभावे रसक्रिया। मात्रा रसक्रि- यायाश्च विद्यात् पाणितलं बुधः॥" सु.सू.२६ष.। सु.चि.२१ष.। [विलासे)।

**रसखर्परः**। पुं। खर्परधातौ। (कौसलको-

**रसगतज्वरः**। पुं। रसधातुगतज्वरे। लक्षणं —"गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ। रसस्थे तु ज्वरे लिङ्ग दैन्य चास्योपजायते॥" मा. नि.।

**रसगन्धः** (क.)। पुं। गन्धके। रा.नि.व.१२

रक्तकरवीरे रा.नि.व.४।१०। लकुचवृक्षे। श.मा.। नीलभृङ्गराजे। वै.निघ.।

**रविप्रिया (प्रीता)**। स्त्री। सूर्य्यावर्त्तक्षुपे। हुड़हुडिया। र.मा.। [र.सा.स.रसमारणे।

**रविभक्ता**। स्त्री। सूर्य्यावर्त्तक्षुपे हुड़हुडिया।

**रविमूलम्**। क्ली। अर्कमूले। आकन्दमूल। र.सा.स.ज्वरचूडामणौ। [१२।

**रविरत्न(क)म्**। क्ली। माणिक्ये। रा.नि.व

**रविलोहम्**। क्ली। ताम्रे। ताँबा। रा.नि.व.१३।

**रविवल्लभ**। पुं। भृङ्गराजवृक्षे। वै.निघ।

**रविवल्ली**। स्त्री। आदित्यभक्तायां। हुड़हुडिया। ब्राह्मीक्षुपे। वै.निघ।

**रविसंज्ञकम्**। क्ली। ताम्र। श.च.।

**रविसुन्दररसः**। पुं। सर्व्वज्वराधिकारे रसः। "द्विभागतालेन हतञ्च ताम्रं रसञ्च गन्धञ्च समानमात्रम्। विषञ्च सप्त द्विगुणञ्च ताम्र त्रिसप्तवारञ्च खरातपे हि। विमर्द्य विश्वस्य रसेन चूर्णं गुञ्जैकदत्तं सितया समेतम्...॥" रस.कौ.। (समीनमात्रं। विष समञ्च द्विगुणञ्च ताम्रं। इति भा. पाठः। [(मेडाशिङे। वै.निघ.।

**रविसर्गा**। स्त्री। फल्गुमीर्षमासाम्। क्षुप

**रवीन्दम्**। क्ली। पद्मे। धरणि.।

**रवीष्टः**। पुं। नागरङ्गवृक्षे। रा.नि.व.११। स्त्री (ष्टा)। आदित्यभक्तायाम्। हुड़हुड़िया। रा.नि.व.४।

**रशः**। पुं। वंशे। वङ्गसे.चि.जातीफलावटौ।

**रशना**। स्त्री। जिह्वायाम्। श.र.।

**रशील**। पुं। कर्म्मरङ्गवृक्षे। कामराङ्गा गाछ। प.मु.।

**रश्मिः**। पुं। पक्ष्मणि। किरणे। मे.।

**रश्मिजातम्**। क्ली। रौप्ये। वै.निघ.।

**रश्मिपतिः**। पुं। आदित्यपत्रक्षुपे। रा.नि.व.४।

**रसम्**। क्ली। बीजे। निशाफल। रसाञ्जने। रा.नि.व.६। प.मु.। पुं। हिङ्गुले। र.मा.। पारदे रा.नि.व.१६। शिलारसे। प.मु.। सिन्दूरे। इक्षुरसे। रोगे। वै.निघ.। विषे। रागे। गुणे। मांसद्रवे। अम.। जले। स्वादे। त्रिका.। शुक्रे। अम.। किराततिक्तके। द्राक्षायां। वै.निघ.। शरीरस्थसप्तधातुषु प्रथमधातौ। वसधातु। रा.नि.व.८। रसस्वरूपम्—स चाहारसारभूतः। "आहारस्य रसं सारः।" शार्ङ्ग.पू.६अ.। "सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रसः।" गुणाः—सितः शीत स्वादु स्निग्धश्चलश्चेति। तत्कर्म—स धमनीर्गत्वा सर्व्वान् धातून् पुष्णाति। तदनु शीतस्निग्धपीच्छलत्वादिगुणैः शरीरं व्याप्नोति। तस्य स्थानम्—"सर्व्वदेहचरस्यापि स्थानं हृदयमेव च। रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्व्वान् धातून् विवर्द्धयेत्॥" भा.। स्वरसे क्वाथे वा। दृषदि सम्भिन्नद्रवद्रव्ये। रा.नि.व.२०। सि यो.ज्व.चि.। तत्साधन यथा—"कुडव चूर्णितं द्रव्यन्निक्षिप्य द्विगुणे जले। अहोरात्रात् स्थितं तस्मात् भवेद्वा रस उत्तमः॥ आदाय शुष्कं द्रव्यं वा स्वरसानामसम्भवे। जलेऽष्टगुणिते साध्य पादशेषञ्च गृह्यते। निःशीपितञ्चापि सिद्धं पलमात्र रसम्पिबेत्। सितामधुगुड़क्षारान् जीरकं लवणन्तथा। घृतं तैलञ्च चूर्णादीन् कोलमात्रान् रसे क्षिपेत्॥" शार्ङ्ग.१अ.। रसनेन्द्रियग्राह्यवस्तुनि, मधुरादौ। मिठादि ज्ञान। स च कालस्वभावभूमिवियदनिलानलसम्पर्केण परिणामान्तरं प्राप्य षट्प्रकारो भवति। ते च षड्रसाः द्रव्यमाश्रित्य तिष्ठन्ति—"रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः। षट् द्रव्यमाश्रितास्ते च यथापूर्व्वं बलावहाः॥" गुणाः—"तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्। कषायतिक्तमधुराः पित्तमन्ये तु कुर्व्वते॥" भा.। तत्र पृथिव्यम्बुगुणभूयिष्ठो मधुरः, तोयाग्निगुणभूयिष्ठोऽम्ल, पृथिव्यग्निगुणभूयिष्ठो लवणः, वाय्वग्निगुणभूयिष्ठः कटुकः, वाय्वाकाशगुणभूयिष्ठः तिक्तः, क्षित्यनिलगुणभूयिष्ठः कषायः। सु.सू.४२अ.। रसभेदविकल्पाच त्रिषष्टिः। सु.उ.६३अ। समपञ्चाशदिति। च.द.द्रव्यगुणे शिवदास। "मधुरः कषायस्तिक्तश्चाम्लकश्च क्षारः कटुः षड्रसनामधेयम्। वयं वर्ष्म वातकफप्रकोपनं द्वय तथा पित्तकरं वदन्ति॥ क्षारः कषायः पवनप्रकोपी मधुरोऽथ तिक्त कफकोपनश्च। कटुश्चक्रो पित्तविकारकारिणी कटुश्चक्रो वातघ्नी मन्दरी॥

स्निग्ध श्रेष्ठो गन्धक उच्यते। कृत्वा भद्र गन्धकम तिकुम्भ घद्रलघुलाकारं। भृङ्गराजरसैरेनल्प भावयेत् पात्रे। तदनु च शुष्कं कुर्यात् धूलिसमा नच सप्तधा रौद्रे। तदनु च शुष्कं चूर्णं कृत्वा विन्यस्य लौहिकामध्ये। निर्धूमबदरकाष्ठाङ्गारे न्यस्य विलाप्य तैलसम। पात्रस्थितभृङ्गराजरसमध्ये ढालयन्निपुण। तस्मिन् प्रविष्टमात्र कठिनत्व याति गन्धकचूर्णं। पुनरपि रौद्रे शुष्क कैतकरजसा स मानतां नीत। शुद्धे सूते शोधितगन्धकचूर्णेन तुल्यता कार्या। तावन्मर्दनमनयोर्यावन्न कणोऽपि दृश्यते सूते। पश्चात् कज्जलसदृश चूर्णं लौहीस्थित यत्नेन। निर्धूमबदरकाष्ठाङ्गारे न्यस्य विलाप्य तैलसम। मध्ये भीमयन्त्रिते कदलदले ढालयेन्मृदुनि। लौहीस्थितमवशिष्टं कठिनं तत्र सद्भी तवा। पश्चात् पर्पटरूपा पर्पटिका कीर्त्यते लौकैः॥” পারাশোধন—বহ্ন্যাদিদোষবিশুদ্ধ লোহপাত্রস্থ পারাকে যথাক্রমে জন্তীপাতা এরণ্ডপাতা, আদার রস, কাকমাচীর পাতার রস ও চিতাপাতার রসে ডুবাইয়া নিয়ত মাড়িয়া রৌদ্রে শুকাইয়া লইবে। গন্ধক শুদ্ধি—ঐরূপ শুকপুচ্ছাভ, নবনীতাভ, মসৃণ, কঠিন ও স্নিগ্ধ উত্তম গন্ধককে তণ্ডুলের ন্যায় খণ্ড খণ্ড করিয়া ভীম রাজরসে ৭ ভাবনা দিয়া শুকাইবে, এবং ধূলিবৎ চূর্ণ করিবে। পরে ঐ চূর্ণ লোহ পাত্রে কুলকাঠের অঙ্গারে গলাইয়া গলাইয়া ভীমরাজরসে ঢালিবে। কঠিন হইলে তুলিয়া শুষ্ক ও চূর্ণ করিবে। এইরূপে শুদ্ধপারদ ও শুদ্ধগন্ধক সমভাগ লইয়া যথাবিধি মর্দ্দন করত নিশ্চন্দ্র কজ্জলি করিবে। পরে ঐ কজ্জলি লোহপাত্রে কুলকাঠের অঙ্গারে গলাইয়া তৈলবৎ হইলে গোময়বেষ্টিত কলাপাতার উপর ঢালিয়া গোময়ভবিত কলাপাতার পুঁটুলি দ্বারা চাপিয়া ধরিয়া পর্পটী প্রস্তুত করিবে। পর্পটীর বর্ণ চক্রকের ন্যায় হইলে ঠিক পাক হইয়াছে জানিবে। মাত্রা ২ রতি হইতে এক এক রতি করিয়া দশ রতি পর্য্যন্ত দিবে। পরে ঐ নিয়মে ক্রমে হ্রাস করিয়া আনিবে। ভৈষ.।

**रसपाकज.** । पुं। गुडे। रा, नि व १४।

**रसपारिजातक** । पु। वैद्यकरसग्रन्थभेदे।

**रसपूर्त्तिका** । स्त्री। ज्योतिष्मत्याम्। लता कटुकी। भैष ज्व चि पानीयवटी।

**रसप्रदीपः** । पु। रामचन्द्रकृते वैद्यकरसग्रन्थे।

**रसफल** । पु। नारिकेलवृक्षे। रा नि व २३। आमलकीवृक्षे। वै निघ।

**रसबन्धकरः** । पु। सोमलतायाम्। वै निघ.।

**रसभवम्** । क्ली। रक्ते। रा नि व १८।

**रसभस्म** । क्ली। पारदभस्मनि। পারাভস্ম। तत्प्रकरणम्—“देवदाली हंसपादी यमचिञ्चा पुनर्नवा। एभि सूतो विमर्द्दय पुटनात् म्रियते ध्रुवम्॥” र सा स.।

**रसभावः** । पु। रसधर्म्मे स्निग्धतादौ। यथा—“मधुरो लवणाम्लौ च स्निग्धभावास्त्रयो रसाः। वातमूत्रपुरीषाणांप्रायो मोचे सुखा मताः। कटुतिक्तकषायास्तु रूक्षभावास्त्रयो रसाः। दुःखा विमोचे दृश्यन्ते वातविण्मूत्ररेतसाम्। मधुरं श्लेष्मलप्रायो जीर्णाच्छालियवादृते। मुद्गाद्गोधूमतः क्षौद्रात् सितायाः जाङ्गलामिषात्। प्रायोऽम्लं पित्तजननं दाडिमामलकादृते। अपथ्यं लवणं प्रायः चक्षुषोऽन्यत्र सैन्धवात्। तिक्तं कटुश्च भूयिष्ठमवृष्यं वातकोपनं। ऋते पटोलकषायवच्छौविश्वामृता मता॥” राज ४प.।

**रसमञ्जरी** । स्त्री। शालिनाथकृतरसग्रन्थे।

**रसमञ्जरीभाष्यम्** । क्ली। शेषचिन्तामणिकृत रसमञ्जरीभाष्ये।

**रसमणिः** । पु। हरिहरकृतरसग्रन्थे।

**रसमण्डूरम्** । क्ली। परिणामशूले औषधम्। पाठ—“कुडव पथ्याचूर्णं द्विपल गन्धाश्मलौहकिट्टयोः। भृङ्गरसस्यार्द्धपल मधुनः कमरास्य। मस्त्विन्मितश्च दत्वा पात्रे लौहे च दण्डसङ्घट्ट। शुष्क घृतमधुयुक्तं मर्दितं स्थापयेत् भाजने स्निग्धे॥” रस र। भृङ्गराजकेशराजयो प्रत्यक रसग्रहणम्।

**रसमर्द्दनम्** । क्ली। पारदस्य चूर्णीकरणे मारणे वा। See पारद।

**रसमाणिक्यम्** । क्ली। कुष्ठाधिकारे औषधम्। पाठ—“तालक वंशपत्राख्यं कुष्माण्डजलि

मधुरसे । योगे । विका. । क्ली । रसाञ्जने । रा नि व ६ । [र्स ।

**रसगन्धकसम्भूतम्** । क्ली । हिङ्गुले । र.मा

**रसगर्भम्** । क्ली । रसाञ्जने । भा म.४भ.नेत्ररो चि. । हिङ्गुलविशेषे । रा.नि व १३ ।

**रसगुडिका** । स्त्री । कासाधिकारे रस । पाठ —'रसभागो भवेदेको गन्धको द्विगुणो भवेत् । त्रिभागा पिप्पली पथ्या चतुर्भागा विभीतका । पञ्चभागा त्वामला च षड्भागा समभागिका । भार्गी सर्व्वमिदं चूर्णं भाव्य बब्बूलजद्रवे । एकविंशतिवारञ्च मधुना गुडिका कृता । विभीतकप्रमाणेन प्रातरेकान्तु भक्षयत् ॥" र.सा म ।

**रसघ्न.** । पु । टङ्कणे । सोहागा । रा नि व ६ ।

**रसचन्द्रिकावटी** । स्त्री । ग्रिरोरोगे हिता । पाठ —"त्रैलोक्यविजयाबीजं बीजमुन्मत्तकस्य च । कण्टकारीबीजकञ्च एरण्डं बीजमेव च । बीजञ्च इन्द्रदारुण समौ गन्धकपारदौ । चार्द्रकैर्वटिका कार्य्या कलायपरिमाणतः । एषा तोयानुपाने न प्रातः खाद्या हिताग्रिना ॥" र सा स ।

**रसचूडामणि.** । पुं । ज्वराधिकारे रस । पाठ —'मृतमभ्र विष ताम्र जयपाल समगन्धक । हेमतैलेन सम्मर्द्य ततो लघुपुटं ददेत् । भावयेत् बालकद्रावैरामदिवसौजसे । पित्ते इन्द्रवरुण मित्र विषधूमेन शोधयेत् । सप्तवार निशार वा यथादार्द्रेण भावयेत् । रसचूडामणि सिद्ध साध्या न् योगेरयो महान् ॥" मात्रा १ र. । आर्द्रकमि श्रुरसाभ्यां सेव्य । रस चि. ।

**रसजः** । पु । गुडे । रा नि व १४ । सुराकिट्टे । हे च । क्ली । रक्ते । म.च. । रसाञ्जने । वै निघ. सञ्चूर्णो चि पाठाचूर्णे ।

**रसजातम्** । क्ली । रसाञ्जने । रा नि.व १३ ।

**रसज्ञा.** । स्त्री । जिह्वायाम् । रा नि व.१८ ।

**रसज्येष्ठ.** । पु । मधुररसे । हे च । सा स. ।

**रसतालेश्वर.** । पुं । कुष्ठाधिकारे रस । र

**रसतेज (स्)** । क्ली । रक्ते । हे च. ।

**रसदा** । स्त्री । मतनिर्गुण्ड्याम् । श्वेत निर्गि ण्डी । वै.निघ. ।

**रसदालिका** । स्त्री । पुण्ड्रकेक्षौ । पूंड़ा आ थ । कदड्ग्रालिनामेक्षौ । रा नि व १४ । [११ ।

**रसद्रावी (इन्)** । पु । मधुरजम्बीरे । रा नि व

**रसधातुः** । पु । पारदे । रा नि व १३ ।

**रसनम्** । क्ली । आस्वादने । रा नि व २० । खर्परे । पु । कफे । तस्य स्थान कण्ठ कर्म च रसनम् । भा. । स्त्री (ना, नी) । जिह्वायां । रा. नि व १८ । रास्नायाम् । रा नि व ६ । वै निघ ज्व. चि चर्कादि । "चर्कामृताकिरातामरतरुरसना।"

**रसनाथः** । पु । पारदे । रा नि व १३ ।

**रसनारदम्** । क्ली । निशब्दे । रा नि व १८ ।

**रसनाभम्** । क्ली रसाञ्जने । रा नि व १३ ।

**रसनायक.** । पु । पारदे । अ र. । [शिवे. ।

**रसनालिट् (ह)** । पुं । कुक्कुरे । हे.च ।

**रसनिगड** । पु । रसनिगडो, रसनियामक मङ्गलधौषधे । पाठ —"कुमार्कसम्भव चीरं म धनबीजञ्च गुग्गुलु । सैन्धव द्विगुण सर्वं निगडोऽय महोत्तम ॥" अपबीज पलाशबीजं, अहीफेनबीज वा । द्विगुणमिति रसापेक्षया मिलित सर्व्व द्विगुणम् । र सा म. । [वै निघ. ।

**रसनिर्यासः** । पु । शालवृक्षे । शाल गाछ ।

**रसनेत्रिका** । स्त्री । मन शिलायां । हे च ।

**रसनेष्ट.** । पु । दधौ । प सु. ।

**रसनेन्द्रियम्** । क्ली । जिह्वायाम् । च सा ७च. ।

**रसपर्पटिका (टी)** । स्त्री । ग्रहण्याद्यधिकारे औषधम् । पाठ —"याक्षपित्ते विधातव्या गुडिका च सुधावती । तत्र योगविधौ यद्दौ समौ रसगन्धकौ । सम्यक् कज्जलाभौ तु कुर्य्यात्ताभ्ये द्दराम्भे । ततो बादरवह्निज्वालोऽपाके द्रवीकृत । गोमयोपरि विन्यस्तकदलीपत्रपातनात् । कुर्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात् । रक्तिद्वादशक यावत् प्रयोग प्रवरार्हति ॥" र. सा स. । "अथ रसे नवस्था यथावृत्त्यनुभूते । चार्द्रकरसे च सूत पञ्चरसे काकमाच्याच । मधुमदितामृतर्भ्रां मर्दनयं चरेत गन्धकेयान् । प्रतरभाजनमध्य यद्विरियं पारदस्यैका । द्रवरूप दलसमस्वादी नवनीतसमद्युति. । ग्रहण्यां कठिनः

क्षे। विषलाङ्गुलिया। अ.र.। भैष.स्त्रीरोग.चि.। गजपिप्पल्यां। रा.नि.व.२३। च द.वा.व्या.पञ्च इषातैलै। चव्ये। चई। भा.पू.१भ.। महाराष्ट्री लतायाम्। काँचड़ादाम श.च.। रा.नि.व.४। सु.सू.३३भ.। पृश्निपर्ण्याम्। चाकुलिया। मञ्जि ष्ठायाम्। ऋषभके। कपिकच्छ्वाम्। आलकुशी। वै.निघ।

**लाङ्गलिकः।** पुं। स्थावरविषभेदे। हे.च.।

**लाङ्गलिकी (नी)।** स्त्री। कलिकारिकायां। विषलाङ्गुलिया। अम.। सु.सू.३८भ.कफशोधने।

**लाङ्गली (इन्)।** पुं। नारिकेलवृक्षे। रा.नि.व.११। सर्पे। श.च.।

**लाङ्गलीशाकः।** पुं। जलजशाकविशेषे। काँचड़ा शाक। गुणा.—"लाङ्गली कफपित्तघ्नी रुचा वातविवर्द्धिनी।" राज.३प.।

**लाङ्गु(ङ्गू)लम्।** क्ली। पुच्छे। लेज। श.टी.। शिश्ने। मे.।

**ला(ङ्गु)(ङ्गू)ला (लिका,ली)।** स्त्री। कपिकच्छ्वाम्। रा.नि.व.३। पृश्निपर्ण्याम्। चाकुलिया। रा.नि.व.४। पुं (ली [इन्])। ऋषभके। रा.नि.व.५।

**लाजम्।** क्ली। उशीरे। वेणा। मे.। पुं। आर्द्रतण्डुले। मे.। पुबहु, स्त्री(जा)। अक्षते। मे.।

**लाजचूर्णम्।** क्ली। खधिचूर्णे। दैवयेर गुँड़ा।

**लाजतर्पणम्।** क्ली। लाजसक्तुकृततर्पणविशेषे। भा.म.१भ.ज्व.चि.। "दाडिमाम्बुहितं चाम्लं निरम्लं तृष्णयान्वितं। शर्करामधुसंयुक्तं पाययेल्लाजतर्पणम्॥"

**लाजपेया।** स्त्री। खधिकृतपेयायां। दैवयेर मण्ड। वा.चि.१भ। "लाजपेया सुखजरा।" च.द.। गुणा—"पूर्ववच्च कृता लाजपेया लघ्वी मता यतः। गुणैः प्रबला विज्ञेया पूर्वोक्ताया गुणाधिका। विवद्धमूत्रवर्चाभिर्दीप्ताग्निप्रदा मता॥" वै.निघ.। "लाजपेया श्रमघ्नी तु क्षामकण्ठस्य देहिनः। तृष्णातिसारदोषघ्नी स्वल्पक्षुद्विरोग-हिमाग्निनी॥" राज.३प.।

**लाजभक्तः।** पु। खधिभक्ते। गुणाः—"लाजभक्तो लघुः शीतश्चाग्निदीप्तिकरो मधुः। तृष्णा निद्रारुचिकरः कफपित्तविनाशकः। व्रणशोधनकारी स्याद्दधिभि. परिकीर्तितः॥" वै.निघ.।

**लाजमण्डः।** पुं। खधिमण्डे। दैवयेर मण्ड। गुणा.—अग्निजननो दाहतृष्णानिवारण ज्वरातिसारशमनश्च। श्रेष्ठश्च आमपाचन. मन्दाग्निविषमाग्निबालस्थविरयोषिता देयश्च। राज.३प.।

**लाजवर्णा।** स्त्री। असाध्यलूताविशेषे। सु.कल.८भ.।

**लाजश(स)क्तुः।** स्त्री। खधिचूर्णे। दैवयेर छातु। शीतवीर्य्या अत. सान्निपातिके न हिता। सि.यो.ज्व चि.।

**लाजाः।** पुं बहु। खधिकायां। लाओञा,दैथ। भृष्टव्रीहिमात्रे। 'ये केचिद्व्रीहयो भृष्टास्ते लाजा।" रा.नि.व.१६। सतुषधान्यानि भृष्टस्फुटितानि लाजानाहुः। भा.। भृष्टधान्येषु। सि.यो.र.पि.चि. मिहतमयोगे। च.सू.४भ.कर्याम्। गुणाः—"लाजास्तृट्छर्दतीसारमेहमेद.कफच्छिदः। कासपित्तापशमना दीपना लघवो हिमाः॥" राज.३प.।

**लाघुलम्।** क्ली। धान्ये। वै.निघ.।

**लाञ्छनम्।** क्ली। राजिमामकधान्ये। रा नि.व.१६। तन्नामकक्षुद्ररोगे। लक्षण—"कृष्णं सितं वा सहज मण्डलं लाञ्छन समम्।" वा.उ.३१ भ। चिह्ने। मे.। [नी]। वै निघ।

**लांटपत्रः (र्णः)।** पुं। त्वचायाम्। दारुचि-

**लामज्ज(क)म्।** क्ली। उशीरभेदे। गन्ध वेणा। सु.म.३८भ.। च.द.सि.यो.दाह.चि.। "लामज्जेनाथ शुक्लेन चन्दनेनानुलेपयेत्।" (Andropogon laniger,) The Juncus odoratus उशीरवत्पीतक्षविटपविशेषे, सुगन्धवीरणे। हिं लामज्जक। सैं तेहवदिरेर। अभावे उशीर देयम्। भा.म.१भ.ज्व चि.महाखाधादिते-ले। "लामज्जकं चन्दनञ्च।" च.सू.२५भ। "लामज्जकं यदा न स्यादुशीरं दीयते तदा।" गुणाः—"हिमं तिक्तं मधुरं वातपित्तघ्नं तृष्णादाहश्रममूर्च्छारक्तपित्तज्वरघ्नञ्च। रा नि व.१२। "दीर्घमूलं हटं सूक्ष्ममुत्तमं गन्धसंयुतं। देशे साधारणे जातं लामज्ज भद्रकं भवेत्॥" भैष.।

**लालनम्।** क्ली। पियावरीजे। वै निघ.। पुं।

मूषिकविशेषे। तद्दष्टे लालास्राव हिक्का छर्दिश्च जायते। सुकल्प.६ष । वा उ १८ष ।

**लालसा** । स्त्री। गर्भिणीदोहदे। गाध। वै.च।

**लालसीकम्** । क्ली। पिच्छिले। श र.।

**लाला** । स्त्री। मुखस्रावे। लाल। रा नि व १८।

**लालामेहः** । पुं। प्रमेहभेदे। लक्षण—"ला लातन्तुयुत मूत्र लालामेहेन पिच्छिलं। प्रमेह ति ॥" निदा.।

**लालाविषः** । पुं। लूतादौ। वै.च.।

**लालास्रावः** । पु। लालाचरणे। लालपड्'। ऊर्णनाभौ। माकड़शा इ च.।

**लालिकः** । पु। महिषे। वै च.।

**लावः (का)** । पुं। स्वनामख्यातस्थलचरपक्षिविशेषे। बटेर पाखी। लिका। म लावगी, लावुकपक्षि। तन्मांसगुणा—पथ्य ग्राहि लघु च। रा नि व ७। "पक्षिणाच महाग्रेष्ठो लावको ला घुलात्मक। सग्राही दीपन प्रोक्त कषायो मधुरो लघु। तथा विपाके मधुर सन्निपातेऽतिपूजित ॥" चवि.२१ष। लवङ्गे। च.द वा.व्या. मदासुमश्विनौले।

**लावणः (णिकाः)** । त्रि। लवणसस्कृते। वै च.। क्ली। नले। ८सा.स.। [मावाशितीय च.।

**लावणिकतैलम्** । क्ली। तैलविशेषे। च.सू.

**लावण्यम्** । क्ली। लवणले। लोणता। कान्तौ।

**लावण्या** । स्त्री। ब्राह्मीरूपे। वै.निघ.।

**लावा** । स्त्री। लावपक्षिणि। रा नि व १८।

**लावाचकः** । पु। व्रीहिधान्यभेदे। व्रीहर्वग गुण। सुसू.४६ष.। [श र.।

**लावुः (वूः)** । पु, स्त्री। अलाबाम्। लाउ।

**लासः** । पु। यूषे। झोल। श.च.।

**लासकः** । पु। मयूरे। मे।

**लास्फोटनी** । स्त्री। आस्फोटायां। वैद्यनिकायां। च टी.रा.।

**लाक्षा** । स्त्री। पेयके। वै निघ.।

**लाचा** । स्त्री। (Coccus lacca) Lac. स्वनामप्रसिद्धरञ्जकद्रव्ये। लाहा, गाला। हिं ला ही। मं लाख। कं अरगु। ते लक्क, लक्क। च.द वि.ज्व.चि षट्कतैले। "लाचानिशाञ्जीष्ठत्य ष्टिकाभि।" गुणा —तिक्ता कषाया श्लेष्मपित्तघ्नी विषघ्नी रक्तघ्नी विषमज्वरघ्नी च। रा नि व.६। "लाचा च नूतना ग्राह्या मृत्तिकादिविवर्जिता।" भैष.।

**लाचातरुः** । पुं। पलाशवृक्षे। श मा.।

**लाचादितैलम्** । क्ली। ज्वररोगाधिकारे तैलम्। पाठ —"लाचारससम सिद्ध तैल मस्तु चतुर्गुण। रास्नाचन्दनकुष्ठाब्दवाजिगन्धानिशायुगैः। शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः। बालानां ज्वररक्षोघ्नमभ्यङ्गात् बलवर्णकृत्।" महालाचादितैल यथा —'लाचारसाढके प्रस्थ तैलस्य विपचेद्भिषक्। मस्त्वाढकसमायुक्त पिष्टा चात्र समावपेत्। शतपुष्पां हरिद्राञ्च मूर्वां कुष्ठ हरेणुकां। कटुकां मधुक रास्नामश्वगन्धाञ्च दारु च। मुस्तकं चन्दनञ्चैव पृथगक्षसमानकैः। दृष्टेऽतैलं तत्सिद्धम् अभ्यङ्गान्मारुतापहम्। विषमाख्यान् ज्वरान् सर्वान् मार्गैव प्रशमं नयेत् ॥" अत्र दोलायन्त्रविधानात् चतुर्गुणजलेन लाचायाःषड्विंशतिवारान् परिस्राव्य लाचारसो ग्राह्य। कुट्टितलाचा १ श. वारि १८ श. २१ वारान् दोलायन्त्रे परिस्राव्य १६ श. ग्राह्यम्। अथवा लाचा ८ श. वारि ६४ श. पक्त्वा शे. १६ श. ग्राह्यम्। तिलतैलं ४ श. लाचारसः क्वाथो वा १६ श. दधिमस्तु १६ श.। कल्कार्थे—शतपुष्पा हरिद्रा मूर्वामूल कुष्ठ रेणुकं कटुकी यष्टिमधु रास्ना अश्वगन्धा देवदारु मुस्त रक्तचन्दन प्र. २ तो. पाके सिद्धे कर्पूर शिलारस. मस्त्वो प्र. १ तो. तैले मिश्रयेत्। रस र.।

**लाचादिवर्गः** । पुं। लाचारेवतकुटजाश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्य त्रायमाणा चेति। सु सू ३८ष।

**लाचापुष्पा** । स्त्री। मतपत्राम्, गुलाब इति ख्यातपुष्पवृक्षे। भा.। [लाक्षा चम.।

**लाचाप्रसादः** । पुं। पट्टिकारोघ्रे। रक्त

**लाचाप्रसादनः** । पुं। रक्तलोघ्रे। अम.।

**लाचारसः** । पुं। लाचाजले क्वाथे वा। गान्धारे द्रुम। सि.घो वन्द.चि चन्दनादितैले। तथा धनविधि.—"चतुर्गुणाम्बसा लाचा दोलायन्त्रे तु

वर्णिता। त्रिसप्तधा परिभावा लाक्षारसमिमं विदुः॥" प.प्र.२ख।

**लाक्षावृक्षः**। पुं। कोषाम्रवृक्षे। कुसुमगाछ। रा.नि.व.११। पलाशवृक्षे। हारा।

**लिकुचम्**। क्ली। चुक्रे। चुकापालङ्। रा.नि.व.७। क्षुद्रपनसे। डेलो। वै.निघ.। पुं। लकुचवृक्षे। डेलो गाछ, मान्दार गाछ। र.मा.। रा.नि.व.६।

**लिक्षा (ख्या)**। स्त्री। केशकीटभेदे। लिकि। अ.र.। सूर्यकिरणान्तर्गतसूक्ष्मरेणुचतुष्टयमाने। प.प्र.।

**लिङ्गम्**। क्ली। शिश्ने। रा.नि.व.१८। चिह्ने। अम.। लक्षणे। रोगव्यापकहेतौ। "संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः।" मा.नि.।

**लिङ्गकः**। पुं। कपित्थवृक्षे। श.च.। [व.१।

**लिङ्गजा**। स्त्री। लिङ्गिनीलतायाम्। रा.नि.

**लिङ्गनाशः**। पुं। लिङ्गम् इन्द्रियशक्तिं दृष्टिं नाशयति। नीलिकाकाचापरनामके नेत्ररोगविशेषे। काचे उपेक्षिते दृतीयं चतुर्थं पटलं वा गते लिङ्गनाशो जायते। तिमिर, छानि। इति भाषा। स वातजादिभेदेन षट्। ते च पुनर्वक्ष्यते इति भविष्यति वाद्यमधा। लक्षणं—"स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः। वातेन चापि रूपाणि भ्रमन्तीव च पश्यति। आविलान्यरुणाभानि व्याविद्धानीव मानवः॥" मा.नि.। "स याप्युपेक्षमाणस्य चतुर्थं पटलं गतः। लिङ्गनाशं मलः कुर्वन् छादयेद्दृष्टिमण्डलम्॥" तत्र वातेन यथा—"रक्तारुणाभा विस्तीर्णा सूक्ष्मा वा दृतदर्शना। स लिङ्गनाशः...... ॥" पित्तजे यथा—"भङ्गनीला निराभीला दृक्स्निग्धा लिङ्गनाशतः।" कफजे यथा—"लिङ्गनाशे तु लक्ष्यते ......।। मूर्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः। बिन्दुर्जलस्येव चलः पद्मिनीपुटसंस्थितः। उष्णे सङ्कोचमायाति छायायां परिसर्पति। शङ्खकुन्देन्दुकुमुदस्फटिकोपमण्डलिमा॥" रक्तजे यथा—"लिङ्गनाशेन ताडगृहं निष्प्रभां हतदर्शना।" सन्निपातजे यथा—"संसर्गे सन्निपातेषु विद्यात्सङ्कीर्णलक्षणात्।" कफजं विना लिङ्गनाशान् असाध्यान् विदुः। वा.उ.११५.।

**लिङ्गरोगः**। पुं। उपदंशे। भा.।

**लिङ्गवर्त्तिः** / **लिङ्गार्शः**। स्त्री। गुह्यरोगविशेषे। लक्षणं—"अङ्कुरैरिव सञ्जातैरुपर्युपरि संस्थितैः। क्रमेण जायते वर्तिः ताम्रचूडशिखोपमा। मेढ्रमध्ये नृणां केचित् केचित् सन्धौ श्रयाः स्मृताः। रुजादाहार्त्तिबहुलास्तथातीदसमन्विताः। स्त्रीणां पुंसाञ्च जायन्ते ह्युपदंशाः सुदारुणाः॥" मा.नि.।

**लिङ्गवर्द्धनः**। पुं। कपित्थवृक्षे। श.च.।

**लिङ्गवर्द्धिनी**। स्त्री। अपामार्गवृक्षे। आपाङ्। श.च.। [तायां। रा.नि.व.३।

**लिङ्गसम्भवा (भूता)**। स्त्री। लिङ्गिनील-

**लिङ्गालिका**। स्त्री। क्षुद्रमूषके। हारा.।

**लिङ्गिनी (ङ्गी)**। स्त्री। स्वनामख्यातायां लतायां। पञ्चगुडिया। शिवलिङ्गिनी। गुणाः—कटुः उष्णा दुर्गन्धा रसायनी च। रा.नि.व.३।

**लिप्तः**। त्रि। विषलिप्ते। विषनाशी। मे.।

**लिप्तास्यता**। स्त्री। मुखस्य श्लेष्मलिप्ततायां। मुख चट्चट् करा। मा नि.।

**लिम्पाकः**। पुं। (Citrus acida.) जम्बीरवृक्षविशेषे। पातिलेबुर गाछ। करुणलिम्पाकगुणाः—"करुणं कफवातामदोषघ्नं पित्तकोपनम्।" राज.३प.।

**लि(ली)षा**। स्त्री। लिख्यायाम्। निकि। अम.मर.। परिमाणभेदे, सर्षपषष्ठांशे। श.च.।

**लीका**। स्त्री। क्षुद्रमूषिकमात्रे। छोट इन्दुर मात्र। वै.निघ.।

**लीलाविलासरसः**। पुं। अम्लपित्ताधिकारे रसः। पाठः—"रसो बलिर्व्योम रविश्च लौहं धात्र्याम्बुनैर्भावितं विमर्द्य। तदम्लपुटं मधुमार्कवैश्च सम्मर्द्दयेद्दस्य च वल्लयुग्मं। हन्त्यम्लपित्तं मधुनावलीढं... ॥" र.सा.सं.। [गाछ। वै.निघ.।

**लुङ्गः**। पुं। मातुलुङ्गवृक्षे। छोलङ्ग लेबुर

**लुङ्गमांसम्**। क्ली। मातुलुङ्गमांसे। वै.निघ.।

**लुङ्गाम्लम्**। क्ली। मातुलुङ्गाम्ले। र.सा.सं.चक्रदत्ते।

काशतये । वै निघ. । वर्त्तिविशेषे चन्द्रोदयवर्त्ती । शङ्खनाभिमनःशिलापथ्याविभीतकमज्जापिप्पलीम रिचवचाकुष्ठश्चेति द्रव्यैः छागदुग्धेन वर्त्तिः । सु. कौ. ।

**लेखनीयवर्गः ।** पुं । चरकोक्ततृतीयदशके । यथा—"मुस्तकुष्ठहरिद्रादारुहरिद्रावचातिविषा कटुरोहिणीचित्रकचिरबिल्वहैमवत्य ।" इति दशेमानि लेखनीयानि भवन्ति । चिरबिल्व करञ्ज । हैमवती शुक्लवचा । च सू ४अ. । [भा. ।

**लेख(ख्य)पत्रः ।** पु । तालवृक्षे । भूर्जवृक्षे ।

**लेखभा(सा)टः (क) ।** पु । शेलुवृक्षे । वै. निघ ।

**लेखार्हः ।** पुं । तालवृक्षभेदे, श्रीताल इति कोङ्कणे प्रसिद्धे । श्रीताल, तेडेट् । रा नि व ८ ।

**लेख्यः ।** पु । श्रीतालवृक्षे । रोहिण्यादिरोगे । सु सू ५अ. । त्रि । लेखनीये, लेखनार्हे ।

**लेण्डम् ।** क्ली । लण्डायां । ल्याड । भूरिम ।

**लैनीतकः ।** पु । चौभरापथिकपाषाणभेदे । सि यो छर्दि चि. ।

**लेपः (नम्) ।** पुं, क्ली । सुधायां । चूर्ण । विस्व । भोजने । चन्दनादिद्रव्यसञ्चये । गाये लेपा । लेपस्त्रिविध —दोषघ्नो विषहा वर्ण्यश्चेति । पुनश्च तस्य द्वौ भेदौ आलेप प्रदेहश्चेति । तयोरालेप पित्तघ्न आर्द्रमाहिषचर्मवच्छीतल तनुर्विशोषी च । द्वितीय वातश्लेष्मघ्न आर्द्र घन उष्णश्चेति । प्रलेपनिषेधो रात्रौ केवल व्रणे पथ्य । शुष्यमाणश्च तं न धारयेदिति । तदुक्त—"दोषघ्नो विषहा वर्ण्यो लेपस्त्रिविधा मत । द्वौ तस्य कथितौ भेदौ प्रलेपाख्यप्रदेहकौ ॥ तमसा पिहितो ह्यूष्मा रोमकूपेषु संस्थित । विना लेपेन निर्यांति रात्रौ नालेपयेदत ॥" गुणा —"सुशीतो लेपसंज्ञ स्यादुष्ण शीत प्रदेहक । प्रलेप शीत स प्रोक्त रक्तपित्तहर पर ॥ प्रदेह कफवातघ्न पाचन परिकीर्त्तित । यदार्द्र माहिषचर्म तस्योत्सेधेन लेपन ॥ लोमाभिमुखमादेयौ प्रलेपाख्यप्रदेहकौ । अङ्गुष्ठस्य चतुर्भागो मुखलेपो विधीयते ॥ न रात्रौ लेपन दद्यात् दत्त निपतित तथा । न च पर्युषित चापि शुष्यमाण न धारयेत् । न चापि मुखमालिम्पेत् तेन दोष प्रसिध्यति ॥ च. । "अपाकि शोथे विषमे गभीरे कफवायुना । सदुष्टरक्ते विहितो रात्रौ लेपश्च निन्दितम् ॥ षड्भागः पैत्तिके स्नेहः चतुर्भागश्च वातिके । अष्टभागस्तु कफजे स्नेहमात्रा प्रदापयेत् ॥" उल्लण । अथ लेपनिर्णय. । "षोडशांशं षडंशञ्च चतुरंशमथापि वा प्रदापयेत् । लेपप्रदेहयो चौद्र विपरीत हि चेप्सितम् । विकारतत्त्वप्रकृतिप्रमाणे सैन्धवादिके । छपनाङ्गो मतस्तस्मात् यस्मादुपरि बध्यते ॥ स्नेहाम्ललवणं तत्र व्यक्त कृत्वा विनिक्षिपेत् । विषदोषहरावाद्यौ तयोरर्थे विधिस्त्वयम् ॥ यत्तु मध्यो न तस्यैषा श्रुति वृद्धपरम्परा ॥" अथ शिरोलेपविधि —"उक्तासु लेपेषु सर्वेष्वेरण्डपत्रकै । मध्याह्नात्रौ दिवा स्नान युक्तिरेषा प्रशस्यते ॥" इति लेपविधि । चन्दनलेपगुणा —"चन्दनं शीतलं तिक्त तृष्णादाहास्रपित्तजित् ।" अगुरुलेपगुणा —"अगुरु व्रणजित्तिक्तकटूष्ण कफवातजित् ।" कुङ्कुमलेपगुणा —"कुङ्कुमभेदि वैवर्ण्यकण्डूवातकफापहम् ।" कस्तूरीलेपगुणा —"कस्तूरी छर्दिदौर्गन्ध्यरक्तपित्तज्वरापहा ।" लताकस्तूरीलेपगुणा —"लताकस्तूरिका हृद्या शीता तिक्तास्यरोगजुत् ।" तेजपत्रलेपगुणा —"पत्रकङ्कफवातार्शोहृल्लासारोचकापहम् ।" कक्कोलादिलेपगुणा – "कक्कोल कटुकौ हृद्य सुगन्धि कफवातजित् ।" शट्यादिलेपगुणा.—"शटी वातकफश्वासकासज्वरविनाशिनी ।" "उशीर स्वेददौर्गन्ध्यदाहपिपासारोगजित् । रक्तपित्तहृत् बल्य चक्षुष्य रक्तचन्दनम् । श्रीवास सरल पूति कुन्दुरुर्ग्रन्थिपर्णिक । सिह्लक, परमा मांसीदेवदारुसुरानख । सर्व्वेऽमी परमा लघो रक्षोघ्ना ज्वरनाशना ॥" राज.२प. । [१२ ।

**लेपनः ।** पुं । सिह्लके । शिलारस । रा.नि.व.

**लेलिहः ।** पु । कृमौ । पुरीषजकृमिविशेषे । च.वि.७अ. ।

**लेलीनः (कः) ।** पुं । गन्धके । वै.निघ. ।

**लेहः (नम्) ।** पुं, क्ली । आस्वादने । চাটা । रा नि.व २० । हे.च. । भोजने । अवलेहे । प.प्र. १ख. । लेहपाकविधि —"लेहे यत्रास्ति यो भागो निर्दिष्टो द्रवकल्कयो । तत्रापि पादिक कल्क द्रवात् कार्यो विजानता ॥ गुडाद्द्रवा मधुद्रोणी

racemosa.) स्वनामख्यातवृक्षे । (লোধ গাছ, লোধ কাষ্ঠ । हिं लोध । तै तेल्ललोद्दुगचेट्टु । गुर्ज. लोदर । सु.सू.३७अ.लोध्रादिः । च.द.ज्व. चि.लोध्रादिः । "लोध्रोत्पलामृतापद्म ।" स द्विविधः वल्कसामान्यभेदात् । तत्र विशिष्टो वल्करोध्र इति । रा.नि.व.६ । अस्य गुणाः—रोध्रद्वयं कषायं शीतलं वातकफरक्तघ्नं चक्षुष्यं विषघ्नञ्च । "रोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत् । कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत् ।" भा.।

**लोध्रपुष्पः** । पुं । मधूकवृक्षे । মউল গাছ । वै.निघ. । [१भ,भा.व ।

**लोध्रपुष्पकः** । पुं । शालिधान्यविशेषे । भा.पू.

**लोध्रपुष्पिणी** । स्त्री । क्षुद्रधातक्याम् । ক্ষুদ্র ধাই ফুল । वै.निघ. ।

**लोध्रवलम्** । क्ली । तन्नामके चक्रपाणिदत्तस्य कृतौ । त्रि (स्त्री) । तत्कुलसम्भूते । च.द. ।

**लोध्रवृक्षः** । पुं । मधूकवृक्षे । रोध्रवृक्षे । वै. निघ. ।

**लोध्रादिः** । पुं । पित्तज्वरघ्नक्वाथे । च.द.पि. ज्व.चि । "लोध्रोत्पलामृतापद्मशारिवाणां समन्वितः । क्वाथः पित्तज्वरं हन्यात् ।"

**लोपाकः** । पुं । शृगालभेदे । स खाद्रलकमगदत्युच्यते । लोपाकदति लोके । খ্যাঁক্‌শিয়াল । सु. चि ८अ. । अयं विलेशयगुणः ।

**लोपाकि(शि)का** । स्त्री । धूर्तशृगालिकायाम् । খ্যাকশিয়ালী । भ.भा. । हारा. ।

**लोपाशकः** । पुं । शृगाले । খ্যাক্‌শিয়াল । हारा. ।

**लोभनम्** । क्ली । मांसे । वै.निघ. ।

**लोभ्यः** । पुं । हरिताले । वै.निघ. । त्रिश्वोदान्यभेदे, मुद्गे । मुग । हे.च. ।

**लोमम्** । क्ली । खाद्यूके । লেখ । जटा. ।

**लोम (न्)** । क्ली । केशे । रोमनि । (रें१७४) । चम. । तदुक्तं —"यस्तु मत्स्यानि लोमानि भक्ष्याणि भवन्ति हि ।" भा. । [नि व.१२ ।

**लोमकरणी** । स्त्री । मांसरोहिणीभेदे । रा

**लोमकर्कटी** । स्त्री । चर्मकीटायाम् । वै.निघ. ।

**लोमकर्णः** । पुं । शशके । খরগোস । हे.च. ।

**लोमकूपः** । पुं । त्वग्रन्ध्रे । "सन्ति यावन्ति रोमाणि तावन्तो लोमकूपकाः ।" भा. ।

**लोमघ्नम्** । क्ली । इन्द्रलुप्तरोगे । টাকপোকা । त्रि । लोमपातने । निदा. ।

**लोमदीपः** । पुं । शोणितजकृमिभेदे । रक्तजकृमि । च.वि.७अ. । [नि.व.११ ।

**लोमफलम्** । क्ली । भव्यफले । চালতা । रा.

**लोमविध्वंसः** । पुं । कृमौ । कृमि । वै.निघ. ।

**लोमविषः** । पुं । व्याघ्रादौ । हे.च. ।

**लोमशः** । पुं । मध्वालौ । মউ আলু । धातुकासीसे । "कासीसे तमालपत्रे वा ।" च.द. । मेषे । त्रिका. । कोकङ्नामविलेशयमृगे । रा.नि. व.१९ ।

**लोमशकर्णः** । पुं । शशके । শশক । सु.सू. ४६अ. । [कुड़ गाछ । रा.नि.व.७ ।

**लोमशकाण्डा** । स्त्री । कर्कटिकायाम् । কাঁ-

**लोमशच्छदः** । पुं । देवताड़वृक्षे । (দেয়াতাড়া । प सु. । पीतदेवदाल्याम् । त्रिका ।

**लोमशपत्रा (त्रिका)** । स्त्री । पीतदेवदाल्याम् । वै.निघ. । [णी । प.सु. ।

**लोमशपर्णिनी** । स्त्री । माषपर्ण्याम् । माषा-

**लोमशपुष्पकः** । पुं । शिरीषवृक्षे । रा.नि.व.९

**लोमशमार्जारः** । पुं । गन्धमार्जारे । गन्धगकुले । तद्गुणाः—कफवातघ्नः पथ्यः सुगन्धिः शौर्यकरः कण्डूकोठघ्नश्च । रा.नि.व.१९ ।

**लोमशा** । स्त्री । गन्धमांस्याम्, सुगन्धजटामांस्याम् । गन्धमांसी, सुगन्ध जटामांसी । रा.नि.व.१२ । वचायाम् । वच । काकोल्याम् । कौकृला । रा नि. व.२१ । मिश्यां । मउरी । च.सू.४अ. । काकजङ्घायाम् । शुकशिम्ब्याम् । महामेदायाम् । मे. । अजपुष्पायाम् । एर्वारौ । দাকুড় গাছ । रा.नि. व.४।७ । अतिबलायाम् । विश्वः । [दी । तन्नाम् ।

**लोमशातनम्** । त्रि । लोमनाशके हरिताला-

**लोमशी** । स्त्री । कर्कटीविशेषे । वै निघ. ।

**लोमहन्** । पुं । हरिताले । हे.च. ।

**लोमा** । स्त्री । वचायाम् । वै.निघ ।

**लोमादः** । पु । मलजक्रमिभेदे । च.वि ७च ।

**लोमालिका** । स्त्री। ग्रमालिकायां । आले ङा । थ्याक्शियाली । त्रिका. ।

**लोलजिह्वा** । स्त्री । महाबलायाम् । वै.निघ.।

**लोला** । स्त्री । जिह्वायां । त्रिका. ।

**लोलान्धः** । पु । अपस्माररोगे । रा नि व.२०।

**लोलिका** । स्त्री । क्षुमीविशेषे । पाडिहाम । चाङ्गेरी । आमरुल । लटा ।

**लोलिनी** । स्त्री । नीलवृक्षायाम् । (विन्दुष्ठते) ।

**लोलिम्बराज** । पु । वैद्यजीवनग्रन्थकारे ।

**लोष्टम्** । क्ली पुं । गुडे । लोहे । ढेला । अम ।

लोहरजसि । लोह चूर, मधुर । रा.नि.व.१४ ।

**लोष्टराज.** । पुं । रौप्ये । वै.निघ. ।

**लोहम्** । क्ली, पु । अगुरुणि । कालागुरुणि । रा.नि.व.१२ । च.सू.२७. । चि यो यक्ष्म चि. । "लोहामलताभया ।" भा पू.१भ चित्तभ्रमज्व चि. । "लोहलामज्वलैलाभि ।" कालधातौ । कांसा । रा नि.व.१२ । रक्तधातौ । ताम्र । रा.नि व.१८ । स्वर्णे । सुवर्णलोहे । काललोहे । ताम्रे । पित्तले । रौप्ये । सीसके । वङ्गे । चर्म्मे । मे. ।

**लोहकण्टकः** । पुं । मदनद्रुमे । श च. ।

**लोहकर्षः (क.)** । पु । लोहचुम्बके । चुम्बक पाथर । भा. ।

**लोहकान्तम्** । क्ली । कान्तलोहे । देखो र. प सु. । लोहचुम्बके । वै.निघ. ।

**लोहकिट्टम्** । क्ली । लोहमले । मण्डूर । रा. नि.व.१३ । प्रयोगे तद पुराण ग्राह्यम् । चि यो. ग्रहण्यधिसुखचूर्णे ।

**लोहकीटः** पुं । मण्डूरे । वै निघ ।

**लोहचूर्णम्** । क्ली । लोहमले । मण्डूर । रा. नि व १३ ।

**लोहजम्** । क्ली । रक्तलोहे । वर्त्तलोहे । लो हमले । मण्डूर । रा.नि व.१३ । कांस्ये । र च. ।

**लोहद्रावी (दन)** । पु । टङ्कणक्षारे । सोहा गा । रा नि.व.६ । अम्लवेतसे । प मु. ।

**लोहनिर्यासः** । पु । लोहकिट्टे । मण्डूर ।

**लोहपञ्चकम्** । क्ली । स्वर्णरौप्यताम्रवङ्गशीशे-षु, स्वर्णरौप्यताम्रपूकान्तलोहेषु वा ।

**लोहपृष्ठः** । पु । कङ्कपक्षिणि । कांक पाखी । अम. । प मु.२०प ।

**लोहबालः** । पु । शालिधान्यविशेषे । लोह-ताम्र धान । प.मु.२०प. । [निघ ।

**लोहमलम्** । क्ली । लोहकिट्टे । मण्डूर । वै.

**लोहमारः (क)** । पु। शालिपर्णी । प.मु। त्रिका । लोहमर्द्दकद्रव्ये । लोहमर्द्दकद्रव्यवर्गो य था—"त्रिफला त्रिवृता दन्ती कटुकी ताम्रमुत्रि का । हस्तिकर्णाकवीरवपत्रकचित्रका । महावेर त्रिकत्री च भक्षभल्लातकौषधम् । दाडिमस्य च पत्राणि शतपुष्पी पुनर्नवा । कुठारकामकी कन्द लक्ष्मी भेकस पर्णिका । हस्तिकर्णपलाशय कुलिश कौमराजक । माष ग्रहितकर्णय गौमिला सौ ख्मारक । गिरिमालनक ग्रीस त्रिफलादियं गण ।" र.सा.स. ।

**लोहरण्डक.** । पु । मदनद्रुमे । वै निघ. ।

**लोहलः** । त्रि । अस्फुटभाषिणि । अम. ।

**लोहवरम्** । क्ली । स्वर्णे । त्रिका । [वै.निघ.।

**लोहविट् (ठा)** । पु । लोहमले । मण्डूर ।

**लोहश्लेषणः** । पु । टङ्कणक्षारे । सोहागा । र्.च. । [रा.नि.व १३ ।

**लोहसङ्करम्** । क्ली । वर्त्तलोहे, रक्तलोहे ।

**लोहसारः** । पु । कान्तलोहे । वै.निघ. ।

**लोहसिंहानम् (निका)** । क्ली, स्त्री । लोहकिट्टे । भा. ।

**लोहहृत्** । पु । टङ्कणक्षारे । वै निघ ।

**लोहास्यम्** । क्ली । अगुरुकाष्ठे । र भा. ।

**लोहि** । क्ली । टङ्कणक्षारे । श्वेत सोहागा । रा.नि.व ६ । [ड्रि । त्रिका ।

**लोहिका** । स्त्री । लौहपात्रविशेषे । लोह-

**लोहितम्** । क्ली । रक्तचन्दने । रा.नि व.१२ । हि.नी बटकभरतैलि । पत्राङ्गचन्दने । बकम का ष्ठ । हरिद्रमे । हरिचन्दन । रा.नि.व.१२ । कु

कुमि मे स्वर्णगैरिके क्ष्यागुरुणि । वै निघ । पु । माणिक्ये । पद्मराग । भा । रक्तपिण्डालौ । लाल आलु । रा नि व.७ । रक्तेक्षौ । रक्तशालौ । रा नि व १४।१६ । पल ण्डौ । प.मु । रोहितम त्स्ये । मृगविशेषे । श र । मयूरे श ष । सर्पे । धरणि । नदभेदे । मे । रक्तलशुने । नेत्ररोगभे दे । चि । रक्तवर्णे ।

**लोहितकम** । क्ली । पित्तलधातौ । पितल । रा नि व १२ । पु । माणिक्यभेदे । पद्मराग । हे च । शालिधान्यभेदे । सु सू.४६च ।

**लोहितचन्दनम्** । क्ली । रक्तचन्दने । कुङ्कुमे । धम ।

**लोहितपुष्पक.** । पु । दाडिमवृक्षे । भा ।

**लोहितपुष्पिका (ष्पी)** । स्त्री । चक्रका ख्यौपुष्पवृक्षे । वम् उटकटारा । रा नि व १० ।

**लोहितमृत्तिका** । स्त्री । गैरिकमृत्तिकायाम् । गेरिमाटी । रक्तमृत्तिकायां । लालमाटी । प सु ।

**लोहितयष्टिका** । स्त्री । मञ्जिष्ठायाम् । सि या च द ज्व.चि षटकम्बरतैले । "लाक्षानिशालो हितयष्टिकाभि ।"

**लोहितलता** । स्त्री । मञ्जिष्ठायाम् । संग्रह ।

**लोहितशालि** । पु । रक्तशालौ । मायधानि धान वाडा धान । रा नि व १६ ।

**लोहितशिग्रु** । पु । रक्तशिग्रौ । लाल स जिना । वै निघ. ।

**लोहितक्षया** । स्त्री । योनिव्यापद्विशेषे । ल क्षण यथा "वातपित्ताभ्यां क्षीयते रक्त । स दाहकार्श्यवैवर्ण्यं यस्यां सा लोहितक्षया ।" वा.उ. ३३च ।

**लोहिता** । स्त्री । वराहक्रान्तायाम् । वराक्रान्ता । श च. । रक्तपुनर्नवायाम् । रा.नि व ५ । सिम्बीभेदे । मञ्जिष्ठायाम् । लाक्षायाम् । लज्जालुकायां । वै निघ । शरीरे तन्नामिका द्वितीया त्वक् । "या शौहे वोद्व्यभागमभाषा तिलकालका यधिष्ठाना ।" सु शा ४च ।

**लोहिताक्ष.** । पु । कम्पिल्लके । कमलागुंडि । रा.नि.व.१२ ।

**लोहितानन.** । पु । नकुले । नेउल । रा नि व १८ । [विशये । सु कल्प ८च ।

**लोहिताभ** । पु । रक्ताभमहाविषवृश्चिक

**लोहिताय. (यसम्)** । क्ली । ताम्रे । तामा । त्रिका । व्याक. ।

**लोहितार्मं (न्)** । क्ली । शुक्लभागगतनेत्ररो गे । लक्षण —'यन्मांसं प्रचयमुपैति शुक्लभागे पद्माभ तदुपदिशन्ति लोहितार्मं ।" सु उ ४च ।

**लोहितालु:** । पु । रक्तपिण्डालौ । लाल आलु । कोङ्कणे प्रसिद्धे फोण्डालौ । रा नि व ७ ।

**लोहिताक्षम्** । क्ली । तन्नामकसक्थिमर्म भेदे । "ऊर्वमधोवङ्क्षणसन्धे रूरुमूल ।" सु शा ६ च । पु । दर्वीकरजातीयसर्पे । सु कल्प ४च । कोकिले । श.च. । [ख्या । सु चि ११च ।

**लोहितिका** । स्त्री । मञ्जिष्ठायां । रामतरु

**लोहितेक्षु.** । पु । रक्तेक्षौ । काजलि ईक्षु । रा नि व १४ ।

**लोहित्याज.** । पु । तृणधान्यभेदे । लोहित श्याम । गुणा —श्यामाकवत् । च सू २७च ।

**लोहिनी** । स्त्री । श्वेतकिण्विकायाम् । वै निघ ।

**लोहोच्छिष्टम्** । क्ली । लौहकिट्टे । वै निघ. ।

**लोहोत्तमम्** । क्ली । स्वर्णे । हे च. ।

**लोहोत्थम्** । क्ली । मण्डूरे । वै निघ ।

**लोह** । पु,क्ली । (Ferrum) Iron. स्वनाम-ख्यातधातौ । लोहा । हिं लोंधोया । मं कुनुम । लोहस्य गुणा —"लौहं तिक्त सर शीत मधुर तुवरं गुरु । रूक्ष वयस्य चक्षुष्य लेखनं वातल ज येत् । कफं पित्त गर शूलं शोथार्शं प्लीहपाण्डुता. । मेदोमेहकृमीन् कुष्ठं तत्किट्ट तद्वदेव हि ।'इति । लोहमष्टधा क्रौञ्च(काञ्चि)कालिङ्गकभिभद्रवज्रपाण्डिनिरङ्गकान्तभेदेन गुणा —"सामान्याद्द्विगुण क्रौञ्च कालिङ्गोऽष्टगुणस्तत । कलि शतगुण भद्र भद्राद्वज्र सहस्रधा । वज्रात् शतगुण पाण्डि निरङ्ग दशभिगुणे । तत. कोटिसहस्रैर्वा कान्तलौह म-हागुणम् । रस चि.६च । दोषा —'गुरुता हृद्गतानकृद कष्टल दाहकारिता । चलदोष सुदुनम्णी दोषा शुद्धायसस्य तु । इति । अर्जु

कमलौहदोषाः—"षण्ढत्वकुष्ठामयमृत्युदं भवेत् हृद्रोगशूली कुरुतेऽश्मरीञ्च। नानारुजानाञ्च तथा प्रकोपं करोति हृल्लासमशुद्धलौहम्॥" तत्सेवने निषेधः। "कुष्माण्डं तिलतैलञ्च माषान्नं राजिकान्तथा। मद्यमम्लरसञ्चापि त्यजेल्लौहस्य सेवकः॥" लौहशोधनादिपरिभाषा—"शुद्ध्यर्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा। चतुर्गुणं फलात्तोयमष्टभागावशेषितम्। एष एव विधिर्नित्यं चालनेऽपि प्रशस्यते। वधार्थे त्रिफला ग्राह्या लौहान्नित्यं चतुर्गुणा। तोयमष्टगुणन्तच्च चतुर्भागावशेषितम्। भानुपाकार्थमिच्छन्ति त्रिफलामयसा समाम्॥" प.प्र.। लौहमारणम्—"शुद्ध लौहभवं चूर्णं पातालगरुडीरसैः। मर्दयित्वा पुटेदग्नौ दद्यादेवं पुटत्रयम्। पुटत्रयं कुमार्य्याश्च कुठारच्छिन्नकारसैः। पुटषट्कं ततो दद्यादेवं लौहमृतिर्भवेत्॥" अन्यच्च—"क्षिपेच्च द्वादशांशेन दरदं लौहचूर्णतः। मर्द्दयेत् कन्यकाद्रावैर्यामयुग्मं ततः पुटेत्। एवं सप्तपुटैर्मृत्यु लौहचूर्णमवाप्नुयात्॥" इत्यादि। 'लौहवत् सम्भवा तप्ता लौहपची तला पिना। गोमूत्रे शुद्धिमायाति निषिक्ता स्वविधानतः॥" शा.कौ.। मृतलौहलक्षणम्—"लौहस्य समाकारः स्पर्शग्राह्यः प्रतीयते। यदा लौहस्तदा ज्ञेयः सुमृतो वैद्यसत्तमैः॥" सग्रह.। लौहोत्पत्तिः —'पुरा लोमिलदैत्यानां निहतानां सुरैर्युधि। उत्पन्नानि शरीरेभ्यो लौहानि विविधानि च॥" भा.पू.१भ.धा.व.। लौहसंस्कारः। स चयोदशविधः। यथा,—घर्षणम् उद्वर्तनम् भस्मभावनम् आतपशोषः निषेकः मारणं दलनं चालनं सूर्य्यपाकः स्थालीपाकः चूर्णनं पुटपाकः पाकनिष्पत्तिश्च। "स्यात् षोडशगुणं तोयमष्टभागावशेषितम्। अन्यानि यानि वस्तूनि योक्तव्यानि पुटादिषु। तानि लौहसमान्याहुर्जलं प्रागेव कीर्त्तितम्। लभ्यते स्वरसो येषां तेषां क्वाथोऽत्र नेष्यते॥ त्रिफलाव्यतिरेकेण मतमेतत् पतञ्जलेः। एष एव विधिर्नित्यं चालनेऽपि प्रशस्यते॥ लौहवत् त्रिफला ग्राह्या त्रिफलावत् पयो मतम्। प्राक्कीर्त्तितं जलञ्चात्र मृदुमध्यादिभेदतः॥ मृदुमध्यकठोरत्वात् क्वाथ्यद्रव्यं त्रिधा मतम्। क्वाथ्यद्रव्यानुसारेण देयं स्यात्तु जलं त्रिधा॥" पतञ्जलिराह सामान्यपरिभाषां लौहमारणार्थम्। "द्विगुणा त्रिफला लौहात् फलात् षोडशिकं जलम्। अष्टभागावशिष्टन्तु मारणे जलमिष्यते॥ समा च त्रिफला ग्राह्या जलञ्चाष्टगुणं तथा। वधार्थं स्थापयेत्तोयं तस्मादं वस्त्रशोधितम्॥ वधार्थेन समं ग्राह्यं पाकार्थञ्च समं फलम्। अष्टभागावशिष्टञ्च पाकार्थं जलमिष्यते॥ एवं जलं फलं प्रोक्तं यथायोगेन योजयेत्॥" अथ लौहपाकलक्षणमाह। तदुक्तं पतञ्जलिना। "तावल्लौहं पचेद्वैद्यो यावत्स्नेहो गालितम्। समुद्रं जायते यावत् न निःसरति स्पन्दिभिः॥" अन्यच्च—"अङ्गुलिभ्यां दृढं घृष्टं यदा चूर्णत्वमागतम्। तदा सिद्धं विजानीयाल्लौहं लौहविदां वरः॥ अञ्जनाभं घनं स्निग्धं मृणामूलमलेपनम्। भक्तिमन्मर्भास चिरं सम्यक्पक्वस्य लक्षणम्॥ मन्दमाहुरथो लौहमलम्भाखिललक्षणम्। अतिपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम्॥" अमोघतन्त्रे चोक्तं। "पाकास्तु त्रिविधाः प्रोक्ता मृदुमध्यमतीक्ष्णकाः। त्रैविध्यात् सर्व्वधातूनां पित्तानिलकफात्मनाम्॥ दर्व्वीमाश्लिष्यते यत्तु स्वैरं स्खलति वा नवा मृदुपाकं विजानीयात् पित्ते तल्लौहं योजयेत्॥ सिकतापुञ्जोपमं यत्तु सुपिकेष समन्वितम्। तदयः खरपाकं स्यात् श्लेष्मण्येव प्रकीर्त्तितः॥ एकैकगुणयोगित्वात् न तदिच्छन्ति तद्विदः। सर्व्वप्रकृतिसेव्यत्वान्मध्यमं बहु पूजितम्। गुडादिः प्रविशेद्यत्र तत्र पाकोऽस्य सुदृढ़ा॥" कान्तलौहे। तीक्ष्णलौहे। रा.नि.व. १३।२१। मण्डूरे। कांस्ये। अगुरुणि। रा.नि.व. १२। [व.१३।

**लौहकान्तकम्**। क्ली। कान्तलौहे। रा.नि.

**लौहकिट्टम्**। क्ली। मण्डूरे। प.मु.।

**लौहजम्**। क्ली। वर्त्तलौहे। विमलौ। रा.नि. व.१२। मण्डूरे। र.मा.।

**लौहदाहः**। पुं। अश्वस्य वायुप्रकोपादौ दग्धलौहशलाकया दाहकरणे। ज.द.१४अ.।

**लौहपत्री**। स्त्री। लौहघटकायां। (लोहार चटी)। शा.कौ.लौहमारणे।

**लौहभाण्डः**। पुं। अश्मभाण्डे। हामानदिस्ता। श.च.। क्ली। लौहनिर्म्मितभाण्डे।

**लौहभूः**। स्त्री। लौहपात्रविशेषे। श.च.।

**लौहमेकीबीजम्**। क्ली। रसमारणौषधभेदे। रस वि.१अ.।

**लोहमलम्** । क्ली । लोहकिट्टे । मण्डूर । रा. नि व १३ । सुश्रुत् १८८,६४।दि ।

**लोहविशुद्धि** । पु । टङ्कणक्षारे । सोहागा । रसास टङ्कणक्षारी ।

## व

**वंशः** । पु । (Bambusa arundinacea) स्वनामख्यातपत्रशाकवृक्षे । बाँश । हि वाँस । म वेलू । तै वेदुरु, वेन्नेमुक्क वेनुर्मोधि वेनु । बम् माल्हगय । ता. मनुगिल । स द्विधा सामान्यो रन्ध्रवंशश्च । गुणाः—उभावेव कषायौ ईषत्तिक्तौ शीतलौ मूत्रकृच्छ्रप्रमेहार्शोदाहपित्तास्रघ्नौ च । रन्ध्रवंशस्तु विशेषेण दीपनो जीर्णघ्न रुच्य पाचन हृद्य शूलघ्नश्च । रा नि व ७ । तत्करीरगुणाः—"करीरो वंशजो रुच्य वातपित्तकरः कटु । स कषायो विदाही च श्लेष्मघ्न पाकत कटुः ॥" राज १५ । सर्ज्जवृक्षे । शाल गाछ । रा नि व ८। इक्षौ । रा नि व १४ । पृष्ठास्थि । पिठेर दाँड़ा । त्रिका ।

**वंशक** । पु । मत्स्यविशेषे । शाकशोड़ा आथ । गुणाः—शीतल, मधुर स्निग्ध पुष्टिकार श्लेष्मल धारक अविदाही गुरु रुच्य बलवर्धन । सुश्रु ४५ष । क्षुद्रमत्स्ये । बाँशपाता माछ । क्ली । अगुरुकाष्ठे । हारा ।

**वंशकज्ञम्** क्ली । कृष्णागुरुकाष्ठे । वै निघ ।

**वंशकफम** । क्ली । शाल्मलीतूलके, वंशतूले वा । यद्वशादेव वायुना नीत नभसि उड्डीयते । हारा. ।

**वंशकरीरः** । पु । वंशाङ्कुरे । बाँशेर कोंड़ । गुणाः—"तत्करीर कटु पाके रसे रुक्षो गुरु सर । कषाय कफकृत् स्वादुर्विदाही वात पित्तल ॥" भा. ।

**वंशकर्पूर (रोचना)** । पुं स्त्री । वंशरोचनायाम् । वंशलोचन । रा नि व ६ ।

**वंशकार.** । पु । शङ्खके । वै निघ ।

**वंशकुटजा** । स्त्री । श्वेतकुटजे । वै.निघ. ।

**वंशज.** । पु, क्ली । वेणुयवे । बाँशेर चाउल । रा.नि.व १६ । अगुरुकाष्ठे । स्त्री (जा) । वंशरोचनायाम् । वंशलोचन् । श र. । "वंशजा बृंहणी वृष्या बल्या स्वाद्वी च शीतला । तृष्णाकासक्षय-श्वासज्वरपित्तास्रकामला । हरेत्कुष्ठ व्रणम्पाण्डु कषाया वातकृच्छ्रजित् ॥" भा. । [रा नि व ६ ।

**वंशतण्डुल.** । पु । वेणुयवे । बाँशेर चाउल ।

**वंशतैलम्** । क्ली । अक्षिविकारोपयोगि तैलम् । "वंशतैलमक्षिघ्न मूत्रे वंशफले घृतम् ।" रस र. ।

**वंशदला** । स्त्री । वंशपत्रतृणे । बाँशपाताघास । रा नि व ८ ।

**वंशदूर्वा** । स्त्री । कटुकायाम् । कटकी । शत पर्व्वायाम् । दूर्व्वाविशेष । किम्बुकायाम् । रा. नि व २२ ।

**वंशधान्यम** । क्ली । वेणुयवे । बाँशेर चाउल । तच्च देशभेदाद्बहुविध । रा नि व १६ ।

**वंशनेत्रम्** । क्ली । इक्षुमूले । आखेर चक्षु । रा नि व १४ ।

**वंशपत्र:** । पु । नले । नल । रा नि व ७ ।

**वंशपत्रक.** । पु । श्वेतेक्षौ । रा नि व १४ । वंशकमत्स्ये । बाँशपाता माछ । श मा । देशज ली । वै निघ. । क्ली । वंशपत्रहरिताले । द्रे च. ।

**वंशपत्रिका (त्री)** । स्त्री । वेणुदले । बाँशेर पाता । सा क्ली.सर्व्वज्वरहरलोहे । वंशपत्राकार तृणे । बाँशपात घास । सं वेणुपत्री । कं बिदिरधिनि । गुणाः—मधुरा शीतला पित्तघ्नी रक्तदोषहरी रुच्या पयःदुग्धवर्द्धिनी च । रा नि व ८ ।

**वंशपीत:** । पु । कणगुग्गुली । रा नि व.१२ ।

**वंशपुष्पा** । स्त्री । सहदेवायां । रा नि व.४ ।

**वंशपूरकम्**
**वंशमूलम्** } क्ली । इक्षुमूले । रा.नि व.१४ ।

**वंशबीज.** । पु । वेणुयवे । बाँशेर चाउल । रा नि व.१६ । [नि व १६ ।

**वंशयव.** । पु । वेणुयवे । बाँशेर चाउल । रा.

**वंशरोचना** । स्त्री । The manna of the

bambu. वंशपर्वमध्यजातनीलाभधवलपदार्थे। বংশলোচন। त तवषीरि। गुणा.—रुचा कषाया मधुरा हिमा श्वासकासघ्नी रक्तशुद्धिकरी तापघ्नी पित्तोद्रेकशमनी च। रा.नि.व.६। [निघ.।

**वंशवर्द्धिनी।** स्त्री। वंशलोचनायाम्। वै

**वंशविदलः।** पुं। वंशकृतसन्दंशिकायां। বাঁশের চিমটা। सु.चि.२७अ.।

**वंशव्यजनवायुः।** पु। वंशकृततालवृन्तवायौ। বাঁশের পাখার বাতাস। गुणा.—"वंशव्यजनजो वात रुक्षो वातपित्तद।" राज.२५प.।

**वंशशर्करा।** स्त्री। वंशोद्भवशर्करायां। শাঁস শাঁড়ার চিনি। गुणा.—चक्षुष्या बल्या सुमधुरा रुचा च। रा.नि.व.१४। वंशरोचनायाम्। रा.नि.व.६।

**वंशशलाका।** स्त्री। वीरणमूले। বেণার মূল। वंशनिर्मितशलाकायां। हे.च.।

**वंशक्षीरी।** स्त्री। वंशरोचनायां। रा.नि.व.६।

**वंशाङ्कुरः।** पुं। वंशकरीरे। বাঁশের কোঁড়। रा.नि.व.७। [वै.निघ.।

**वंशाग्रम्।** क्ली। वंशाङ्कुरे। বাঁশের কোড়।

**वंशान्तरः।** पुं। नदी। নল, খাগড়া। रा.नि.व.८। [द्।सु.चि.१८अ.।

**वंशावलेखः।** पुं। वंशलचि। বাঁশের ছ

**वंशास्थि।** क्ली। मर्कटास्थनि। वै.निघ.।

**वंशाह्वः।** पुं। वेणुयवे। रा.नि.व.१६।

**वंशिकः।** पुं,क्ली। कृष्णेक्षौ। কাজলি ইক্ষু। वै.निघ.। अगुरुकाष्ठे। अम.। स्त्री (का)। पिप्पल्याम्। वै.निघ.।

**वंशी।** स्त्री। वंशलोचनायां। वै.निघ २भ.सं.व कुची.चि.जातीफलादिचूर्णे। वंशे। कर्षचतुष्टये। ८तो.। रा.नि.व.२१। [पि चि,वासाखण्डे।

**वंशोद्भवा।** स्त्री। वंशरोचनायाम्। वै.निघ.र.

**वंशकम्।** क्ली। वंशलोचने। वै निघ.२भ चय. चि.सूर्यप्रभावल्याम्।

**वकः।** पु। वकसिद्धवे। বকফুলের গাছ। हिं बासना। मं बगला। तैं बकिचि। ता. अर्म-

ति। अवजातीयजलचरपक्षिविशेषे। বক পাখী। तस्य मांसं भक्षणात् गुरु। रा.नि.व.१७। वातघ्नं स्निग्ध सृष्टमलं वृष्यं रक्तपित्तहरं हिमच। राज. १५प.। See बकः। —

**वकचिञ्चिका।** स्त्री। मत्स्यविशेषे। हारा.।

**वकपुष्पः (ष्पा,ष्पी)।** पु,स्त्री। अगस्तिवृक्षे। বাসনা ফুলের গাছ। श.र.। क्ली। वकपुष्पे।

**वकाची।** स्त्री। वकचिञ्चिकामत्स्ये। हारा.।

**वकु(कू)लः।** पुं। (Memusops Elengi.) स्वनामख्यातवृक्षे। বকুল গাছ। हिं बकुल, मौलसरी। तैं पोगडचेट्टु। उत्. बउड़कुडि। बम्. बकुली। दा. घोलसरी। ता मोगदम्। गुणा. —शीतलः हृद्यः विषदोषहर, मधुरः कषाय, मदाढ्यः कफहर। हृद्यं चोराख्य सुरभि शीतल मधुरं स्निग्धकषाय मलसवाहि च। इति तत्कप पुष्पगुणा.। रा.नि.व.१०। "बकुलस्तुवरोऽनुष्ण: कटुप्राकरसो गुरु.। कफपित्तविषश्वित्रक्रिमिदन्तगदापह.॥" भा.। "मधुरञ्च कषायञ्च स्निग्धं संग्राहि वाकुलं। स्थिरीकरञ्च दन्तानां विशदं फलमुच्यते॥" सु.सू.४६अ.।

**वकुलपुष्पम्।** क्ली। वकुलकुसुमे। अम.।

**वकुला।** स्त्री। कटुकायां। कट्की। रा.नि.व.६।

**वकुली।** स्त्री। काकोल्यां। কাঁকলা। श.च.।

**वकेरुका।** स्त्री। बलाकायां। मे.।

**वकोटः।** पुं। वके। त्रिका.।

**वक्कसः।** पु। मद्यविशेषे। अयं लगल एव। गुणा:—"हृद्य, प्रवाहिकाटोपदुर्नामानिलशोफ हृत्। वक्कसो हृतसारत्वात् विष्टम्भी वातकोपन। दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरु:॥" सु.सू.४५अ.मद्यव.।

**वक्र(क)शालिः।** पुं। स्वनामख्यातनव्यदेशसम्भूतशालिधान्ये। শালিধান্যবিশেষ, যাহা নব্যদেশে জন্মে। मं धकीधान। गुणा:—लघुः सुखपाककरश्च। रा.नि.व.१६।

**वक्रम्।** क्ली। शुण्ठे। रा.नि.व.१८। तगरमूले। वै निघ.। तगरपुष्पे। টগর মূল। रा.नि.व.३०।

**वक्रकटुता।** स्त्री। सुवक्र कटुतायाम्। हे. ग्रहेरस।आ.नि.।

-कस्य च । तृतीये त्रिफलाचूर्णं चतुर्थेऽश्वत्थचिञ्च-योः । एवं यामद्वयं मर्द्यं सुतप्तञ्च हठाग्निना । अ-नेन जायते भस्म वङ्गस्य नात्र संशयः ॥" शा.कौ. । अमृतीकरणं सीसशब्दे द्रष्टव्यम् । पुं । कार्पासे । वार्त्ताकौ । मे. ।

**वङ्गजम्** । क्ली । सिन्दूरे । र मा. । [श.र. ।

**वङ्गनः** । पुं । वार्त्ताकुवृक्षे । বেগুন গাছ ।

**वङ्गमलः** । पुं, क्ली । शीषधातौ । वै.निघ ।

**वङ्गशुल्वजम्** । क्ली । कांस्यधातौ । কাঁসা । हे च. ।

**वङ्गसंह्वयम्** । क्ली । यशदे । दस्ता । वै.निघ ।

**वङ्गसेनः (कः)** । पुं । वकवृक्षे । বকফুলের গাছ । त्रिका. । रक्तवकवृक्षे । र.मा. । तत्पुष्प गुणाः—"वासकस्य च पुष्पाणि वङ्गसेनस्य चैव हि । कटुपाकानि तिक्तानि कासक्षयकराणि च ॥" राज.१प. । चिकित्सासारसंग्रहकारे ।

**वङ्गारिः** । पुं । हरिताले । हे च. ।

**वङ्गावलेहः** । पुं । मेहे अवलेहः । "वङ्गभस्म द्विवल्लञ्च लेहयेन्मधुना सह । ततो गुडसमं गव्यं भक्षयेत् कर्षमात्रकम् ...... ॥" रस.चि. ।

**वङ्गेश्वरः** । पुं । मेहघ्नरसविशेषे । अत्र रससि-न्दूरं वङ्गभस्मसमभागम् । अन्यः यथा—"रसेन व-ङ्गं द्विगुणं प्रगृह्य विद्राव्य निःक्षिप्य समुद्गजे तत् । विमर्दयेदम्लजलेन गोलं कृत्वा सुसंवेष्ट्य पुटेन ती-व्रम् । ततः क्षिपेत् जलपानमध्ये नीरन्तु सन्त्यज्य गृहाण सूतम् ॥" मात्रा वल्लमिता । अत्र लवणस्य १० भागाः । रस.चि. । [व.१८ ।

**वङ्क्षणः** । पुं । सक्थिसन्धौ । কুঁচকি । रा.नि.

**वङ्क्षणानाहः** । पुं । वङ्क्षणयोराकर्षणपूर्वपीडा-याम् । भा.म.३भ. ।

**वचः** । पुं । कीरपक्षिणि । টিয়া । मे. ।

**वचण्डा (ण्डी)** । स्त्री । शारिकायाम् । শা-লিক পাখী । त्रिका. । वर्णौ । वाति । श.र. ।

**वचनम्** । क्ली । शुण्ठ्याम् । শুঁট । श.च. ।

**वचरः** । पुं । कुक्कुटे । কুঁকড়া । मे. ।

**वचा** । स्त्री । (Acorus calamus,) The sweet flag. [illegible] । दे. । हिं. वच, घोरवच । ते. वडज, नल्लवस । बम्. वेखंडे । ता. वशम्बु । वा.सू.१५अ.शोधनव.,वत्सकादिव. । सु.सू.३८अ.मुस्तादिः । "भाकणवचा ।" गुणा:— तीक्ष्णा कटुः उष्णा कफामग्रन्थिशोफघ्नी वातज्वरातिसारघ्नी वान्तिकृत् उन्मादभूतघ्नी च । रा.नि. व.६ । "अन्नुपापि सरागापि यद्यपि परा भ-वेत् । अन्तःप्रविलसमाचेन वचा कर्म्मणि गर्हि-ता ॥" गोमूत्रे पञ्चपल्लवोदके पक्का पश्चात् सुगन्धजलेन स्वेदनात् वचा हरिद्रा च शुद्धा भवति । भैष. । लाङ्गलिकायां । विषलाङ्गलिश्च । वै.निघ ।

**वचादिवर्गः** । पुं । वचामुस्तदेवदारुशुण्ठ्यति-विषासु । "वचाजलददेवाह्ननागरातिविषाभया ।" गुणा —आमातीसारघ्न. मेदःकफवातस्तन्यदोषघ्न-श्च । वा.सू.१५अ.वचादिव. ।

**वचाद्यघृतम्** । क्ली । गण्डमालाद्यधिकारे घृ-तम् । पाठः —"वचा शटी हरिद्रे द्वे दार्वीन्द्रयव-शुक्रकम् । पथ्या चातिविषा शुण्ठी सर्व्वं द्रम्मद्वयं पृथक् । चतुर्द्रोणेऽम्भसः पक्त्वा पादशेषे विपाचये-त् । सर्पिःप्रस्थपलोन्मानैः क्वाथद्रवैः सुपेषितैः । प्रक्षिप्य त्रिगुणं चोर्द्ध्वं गोमयचूर्णान् पचानि पट्··· ··· ॥" रस र. ।

**वर्चोग्रहम् (ग्रहः)** । क्ली,पुं । स्वयोन्द्रिये । काण । वै.निघ. । रो.नि.व.१८ ।

**वज्रम्** । क्ली । महारत्नान्यतमे रत्ने । হীরে । तच्च श्वेतरक्तपीतकृष्णभेदेन चतुर्धा चतुर्जातिकञ्च । तस्य पुंस्त्रीनपुंसकत्वमप्यस्ति । तत्र पुरुषः इन्द्राक-फलसम्पूर्णं रेखाबिन्दुशून्यं षट्कोणञ्च । रेखाबिन्दु-मत् षट्कोणञ्च स्त्रीजातिकम् । तथा त्रिकोणं दीर्घं पत्तलञ्च नपुंसकमिति । तत्र पुंवज्रं देह-वेधकं रसबन्धकञ्च, स्त्रीवज्रं देहसिद्ध्यर्थं, नपुंसकं कामघ्नं च ज्ञेयम् । त्रिषु रसायने अत्र रोगशमने वैश्यो वादि शूद्रो वयस्तम्भने योज्यः । तथा स्त्री स्त्रियै पुरुषः पुरुषे नपुंसको नपुंसके च योज्यम् । रस.चि.७म । गुणाः—षड्रसोपेतं सर्व्वरोगघ्नं सर्व्वपापहरं सुखदं शरीरदार्ढ्यकरं रसायनञ्च । रा.नि.व.१३ । अशुद्धस्य दोषाः—"पार्श्वपीडां पाण्डुरोगं कुष्ठं दाहमरतिं । रोगानेक गु-रुत्वञ्च धत्ते वज्रमशोधितम् ॥" तच्छोधनम्— "व्याघ्रीकन्दगतं वज्रं दोलायन्त्रे विपाचितम् । स-प्ताहं कोद्रवक्वाथे कौलत्थे विमलं भवेत् ॥" र.

भा.सं. । See माणिक्यम् । क्लीवेरे । वाला । रा. नि.व.१० । काञ्जिके । काँजि । धरणिः । लौह विशेषे । कान्तलोह । पुष्पविशेषे । वज्रपुष्प । श.र. । अस्थिसन्धौ । भावप्र । मे. । विडङ्गे । च भ्रष्टार्ती । भा. । भैष.महालक्ष्मीविलासे ।

**वज्रः** । पुं । कोकिलाक्षवृक्षे । कुलेखाड़ा । रा. नि.व.४ । सितदर्भे । श्वेत कुश । रा.नि.व.८ । श्वालवृक्षे । स्नुहीवृक्षे । मनसा गाछ । भा. ।

**वज्रकम्** । क्ली । वज्रक्षारे । रा.नि.व.६ ।

**वज्रकण्टकः** । पुं । स्नुहीवृक्षे । मनसा गाछ । रा.नि.व ८ । कोकिलाक्षवृक्षे । कुलेखाड़ा गाछ । रा.नि.व.४ ।

**वज्रकन्दः** । पुं । शर्करकन्दालुके । शकरकन्द आलू । र.मा. । तालवृक्षस्य शिरोमज्जायां । ताल गाछेर माथी । वै.निघ. । (कः) पुं, क्ली । कटुशूरणे । वनशूरणे । गुणाः—कफघ्न. पित्तरक्तकर श्च । वै.निघ. ।

**वज्रक्षारः** । पुं,क्ली । वज्रक्षारे । वै.निघ. ।

**वज्रकाञ्जिकम्** । क्ली । प्रसूतिचिकित्साधिकारे औषधम् । पाठ —"पिप्पलीपिप्पलीमूलं चव्यं शुण्ठी यमानिका । जीरके द्वे हरिद्रे द्वे विड सौवर्चलं तथा । एतैरेवौषधैः पिष्टैरारणालं विपाचयेत् ..... । क्षीरपाकविधानेन काञ्जिकस्यापि साधनम् ॥" काञ्जिक ८ प. पानीयं ३२ प. पिप्पल्यादीनां प्रत्येकं ४ मा. काञ्जिकमेव' काथः । रस.र. । [निघ. ।

**वज्रकारकः** । पुं । नखीनामगन्धद्रव्ये । वै.

**वज्रगोपः** । पु । इन्द्रगोपकीटे । वै.निघ ।

**वज्रचर्मा** (र्म) । पु । गण्डके । गण्डार । रा. नि.व.१९ ।

**वज्रतुण्डः** । पुं । गरुडे । वै.निघ. । मशके । रा.नि.व.१९ ।

**वज्रदन्तः** । पुं । शूकरे । त्रिका. । मूषिके । श.मा. । अस्थिसंहारे । हाड़जोड़ा । र.मा. ।

**वज्रतुण्डः** । पुं । स्नुहीवृक्षे । मनसा गाछ । गरुडे । वै.निघ. । मशके । रा.नि.व.१९ ।

**वज्रदण्डकः** । पुं । स्नुहीवृक्षे । मनसा गाछ । वै.निघ. ।

**वज्रदन्तः** । पुं । शूकरे । त्रिका. । मूषिके । श.मा. । अस्थिसंहारे । हाड़जोड़ा । र.मा. ।

**वज्रदशनः** । पुं । उन्दूरे । है.च. ।

**वज्रद्रुः** (मः) । पुं । स्नुहीवृक्षे । मनसा गाछ । अम. । श.र. ।

**वज्रपाषाणम्** । क्ली । दुग्धपाषाणे । फुलथड़ि । बम्. शिरगोला । वै निघ. ।

**वज्रपुष्पम्** । क्ली । तिलपुष्पे । तिलफुल । शतपुष्पायाम् । शुल्फा । वै.निघ. । स्त्री (ष्पा) । शताह्वायाम् । शुल्फा । रा.नि.व ४ ।

**वज्रबीजः** (कः) । पुं । लताकरञ्जे । वै. निघ. । रा.नि.व.९ ।

**वज्रभूमिरजः** । क्ली । वैक्रान्तमणौ । वै.निघ. ।

**वज्रभृङ्गी** । स्त्री । मधुरत्वणविशेषे । गुडाखु । गुणाः—कटु. उष्णा श्वासघ्नी हिक्काकम्पकण्ठरोगवातगुल्मपीनसप्लीहकृम्यामशूलोदरघ्नी च । वै.निघ. ।

**वज्रमण्डूरम्** । क्ली । पाण्डुरोगे औषधम् । पाठः—"पञ्चकोलं समरिचं देवदारु फलत्रिकं । विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिता. । यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणन्ततः । पक्त्वा चाष्टगुणे तोये घनीभूते तदुद्धरेत् । ततोऽक्षमात्रान् वटकान् पिवेत्तक्रेण तक्रभुक् ॥" रस.र. ।

**वज्रमुष्टिः** । पुं । आरण्यशूरणकन्दे, शूरणकन्दभेदे । वै.निघ.२भ.कर्णकाश्य.चि.वचासुन्ध्यादितैले ।

**वज्रमूली** । स्त्री । माषपर्ण्याम् । माषाणी । रा.नि व.२ । [षड्. । सद्द ।

**वज्रमूषा** । स्त्री । वज्रमूषायाम् । अकनुवा

**वज्ररदः** । पुं । शूकरे । त्रिका. ।

**वज्रलौहकम्** । क्ली । कान्तलौहे । वै.निघ ।

**वज्रवल्लरी** (वल्ली) । अस्थिसंहारलतायाम् । हाड़जोड़ा, हाड़क । दारा । र.मा.सं. । भैष. सुन्दरी.चि.वकुलाद्यतैले ।

**वज्रवृक्षः** । पुं । स्नुहीवृक्षे । मनसा गाछ । रा. नि.व.८ । सु.सू ३८च. । [नि.व.१९ ।

**वज्रशल्यः** । पु । शल्यकपशौ । शजारु । रा.

**वज्रशृङ्खलिका** । स्त्री । वर्षाभ्वनि । कुलेखाड़ा । हि तालमाखना । बं कोकिलाक्ष । बम्. विधरा ।

श्वासविषच्छर्दिघ्नी च। रा.नि.व.१६। वै.निघ.२ भ.वा.व्या.चि.रसोनपाके। मुद्गवटीगुणा—पथ्या रुच्या लघु. मुद्गसूपगुणा च। कुष्माण्डवटीगुणाः —रक्तघ्नी लघुश्च। भा.। नदीवटे। रा.नि.व.११। प्लक्षवृक्षे। मद.व.५।

**वटुः (कः)**। पुं। कुटजवृक्षे। শোণা গাছ। बालके। श.र.।

**वट्टलोहकम्**। क्ली। वर्त्तलोहे। वम्. पत्थर-सलोह। रा.नि.व.१३। [वै.निघ।

**वड़वानलः**। पुं। वाराहीकन्दे। सागराग्नौ।

**वड़ा**। स्त्री। पिष्टकविशेषे। বড়া। यथा—"कदलिनाथवा तालैर्युक्त यत्नात्कुलं पिष्टं। पिष्ट चूर्णे वटी वडा ...... ॥" श.च.।

**वड़िशम् (श्या)**। क्ली,स्त्री। मत्स्यधारणयन्त्रे। বড়শী। अम.। श.र.। पुं। ऋषिविशेषे। च.।

**वण्ठः**। पुं। खर्व्वे। বেঁটে। मे.। [मे।

**वण्ठरः**। पु। नूतनतालाङ्कुरे। कुकुरलाङ्गूले।

**वण्डः**। पुं। षण्डपुरुषे। अनाच्छन्नमेढ्रे। हे.च.। चि।लाङ्गूलादिरहिते। বেঁড়ে। मे.।

**वतूः**। पुं। मेघरोगी। उणा.।

**वत्सम्**। क्ली। वक्षसि। अम.। पुष्पकाशीषे। गुणा.—शीतवीर्य्यकषायलघुपाकात्वात् वात्सहत् श्व श्नतथ। पुं। गौवत्से। पुत्रे। वर्षे। त्रिका.। इन्द्रयवे। च.द.कामला.चि.व्योषाद्यघृते।

**वत्सकम्**। क्ली। पुष्पकाशीषे। नील हिरेकम्। रा.नि.व २३। कुटजवल्कले। কুড়চির ছাল। स.इन्द्रवज्ञाद्यचूर्णे। पु। कुटजवृक्षे। प.मु.। रा.नि.व.९। इन्द्रयवे। सा.कौ.सर्व्वज्वरहरलौहे। च.द.अञ्जनगुडिकायां। वा.मू.२५अ.वत्सकादिव.। "वत्सकमूर्व्वाभार्गी।" च.द.अग्नेयगुल्मच्च.चि.। "सहौकासुरवत्सके।" निर्गुण्ड्याम्। निशिन्दा। वै.निघ.। [कौषान्तरम्।

**वत्सकण्टकः**। पुं। पर्पटके। ক্ষেৎপাপড়া।

**वत्सकफलम्**। क्ली। इन्द्रयवे। च.सू.४अ.। च.द.ज्वरातिसा.चि.वत्सकादौ। कटफलमिति केचित्। [नि.व.९।

**वत्सकाबीज(फल)म्**। क्ली। इन्द्रयवे। रा.

**वत्सनागः (भ.)**। पुं। (Aconitum ferox.) Indian Aconite Root of the Aconite ferox brought from Nepál. स्थावरविषभेदे, कन्दविषभेदे। शावत कन्दविष, काठविष, मिठेविष। हि मिठा। वम्. वचनाग। ता. वसनवी। गुणा.—अतिमधुर उष्णः वातकफघ्न. कण्ठरोगसन्निपातघ्न पित्तसन्तापकारकश्च। रा नि व ६। सु कल्प २अ.। वा.व्या.चि. लघुवातविध्वंसरसे। लक्षणं यथा—"सिन्धुवारसदृक्पत्री वत्सनाभ्याकृतिस्तथा। किन्तु किञ्चित्ततो हीनो विशेषोऽयमुदाहृत.॥" भा.पू.१भ.विषव.।

**वत्सभक्षकः**। पुं। ईहामृगे। হুঁড়োল, গোবাগা। वै.निघ.।

**वत्सरः**। पुं। द्वादशमासात्मके काले। वछर। अम.। [२१।

**वत्सरान्तकः**। पुं। फाल्गुनमासे। रा.नि व.

**वत्सा**। स्त्री। वत्सायाम्। रा नि.व.१८।

**वत्सादनः**। पुं। ईहामृगे। वृके। গোবাগা। रा.नि.व.१९।

**वत्सादनी**। स्त्री। गडूच्याम्। प.मु.। सु.सू. ३८अ.संशोधनी। गजपिप्पल्याम्। रा.नि.व.१३। वनकार्पास्यां। स्वनामख्यातलतायां। गुणा.—मधुरा पित्तदाहरक्तदोषहरी हृद्या सन्तर्पणी रुच्या विषदोषघ्नी च। रा.नि.व.३।

**वत्साक्ष. (यः)**। पुं। कुटजवृक्षे। भैष.उपदंश.चि.। सु.चि.२८अ.। अनि.२स्थान.५६अ.।

**वत्साक्षी**। स्त्री। गोडुम्बायाम्। গোমুক ঝটা। [ড়া গাছ। অনি.।

**वदद्रुः**। पुं। आस्यशाखोटवृक्षे। আস্শ্যাও-

**वदनम्**। क्ली। मुखे। रा.नि.व.१८।

**वदनामलता**। स्त्री। पित्तज्वरोगे। भा.।

**वदामम्**। क्ली। वातामफले। বাদাম। रा.नि.व.११।

**वदालः (कः)**। पुं। मत्स्यविशेषे। বোয়াল মাছ। पाठीनमत्स्ये। চিতল মাছ। त्रिका.।

**वधकः**। पुं। व्याधे। मल्ले। उणा.।

**वधाङ्गकम्**। क्ली। विषे। वै.निघ.।

"कटुर्विपाके क्रमिहा मेधाग्निबलवर्द्धन ॥ सक्षार सर्वदोषघ्न वास्तुको रोचन सर. ॥" सु.सू.४६ अ। "तदेव तु दृढत्वच रक्त स्यात् गौरवास्तुक ।" भा । जीवशाके । पुनर्नवायाम् । वै.निघ. ।

**वास्तुकशाकटम्** । क्ली । वास्तुकशाकक्षेत्रे । रा.नि व.२ ।

**वास्तुकाकारा** । स्त्री । मद्रशाके। पाटशाक। वै.निघ. । [उरमुज । प.सु. ।

**वास्तुकालिङ्गः** । पु । तरम्बुजलतायाम् ।

**वास्तुकी** । स्त्री । चिल्लीशाके । रा.नि.व.७ । वास्तुके । वै.निघ. ।

**वास्तुपरिग्रहः** । पु । सर्वत स्थानग्रहणे । आयतन लओया, स्थल लओया । च.सू.१७अ. ।

**वास्तुपुष्पा** । स्त्री । चन्द्रसूरे । भा. ।

**वास्तुरुजा** । स्त्री । स्फोटपिडकाधिष्ठानवेदना याम् । टाटन । भा म.४अ. । [व.७

**वास्तुवस्तूकम्** । क्ली । वास्तुकशाके । रा.नि.

**वास्तूकम्** । वास्तुकशाके । रा.नि.व.७ ।

**वास्तूकी** । स्त्री । श्वेतचिल्लीशाके । रा.नि.व.७।

**वास्नः** । पु । लौहे । उष्णयि । कश्चित् । [गै ।

**वास्पसेकः** । पु । रोदने । भा.म.४अ,नासारो

**वास्पस्वेदः** । पु । शुष्के स्वेदविशेषे । वातहरे क्वाथे कुम्भीं पूरयित्वा भूमौ निखन्य तदुपरि शय्यां कृत्वा वाष्पस्वेदो ग्राह्य. । रस.र ।

**वासेयः** । पु । नागकेशरवृक्षे । र.मा. ।

**वाहः** । पु । घोटके । अम. । च द.कामाग्निस न्दीपने । वृषे । गर्दभे । परिमाणभेदे । मायली परिमाणे । वायौ । मे. । ग्रीवालम्बयारत्नभागे । जय.द २अ. ।

**वाहद्विषन्** । पु । महिषे । प सु. ।

**वाहश्रेष्ठः** । पु । घोटके । रा नि.व.१८ ।

**वाहरः** । पुं । शुनिषण्णकशाके । शुषुनि शा क । मे. ।

**वाहा** । स्त्री । वाहौ । रा.नि.व १८ ।

**वाह्रित्यम्** । क्ली । करिगण्डाधोभागे । अम. ।

**वाह्नवारः** । पु । श्लेष्मान्तकवृक्षे । रा नि व । १२

**वाह्नीकी** । स्त्री । अग्निप्रकृतिकीटे । सु.कल्प ८अ. । [चि.२अ. ।

**वाह्यद्रुतिः** । पु । रसस्य संस्कारविशेषे । रस.

**वाह्यायामः** । पु । धनुस्तम्भभेदे । लक्षण— "वाह्यस्नायुप्रतानस्थो वाह्यायाम करोति च । तमसाध्य बुधा प्राहुर्वक्ष कट्यूरुभञ्जनम् ।" सु नि. १अ ।

**वाह्येन्द्रियम्** । क्ली । वहिरिन्द्रिये चक्षुरादौ ।

**वाह्लि(ह्ली)कम्** । कुङ्कुमे । रा.नि व.१२ । वै निघ क्रमि चि सुवर्चिकचूर्णे । हिङ्गुनि । रा. नि व ६ । भा. । सौतीऽञ्जने । प सु ।

**विकम्** । क्ली । सद्य प्रसूताया गो चीरे । गौ- ऽजना । श.च ।

**विकङ्कः** । पु । विकङ्कतवृक्षे । वै निघ. ।

**विकङ्कटः** । पु । गोक्षुरक्षुपे । श.मा. ।

**विकङ्कतः** । पु । (Flacourtia Ramontchi. Var sapida.) सुवावृक्षे । वँइचि गाछ । दा, हि कटाइ, वृक्ष । म गुलधोरी । कं हुलु सानिका । तें कानवेगुचेट्टु । उत. बहुचकुडि पर्णा, कुकोशा । गुणा —अम्ल मधुर मधुरपाक लघु दीपन पाचन कामलाघ्न पित्तघ्न च । रा नि.व.९ । 'विकङ्कतफल पक्क मधुर सर्व्वदोषनुत् ।" भा. ।

**विकङ्कता** । स्त्री । अतिबलायां । रा नि.व.४ ।

**विकचा** । स्त्री । महाश्रावणिकायाम् । गोरक्षमुण्डी । रा नि.व ५ ।

**विकटः** । पु । साकुरुण्डवृक्षे । रा नि.व.६ । सोमलतायाम् । वै.निघ. । विस्फोटके । श.र. ।

**विकटविषाणः**<br>**विकटशृङ्गः** } पु । सम्बरमृगे । वै.निघ. ।

**विकण्टकः** । पु । यवासे । दुरालभा । जटा । स्वनामख्यातवृक्षे । गुणा —कषाय' कटु उष्ण रुच्य दीपन कफघ्न वस्त्रग्राहकश्च । रा.नि.व.११ ।

**विकरः** । पु । रोगे । श.च । [वै.निघ. ।

**विकरणी** । स्त्री । विन्दुकवृक्षे । ढँड गाछ ।

**विकर्णिकः**
**विकर्णरोमा (न्)**
**विकर्णसंज्ञः** } पुं। ग्रन्थिपर्णभेदे। टेटा। वम्. भटीरा। [अम.।

**विकर्त्तनः** । पुं। अर्कवृक्षे। आकन्द गाछ।

**विकर्त्तिका** । स्त्री। हृदयस्यावर्त्तच्छेदनके द्रव्यविशेषे। वा चि.६अ.।

**विकर्षणम्** । क्ली। विरुद्धाकर्षणे। मांसादि प्रतिबद्धशल्यस्य मोचने। सु.सू.७अ.।

**विकलपाणिकः** । त्रि। विकलहस्ते। हाठ भाङ्गा। हला.।

**विकलाङ्गः** । त्रि। पङ्गुकाये।

**विकल्पः** । पुं। सम्प्राप्तेरौपाधिकभेदे। "दोषाणां समवेतानां विकल्पोऽंशांशकल्पना।" मा.पचनि.। द्वयोर्वेति विकल्पः। यथा रसौदनं सघृता यवागूर्वा। सु.उ.६५अ.।

**विकसा (सा)** । स्त्री। मञ्जिष्ठायाम्। प.मु.। भैष.बृहत्खदिरवटी। मांसरोहिण्याम्। रा.नि.व.१२। भैष.वातरक्तचि.। च.द वा.व्या एलादितैले। रक्तपुनर्नवायां। वै.निघ.। [व.५।

**विकस्वरा** । स्त्री। रक्तपुनर्नवायाम्। रा.नि.

**विकारः** । पुं। व्याधौ। रा.नि.व.२०। विकृते रोगे। त्रिका.। प्रकृतेरन्यथाभावे। अम.। धातुवैषम्ये। च.सू १अ.।

**विकालः** । पुं। सायाह्ने। वैकाल। श.र.।

**विकालिका** । स्त्री। मानरन्ध्रायां। ताँवो, घड़ी। त्रिका.।

**विकिरः** । पुं। पक्षिणि। अम.। छहत्कूपे। त्रिका.। सु.सू.४५अ.। लक्षणं—"नद्यादिनिकटे भूमिर्या भवेद्वालुकामयी। उद्धाव्यते ततो यत्तु तज्जलं विकिरं विदुः॥" अलन्तु—शीतलं स्वच्छं निर्दोषं लघु स्वादु पित्तघ्नं वातदं। क्ली। चरथे। भा.। सु.नि.३अ.। [शेपथे।

**विकीरणः** । पुं। रक्तार्के। प.मु.। क्ली। वि-

**विकीर्ण(क)म् (का)** । क्ली, स्त्री। ग्रन्थिपर्णभेदे। वै.निघ.। त्रि। विक्षिप्ते।

**विकीर्णफलः (कः)** । पुं। रक्तार्के। वै.निघ.।

**विकीर्णरोम (न्)**
**विकीर्णसंज्ञम्** } क्ली। स्थौणेयके। गाँठिआला। रा.नि.व.१२।

**विकुम्भः** । पुं कनकवृक्षे। रस.कौ.ज्वरारिरसे।

**विकूणिका** । स्त्री। नासिकायाम्। हे.च.।

**विकूणनम्** । क्ली। सङ्कोचने। वा.उ.१५अ.।

**विकृतः** । त्रि। रोगिणि। रा.नि.व.२०। असंस्कृते। मे.। क्ली। विकारे। [हे.च.।

**विकृतिः** । स्त्री। विकारे। रोगे। डिम्बे।

**विकेशिका** । स्त्री। वर्त्यां। पलते। सु.सू.१८अ.।

**विक्रमः** । पादे। रा.नि.व.१८।

**विक्रमी (न्)** । पुं। सिंहे। रा.नि.व.१९।

**विक्रान्तम्** । क्ली। वैक्रान्तमणौ। रा.नि.व.१३। पुं। सिंहे। रा.नि.व.१९।

**विक्रान्ता** । स्त्री। अस्फोटनीलतायाम्। रा.नि.व.३। अग्निमन्थवृक्षे। वै.निघ.। जयन्त्यां। रा नि.व.४। मूषिकपर्ण्याम्। वराहक्रान्तायां। च.द वा.रक्त.वृह.गुडूचीतैले। आदित्यभक्तायां। रा.नि.व.४। हुडहुडिया। अपराजितायाम्। हंसपादीलतायां। रक्तलज्जालुकायाम्। रा.नि.व ५।

**विक्रिया** । स्त्री। विकारे। अम.।

**विक्लवः** । त्रि। जडे। विह्वले। अम.।

**विक्लेदः** । पुं। आर्द्रतायाम्। भा.नासारोगे।

**विखुः (खुः) (ख्यः)** । त्रि। अनासिके। थाँदा। हे.च.।

**विख्रः (खुः)** । त्रि। अनासिके। नाक्काटा। हे.च.। श.र.। [मनुष्याम्। सु शा.१०अ.।

**विगतसूतिका** । स्त्री। पुनरार्त्तवदर्शनपर्यन्त

**विगतार्त्तवा** । स्त्री। निवृत्तरजस्कायां। श.र.।

**विगन्ध(न्धि)कः** । पुं। इङ्गुदीवृक्षे। रा.नि.व.८। [रा.नि.व.४।

**विगन्धिका** । स्त्री। हपुषायां। अजगन्धायाम्।

**विगिरः** । पुं। विष्किरपक्षिभेदे। चर्क.टी.चि.४र्थ.प्रतके।

**विग्रः** । त्रि। अनासिके। थौंदा। हे.च.।"

**विग्रहः** । पुं । शरीरे । रा.नि.व.१८ । विभागे । भै. ।

**विग्रहावरम्** । क्ली । पृष्ठे । श.च. ।

**विघट्टम्** । क्ली । वङ्गे । वै.निघ. ।

**विघट्टिकाकन्दः** । पुं । गुल्मकन्दरोगे ।

**विघण्टा (ण्टिका)** । स्त्री । गुल्मकन्दे । रा.नि.व.७ ।

**विघसम्** । क्ली । भोजने । रा.नि.व.२० । सिक्थके । पुं । भोजनशेषे । अम. ।

**विघ्नप्रियम्** । क्ली । यवक्षारयवाग्वाम् । यवेर थाउ । प.मु. । [व.१९ ।

**विघ्नेशवाहनः** । पुं । महामूषिके । रा.नि.

**विघ्नेशानकान्ता** । स्त्री । श्वेतदूर्व्वायाम् । रा.नि.व.८ ।

**विङ्कः** । पुं । खुरे । त्रिका. ।

**विचकिलः** । पुं । दमनकवृक्षे । भा.म.२भ भेद.चि. । मल्लिकावृक्षे । वै.निघ. ।

**विचण्डिका** । स्त्री । रक्तकरवीरवृक्षे । वै.निघ. ।

**विचर्च्चिका** । स्त्री । सूक्ष्मस्फोटके । रा.नि.व. २० । क्षुद्रकुष्ठभेदे । थस, চুলকুণি । तल्लक्षणम् —राज्योऽतिकण्ड्वार्त्तिरुजः सुरूक्षा भवन्ति गात्रेषु विचर्च्चिकायाम् । सु.नि.५भ.१३ ।

**विचक्षणा** । स्त्री । नागदन्त्याम् । হাতি-শুঁড় । रा.नि.व.५ ।

**विचक्षुः** । त्रि । विमनसि । त्रिका. ।

**विचित्रः (कः)** । पु । अशोकवृक्षे । रा.नि. व.१० । तिलकवृक्षे । वै.निघ. । भूर्जवृक्षे । रा. नि.व.९ । [क्षीकायाम् । श.मु.११भ. ।

**विचित्रकर्बुरा (वर्णा)** । स्त्री । सविषम

**विचित्रा** । स्त्री । मृगेर्वारुके । राखालकाँकुड़ । रा.नि.व.८ । [श.च. ।

**विचित्राङ्गः** । पुं । मयूरे । श.र. । व्याघ्रे ।

**विचित्रान्नम्** । क्ली । खेचरिकायाम् । খিচড়ি ।

**विचिलकः** । पुं । प्राणहरकीटभेदे । सु.कल्प. ८भ. ।

**विचूर्णनम्** । क्ली । अवधूलने । भा.म.४भा ।

**विचेष्टनम्** । क्ली । विरुद्धचेष्टायां, बलवद्विग्रहादौ । निदा. ।

**विच्छत्रकः** । पु । सुनिषण्णकशाके । ज.द. ।

**विच्छर्द्दिका** । स्त्री । वमने । रा.नि.व.२० ।

**विच्छलः** । पु । वेतसलतायाम् । र.मा. ।

**विच्छित्तिः** । पु । कषाये । त्रिका ।

**विच्छिन्नः** । पुं । वातरोगे । क्ली । क्वणाद्वगाढे रुधीनशे । वा उ.१६अ. ।

**विजपिलम्** । क्ली । पङ्के । हला. ।

**विजयचूर्णम्** । क्ली । अर्शसि औषधम् । ত্রিকটু, ত্রিফলা, ত্রিমদ, বচ, হিঙ্গু, আকনাদি, যবক্ষার, হরিদ্রা, দারুহরিদ্রা, চই, চিরেতা, ইন্দ্রযব, চিতামূল, বেলেড়া, শুলফা, পঞ্চলবণ, পিপুলমূল, বেলশুট ও যমানী সমভাগ । च.द. ।

**विजयन्ती** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**विजया** । स्त्री । स्थावरविषान्तर्गतमूलविषे । सु.कल्प२अ. । शेफालिकायाम् । रा.नि.व ४ । हरीतकीभेदे । भा.म.१भ. । रा.नि.व.११ । सा विन्ध्यगिरिजा । वा.चि.३अ. । जयन्त्यां । रा.नि. व ४ । आनन्दभैरवीवध्याम् । दन्तीवृक्षे । वै.निघ. । निर्गुण्ड्याम् । वचायां । श्वेतवचायां । रा.नि.व.६ । नीलीवृक्षे । मल्लायां । प.मु. । शमीभेदे । मञ्जिष्ठायाम् । नीलदूर्व्वायां । रा.नि.व.८ । अग्निमन्थे । रा.नि.व.९ । भङ्गायां । हिं भाङ्, सिद्धि । श.च. । गुणाः—कटुः कषाया उष्णा तिक्ता वातकफघ्नी संग्राहिणी वाक्प्रदा बल्या मेधाकारिणी सुष्ठु दीपनी च । रा.नि.व.६ ।

**विजयाबन्धः** । पुं । अपराजिताबन्धने । यथा—"सायंकालेऽभिमन्त्र्यैव विजयां मानवहरेत् । बद्धा शिरसि तन्मूलं भूतज्वरहरं परम् ॥" वै.निघ. ।

**विजयावहः** । पु । सर्षपे । वै.निघ. ।

**विजयिनी** । स्त्री । वनमल्लिकायाम् । वै.निघ. ।

**विजला** । स्त्री । चञ्चुक्षुपे । रा.नि.व.४ ।

**विजिलम्** । क्ली । दधिप्रकारे । ईषत्कुरसम्पन्न-

भादी । श्रम. । "पाकरूपरसासक्तो व्यञ्जने तु भेषेत्तयम् । तैलपाकसुसंस्कारे प्रायश्चमुपसक्ततम् । विच्छिलं सालसीकञ्च विजिलं विज्जिलञ्च तत् ॥" श्र.र. ।     [श्र र ।

**विजिविलम्** । क्ली । विजिले । श्र.टी.रा. ।

**विजुलः** पु । शाल्मलीकन्दे । रा नि.व.७ ।

**विजृम्भनम्** । क्ली । जृम्भणे । हाइतोला ।

**विजृम्भितम्** क्ली । चेष्टायां । मे. ।

**विज्ज(ज्जि)लम्** । क्ली । विजिले । श्रम. ।

**विज्जलः** । पु । वाघ्यालुके । वेलेड़ा । वै. निघ. ।

**विज्जुलम्(ला)** । क्ली, स्त्री । गुडत्वचि । रा.नि व ६ । वि । पिच्छिले । च.वि.८च. ।

**विज्जुलि(ल्लि)का** । स्त्री । जन्तुकालतायाम् । रा.नि व ३ ।

**विज्ञबुद्धिः** । स्त्री । जटामांसाम् । श च ।

**विज्ञानतैलगर्भः** । पुं । अङ्कोल्लवृक्षे । रा नि व.९ ।

**विञ्जामरम्** । क्ली । चक्षुष शुक्लचिन्हे । कश्चित् ।

**विटः** । पु । खदिरे । मूषिके । वै निघ । [मा । लवणभेदे । विट् लवण । मे । नागरङ्गवृक्षे । श.

**विटपः** । पु । आदित्यपत्रे । रा नि व.४ । क्ली । तन्नामकसक्थिमर्म्मणि । तस्य च स्थान वङ्क्षणवृषणयोर्मध्यभाग. । सु.शा.६अ. ।   [वृक्षे । श्रम. ।

**विटपी (न्)** । पु । वटवृक्षे । रा नि.व ११ ।

**विटप्रियः** । पु । मुद्गरवृक्षे । मकरलाश्वमूलेन गाछ । रा नि.व.११ ।   [निक । इ.च. ।

**विटमाक्षिकः** । पुं । धातुमाक्षिके । स्वर्णमा-

**विटलवणम्** । क्ली । विडलवणे । विट्लुन । रा.नि.व.६ ।   [१० ।

**विटवल्लभा** । स्त्री । पाटलीवृक्षे । रा.नि.व.

**विटिः** । स्त्री । पीतचन्दने । श.मा. । [मा.नि. ।

**विट् (ड़्)** । स्त्री । विष्ठायाम् । रा.नि व.१८ ।

**विट्कता** । स्त्री । विष्ठायाम् । मा.ज्व नि. ।

**विट्खदिरः** । पु । अरिमेदखदिरवृक्षे, वि ड्गन्धखदिरे । गुणाद्यावलि । गुणा —कटूष्णः तिक्त रक्तव्रणदोषहर कण्डूविषविसर्पघ्न ज्वरकुष्ठोन्मादहरश्च । रा.नि व.८ ।

**विट्घातः** । पु । मूत्राघाते । विड्विघात ।

**विट्चरः** । पुं । ग्राम्यशूकरे । श्रम. । [निघ ।

**विट्प्रियः** । पु । शिशुमारे । शुशुक । वै.

**विट्सङ्गः** । पु । पुरीषाप्रवृत्ती । भा.म.सा. चि. । " विट्सङ्ग आध्मानमथाविपाक ।"

**विट्सारिका** । स्त्री । सारिकाभेदे । गुये शालिक । भटा. ।

**विड़.** । पु । रसजारणे क्षारवहुलद्रव्यसमष्टौ । यथा—"वालुकैरण्डकदलीदेवदालीपुनर्नवा । वासापलाशनिचुलतिलकाञ्चनमोचका । सर्व्वाङ्गखण्ड सच्छिद्र नातिशुष्कं शिलातले । दग्ध काण्ड तिलानाञ्च पश्चाद् मूलकस्य च । क्षारैरेभूत्वरगैर्ण जल तस्मात् परिस्रुतम् । लौहपात्रे पचेद् यत्नैः सुसपाकमिमानवित् । वाष्पाणां बुद्बुदानाञ्च दर्श नाशुद्गमे यथा । तदा काशीशसौराष्ट्रीक्षारत्रयकटुत्रयम् । गन्धकञ्च सिता हिङ्गुर्लवणानि च षट् तथा । एषां चूर्णं क्षिपेद्दिवि लौहसपुटमध्यत । सप्ताह भृगत पश्चाद्रार्यम्तु प्रयुरो विड ॥" सिद्ध काण्डक्षार सर्व्वक्षारसम इति निघण्टाय । "ट क्षण शतधा भाव्यं द्रावे पालाशवह्नौ । विडो वह्निमुखो नाम द्वितीयः सर्व्वजारणे ॥" र.चि. ३प. ।

**विड़म्** । क्ली । लवणविशेषे । विट् लवण । चि. क्ष क केशरपात्रे । हि विडि, भाशीयर । प मु. । गुणा —दीपनम् रुच्य वातघ्न हृद्यम् अजीर्णशूलघ्न गुल्मरोगघ्न । रा.नि व.६ । विड्गौ । वै.निघं. २भ.अग्न्यादिचि.विडङ्गादियोगे । पाकाखवरी । श्रम ।

**विडङ्गः** । त्रि । (Embelia ribes.) Seeds of Embelia ribes क्रमिघ्नद्रव्यविशेषे । विडङ्ग । हिं वायविडङ्ग वायविडं । ते वायुविडङ्ग । बम्. वर्वाह, बम्बट कार्कणमी । मा वायविल । गुणा—कटु रुक्ष लघु कफवातघ्नम् अग्निमान्द्यघ्नम् अरुचिभ्रमघ्नं च । रा.नि.व.६ । ईषत्तिक्त विषघ्नं क्रमिघ्नच । सु सू ३९अ. । वा द. १५अ सुरसादि । "कालमालाविडङ्गम् ।"

**विड्ङ्गसारः** । पुं । विडङ्गतण्डुले । वारागुडिकायाम् । (हेमाद्रिविरेचनाध्याये) ।

**विड्ङ्गादिचूर्णम्** । क्ली । कामाधिकारे । पाठः —"विडङ्ग नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् । मार्गी चारद तच्चूर्णं पिबेद्वा घृतमात्रया ॥" वा.चि.१५. ।

**विडारः (लः)** । पुं । मार्जारे । विडाल । सुगन्धमार्जारे । गन्धगकुल । क्ली । हरिताले । हे च. । [१ख. ।

**विडालपदकम्** । क्ली । कर्षे, २तो. । प.प्र

**विडालास्थि** । क्ली । मार्जारास्थनि । विडालेर हाड । वा उ २८५. । इदं भगन्दरे हितं ।

**विडालिका (ली)** । स्त्री । भूमिकुष्माण्डे । भूंइकुमड़ा । रा.नि.व.७ ।

**विड्लः** । पुं । वेतसवृक्षे । है.च. ।

**विडन्धम् (न्धि)** । क्ली । विडलवणे । प.मु ।

**विड्ग्रहः** । पुं । बद्धकोष्ठतायाम् । निदा. ।

**विड्भेदः** । पुं । पित्तजज्वरोगे । मा. ।

**विड्लवणम्** । क्ली । विडलवणे । र.मा. ।

**विड्वराहः** । पुं । ग्राम्यशूकरे । जटा. ।

**विड्वलः** । पुं । गोपके । निशादन । प.मु. ।

**विड्विघातः** । पुं । मूत्राघातरोगविशेषे । लक्षण —"रूक्षदुर्बलयोर्वातेनोदावर्त्तं शकृद्यदा । मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः । विड्गन्धं मूत्रयेत् कृच्छ्राद्विड्घातं विनिर्दिशेत् ॥" मा.नि. ।

**विड्विभेदः** । पुं । विड्घातरोगे । मा.नि. ।

**विण्मार्गः** । पुं । गुदे । वा.चि.१५ ।

**वितण्डा** । स्त्री । करवीरवृक्षे । मे. । कचुमाकन्दशाके । कटू । जटा. । दर्व्यां । हाता । हारा ।

**वितस्ता** । स्त्री । भारतीयनदीविशेषे । वितस्ता काश्मीरे प्रसिद्धा । तज्जलगुणाः—स्वादु विदोषघ्नं लघु प्रज्ञाबुद्धिप्रदं तापहरं आयहरं पथ्यं च । रा.नि.व.१४ ।

**वितस्तिः** । स्त्री । कनिष्ठिकाङ्गुष्ठयुतकरविस्तारे । १२ अङ्गुलि । रा नि व १८ ।

**वितानः (वस्त.)** । पुं । शिरोव्रणबन्धन भेदे । "त्र्यैयो वितानसंज्ञस्तु वितानाकारसंयुतः ।" इति लक्षणं । सु.सू.१८. ।

**वितानकम्** । क्ली । धान्यके । धनिया । प.मु । पुं । माडवृक्षे । रा.नि.व.२३ ।

**वितानमूलकम्** । क्ली । कोइवदेशप्रसिद्धे गोरक्षमूले । वेणावमूल । रा.नि.व.८ ।

**वितुन्नम्** । स्त्री । सुनिषण्णके । शुशुनि शाक । चम. । शैवाले । मे. ।

**वितुन्नकम्** । क्ली । धान्ये । धने । रा.नि.व.६ । म.द.व.२ । तुत्थके । कैवर्त्तमुस्तके । वितुन्नकनाम्नी वृक्षस्य त्वक् मुस्ताकृतिः । कोसची गोयागुडूची इति च ख्यातम् । कैवर्त्तमुता, केउटमुता । मा. । पुं । भामलकीवृक्षे । चम. । स्त्री (का) । भूम्यामलक्याम् । भूंई आमला । वै.निघ. । [आमला । वै.निघ. ।

**वितुन्नभूता** । स्त्री । भूम्यामलक्याम् । भूंई

**वितुन्ना (न्निका)** । स्त्री । भूम्यामलक्याम् । भूंइ आमला । रा.नि.व.५ ।

**वित्तनः** । पुं । वृषभे । श.च. । [श.च. ।

**विथ्या** । स्त्री । गोजिह्वायाम् । गजिया शाक ।

**विदंशः** । पुं । व्यञ्जने । चाट । रा.नि.व.१० ।

**विदः** । पुं । तिलकवृक्षे । वै.निघ. ।

**विदग्धम्** । क्ली । चतुरोदिरितकदि । वै.निघ. ।

**विदग्धाजीर्णम्** । क्ली । दग्धाजीर्णभेदे । See अग्निमान्द्यम् ।

**विदग्धाख्यदृष्टिः** । स्त्री । दृष्टिगतरोगभेदे । लक्षणं —"भ्रमभ्रमानगमादीयैः सार्वैर्वा हरिताचिता । सक्लेदकण्डूकलुषा विदग्धाख्येन सा स्मृता ॥" वा.उ १२५. ।

**विदन्ता** । स्त्री । वराटकभेदे । रा.नि.व.११ ।

**विदरम्** । क्ली । विषसारके । मनिरनेगा । म.च. । पुं । स्फोटके । फोटा फाटा । चम. ।

**विदरणम्** । क्ली । विद्रधौ । रा.नि.व.२० ।

**विदर्भः** । पुं । दन्तमूलगतरोगे । लक्षणं— "घट्टे दन्तमांसेषु संरम्भो जायते महान् । चलन्ति दन्ताश्च स विदर्भोऽभिधीयते ॥" वा. उ.२१५. ।

**विदलम्** । क्ली । विदले । दालि । दाडिम्ब-बीजे । डालिमेर दाना । अम.भ.लिङ्गसंग्रहे । पुं । रक्तकाञ्चने । श.र. । पिष्टके । पिठा । अ च. । स्त्री (ला) । त्रिवृति । तेउडी । रा.नि. व.६ । सातलायाम् । रा.नि.व.४ ।

**विदलान्नम्** । क्ली । दाल्यान्नम् । शस्य । यथा —"यवगोधूमचणका माषो मुद्गाढकी तथा । म कुष्ठक. कुलत्थश्च मसूरस्त्रिपुटस्तथा । निष्पावक. कलायश्च विदलान्नं प्रकीर्त्तितम् ॥" अत्रि.१५ष. । गुणाः— स्वस्वपर्य्याये ज्ञेया. । [वा.उ.२६च. ।

**विदलितम्** । क्ली । मज्जरक्तपरिस्रुतसद्योव्रणे ।

**विदारकम्** । क्ली । वज्रक्षारे । रा.नि व.६ । जलमध्यस्थलक्ष्मलादौ । अम. ।

**विदारणः** । पुं । कर्णिकारवृक्षे । श.र. । ख दिरे । थापत्र । वै.निघ । क्ली । वायुजन्यव्रणवेद-नाविशेषे । सु सू.२२ष. । त्रि । विदीर्णकरणे ।

**विदारिका** । स्त्री । शालपर्ण्याम् । शालपा-णि । प सु. । गाम्भारीवृक्षे । वै.निघ. । प्रमेहपि डकाविशेषे । लक्षणं—"विदारीकन्दवद्वृत्ता कठि ना च विदारिका ।" सु.नि.६ष. । क्षुद्ररोगविशे षे । लक्षणं यथा —"विदारीकन्दवद्वृत्तां कक्षाव ङ्क्षणसन्धिषु । रक्तां विदारिकां विद्यात् सर्व्वजां सर्व्वलक्षणाम् ॥" सु नि.१३ष. । कर्णरोगभेदे । "........सन्निपाताद्विदारिका । सवर्णः सरुजः स्तब्धः श्वयथु' स उपेक्षित. । कटुतैलनिभं पक्वः स्रवेत् कृच्छ्रेण रोहति । सङ्कोचयति रूढा च सा ध्रुवं कर्णशष्कुलीम् ॥" वा.उ.१७ष. ।

**विदारि(री)गन्धा** । स्त्री । शालपर्ण्याम् । शालपाणि । सु सू.३८ष. । तिक्ततुम्बर्य्यां । तित्-लाउ । च.द सू.क्ष.चि.सुकुमारकुमारके घृते । च. सू.४ष । [ड ।

**विदारिणी** । स्त्री । गाम्भारीवृक्षे । रा नि व.

**विदारी** । स्त्री । गलरोगभेदे । लक्षणं यथा —"सदाहतोदं श्वयथु सरक्तमन्तर्गले पूतिविशीर्णमांसं । पित्तेन विद्याद्वदने विदारीं पार्श्वे विशे-षात् स तु येन शेते ॥" सु.नि.१६ष. । क्षुद्ररोग-भेदे । काँकविड़ाली । लक्षणं—"विदारीकन्द-कठिना विदारी कक्षवङ्क्षणे ।" वा.उ.३१ष. । (Ipomoea digitata. Syn. Paniculata.) महाकन्दशाकविशेषे । भुँइकुमड़ा । हिं बिलाइकन्द, क्षीरविदारी गेठी च । कं नेलकुंब ल । तें नेलगुम्मडि । उत्. भूइकखारु । बम्. भूमिकोहला । गुणाः—मधुरा शीता गुरु. स्निग्धा रक्तपित्तघ्नी कफकरी बल्या वीर्य्यवर्द्धनी च । रा. नि.व.७ । कोष्ठाकारो लोहितकुसुमः, स च द्विधा दीर्घकन्दो बहुक्षीरः, हस्तिपादको महा-क्षीरश्च । सु.सू.३८ष । च.चि.८ष. । सुवर्चला-याम् । वाराहीकन्दे । क्षीरकाकोल्यां । वै.निघ. । *विदार्य्यादिगणः यथा— मधूकमुद्गपर्णीकाकोलीक्षी-रविदारीकायस्थापृश्निपर्णीकण्टकारीजीवकर्षभकमुद्गपर्णीगोक्षुर-सुताभियादास्मिके वर्गे ।* गुणा — हृद्यौ बृंहणः वा-तपित्तहा शोषगुल्माङ्गमर्द्दोर्द्ध्वश्वासकासहरश्च । वा. सू१५च । [ड़ा । रा.नि.व.७ ।

**विदारीकन्दः** । पुं । विदार्य्यां । भुँइकुम-

**विदारीद्वयम्** । पुं । कुष्माण्डभूमिकुष्माण्ड-योः । कुमड़ा ओ भुँइकुमड़ा । वै.निघ चय.चि. मिश्रगुल्माम् ।

**विदालः** । पुं । कृकलासे । काँकलास । त्रिका ।

**विदाहः** । पुं । पित्तजन्यरोगे, पित्तजन्यज्वाला-याम्, करपादादिदाहे । भा. ।

**विदाहकः** । त्रि । दाहजनके ।

**विदाहि** । त्रि । अतिदाहजनकवस्तुनि । तल्ल क्षणं—"विदाहि द्रव्यमुद्गारमम्लं कुर्य्यात्तथा तृ-षाम् । हृदि दाहञ्च जनयेत् पाकं गच्छति चाचि-रात् ॥" राज. ।

**विदिक्चक्रः** । पुं हरिद्राङ्गपक्षिणि । हरि-ड्राण वा ङ्कगोकुन । अ च. ।

**विदुः (दूः)** । पुं । करिकुम्भमध्यावकाशे । च. टी. । बन्नस कर्णोध. पद्मकुले भागे । ज.द २च ।

**विदुलः** । पुं । वेतसलतायाम् । जलवेतसे । प.सु. । वा.सू.१५ष. । गन्धरसे । र.मा. ।

**विदुला** । स्त्री । सातलायाम् । रा.नि व.४ । विट्खदिरे । गुयेबाबुला । "विदुलायाश्च मूल-ञ्च ।" मयोगा,भग्नाधिकारे ।

**विदूरजम्** । क्ली । वैदूर्य्यमणौ । रा.नि.व.१३

तीक्ष्ण वायुविस्तृत सरक्तं पित्तमीरयेत् । ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः । एव विद्रधिरागन्तु पित्तविद्रधिलक्षणः । आभ्यन्तरानत ऊर्द्ध्वं विद्रधीन् परिचक्षते । गुर्व्वसात्म्यविरुद्धान्नशुष्कसङ्कीर्णभोजनात् । अतिव्यवायव्यायामवेगाघात विदाहिभिः । पृथक्सम्भूय वा दोषाः कुपिता गुल्मरूपिणम् । वल्मीकवत्समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम् । गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा । वृक्कयोः प्लीह्नि यकृति हृदये क्लोम्नि वा तथा । तेषां लिङ्गानि जानीयात् बाह्यविद्रधिलक्षणैः । आमपक्वैषणीयेन पक्वापक्वं विनिर्दिशेत् । गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता । नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम् । कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ । वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम् । सर्व्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च दारुणः । श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका । आमो वा यदि वा पक्वो महान् वा यदि चेतरः । सर्व्वो मर्म्मोत्थितस्त्वत्र विद्रधिः कष्ट उच्यते । स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः । दाहज्वरकरो घोरो जायते रक्तविद्रधिः । अपि सम्यक्प्रजातानामसृक्कायाद्विशुद्धितः । रक्तजं विद्रधिं विद्यात् कुक्षौ मक्कलसंज्ञितम् ।" सप्ताहान्नोपशान्तश्चेत्ततोऽसौ सम्प्रपच्यते । सु.नि.९ अ. । गुल्मादस्य विशेष गुल्मशब्दे द्रष्टव्य ।

**विद्रधिका** । स्त्री । प्रमेहपिटकायाम् । लक्षण —"विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ।" सु.नि ६ अ. ।

**विद्रधिघ्नः (नाशन)** । पुं । शिग्रुवृक्षे । शोभाञ्जनवृक्षे । मधिग्रो नाम । वैद्यका । [वै.नि. ।

**विद्राविणी** । स्त्री । काकमाच्याम् । रा.नि. ।

**विद्रुम.** । पु । प्रवाले । पत्रे । रा.नि.व १३ ।

**विद्रुमफल. (ला)** । पु,स्त्री । मधुरकुन्दुरौ । वै.निघ । [भद्रश्री । चम । रा.नि.व १२ ।

**विद्रुमलता (तिका)** । स्त्री । नलीनामगन्धद्रव्ये ।

**विद्रुमयाक्** । क्ली । मधुरकुन्दुरौ । वै.निघ. ।

**विद्रुलः** । पु । वेतसवृक्षे । वै.निघ ।

**विद्वान्** । पु । देवे । रा.नि.व २० ।

**विद्धेयम्** । क्ली । कङ्कोले । कक्कोल । रा.नि.व १२ । [धन्ने । भ र.मह । मे । त्रिका ।

**विध. (धा)** । पु, स्त्री । ऋद्धौ । हस्तिभक्षे । वै ।

**विधवनम्** । क्ली । कम्पने । व्याक ।

**विधसम्** । क्ली । मधूच्छिष्टे । मम । वै.निघ ।

**विधाता (तृ)** । पु । मद्ये । रा.नि.व.१४ ।

**विधात्री** । स्त्री । पिप्पल्यां । श.च. ।

**विधानम्** । क्ली । व्यवस्थायाम् । जटा । (कम्) । व्यथायां श.र. । [वै.निघ ।

**विधानिका** । स्त्री । वृश्चयाम् । विकृतौ ।

**विधिः** । पुं । कल्पने । भेदे सु. । वैद्ये । रा.नि.व २० ।

**विधु** । पुं । कर्पूरे । मे ।

**विधुफल्गुज्वर** । पु । सन्निपातज्वरभेदे । लक्षण —"विधुफल्गू च तौ नाम्ना सन्निपातात् दारुणौ । श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति ।" भा. ।

**विधुरा** । स्त्री । कर्णपृष्ठाध स्ये जङ्घमुहुर्मर्मरये । तत्र च बाधिर्य्यम् । सु.शा.६ अ. । रसालायाम् । मे. ।

**विधुवन(ल)म्** । क्ली । कम्पने । जटा. । चम. ।

**विनता** । स्त्री । प्रमेहपिडकाभेदे । लक्षण —"महती पिडका नीला पिडका विनता स्मृता ।" सु.नि ६ अ. ।

**विनटः** । पु । सप्तपर्णवृक्षे । श.च. ।

**विनमनम्** । क्ली । नम्रीकरणे । सु.सू.७ अ. ।

**विनम्र(क)म्** । क्ली । तगरपुष्पे । रा.नि.व.१ ।

**विनया** । स्त्री । वाट्यालके । टेलेण्डा । वै. ।

**विनसः** । त्रि । नासाहीने । जटा. ।

**विनाशः** । पु । अदर्शने शरीरस्य नाशे । भा.म. ३ भ. ।

**विनाशहा** । स्त्री । निर्व्विषिकाकन्दे । रा.नि.व ७ । [ध्वंसने । जटा. ।

**विनागः** । पु । नाशे । चम । (क) त्रि । म

**विनाशोन्मुखम्** । क्ली । पक्वे । चम ।

**विनासिका** । स्त्री । अग्निप्रकृतिकीटभेदे । सु.कल्प ८अ. ।

**विनिपात:** । पुं । दैवादिव्यसने । मे. ।

**विनीत:** । पुं । दमनकवृक्षे । दना । रा नि. व १० ।

**विनीय:** । पुं । कल्के । र.मा. ।

**विन्दु:** । पु । परिमाणभेदे । जलकणायां । अम. । भ्रुवोर्मध्यभागे । मे. ।

**विन्दुचित्रक:** । पुं । मृगविशेषे । श.र. ।

**विन्दुपत्र:** । पुं । भूर्जवृक्षे । रा.नि.व.९ ।

**विन्दुराजि:** । पु । राजिमत्सर्पविशेषे । सु कल्प.४अ. ।

**विन्दुरेखक:** । पुं । पक्षिविशेषे । श च. ।

**विन्दुल:** । पु । अग्निप्रकृतिकीटविशेषे । सु क-ल्प.८अ. । ১৪৮ कीट. ।

**विन्दुवासर:** । पु । गर्भे सन्तानोत्पत्तिकरशुक्रपातदिने । ज्योतिषम् । [श.च. ।

**विन्ध्यपत्री** । स्त्री । बिल्वपत्राटी । বেলগুঁটা।

**विन्ध्यजात:** । पु । विभीतकवृक्षे । वै.निघ. ।

**विन्ध्यवासियोग:** । पु । राजयक्ष्माधिकारि योग. । पाठ.—"व्योषं शतावरी चौषध फलानि द्वे पले तथा । सर्व्वामयहरो योग. सोऽयं लौहर सोऽन्वित. ..... ।" अत्र सर्व्वचूर्णसमं लौहम् । ত্রিকটু, শতমূলী, ত্রিফলা, বেলেডা, শ্বেত বেলেড়া প্রত্যেক ১ তো. লোহ ৯ তো. একত্র মাড়িবে । रस.र. ।

**विन्ध्या** । स्त्री । लवलीवृक्षे । নোয়াড় গাছ । अ । एलायाम् । वै च. ।

**विन्याक:** । पुं । सप्तपर्णवृक्षे । श.च. ।

**विपत्ति:** । स्त्री । विपदि । अम ।

**विपदापहा** । स्त्री । वनकुलत्थे । वै.निघ. ।

**विपथ:** । पुं । सर्पे । मे. ।

**विपरीतमल्लतैलम्** । क्ली । शारीरव्रणाय-विकारे तैलम् । पाठ.—"सिन्दूरहिङ्गुविषकुष्ठर-सोनविषवायविड्ङ्गभिल्लक.विषकतैलम् । म-न्दाग्नितप्तमुत्क्रतसूर्यपक्व' क्षिप्रव्रणप्रशमनो वि-परीतमल्ल. .. ।" चित्रको रक्तचित्रक: । वा यादि शरपुङ्खामूल । जलं चतुर्गुणम् । तैल ४ श. । कल्क. श. १ प. ।

**विपर्णक:** । पु । पलाशवृक्षे । श.च. ।

**विपर्य्यय:** । पु । "यदयत्राभिहित तस्य प्राति-लाम्यम् ।" सु.उ.६५अ. । व्यतिक्रमे । अम ।

**विपाक:** । पुं । स्वेदे । पाचने । मे. । द्रव्यभ-क्षणानन्तर पाके सति माधुर्य्यादिपरिणामे । "जा-ठरेणाग्निना योगादयदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृत. । मिष्ट. पटुश्च मधुरमम्लोऽम्ल पच्यते रस. । कटुतिक्तकषायाणां पाक. स्यात् प्रायश कटु' ।" इति । तेषु मधुर-विपाकस्य श्लेष्मकारिता, अम्लपाकस्य पित्तकारिता वातश्लेष्मरोगघ्नता, कटुपाकस्य वातकफपित्तनाशि ता च । भा. ।

**विपाण्डु:** । पुं । वनजकर्कट्याम् । वै.निघ. ।

**विपाण्डुरा** । स्त्री । महामेदायाम् । प मु. ।

**विपादिका** । स्त्री । पादस्फोटरोगे । रा.नि. व.१० । पादगतक्षुद्रकुष्ठभेदे । तल्लक्षण—"कण्डू-मती दाहरुजोपपन्ना, विपादिका पादगतैयमे व ।" सु नि.५अ. । See पादस्फोट. । [व.५ ।

**विपादी** । स्त्री । हंसपादीलतायाम् । रा नि.

**विपाशा** । स्त्री । भारतीयनदीविशेषे । रा.नि. व.४ ।

**विपिनद्रु:** । पुं । कालशाके । वै.निघ. ।

**विपिनस्थप:** । पुं' । आरग्वधवृक्षे । সোঁদাল গাছ । "विपिनस्थपदघ्नोऽयं. ।" रस.र.ज्व.चि. ।

**विपुलरस:** । पुं । इक्षौ । कोषाम्रम् ।

**विपुल(ला)स्रवा** । स्त्री । गन्धकन्यायाम् । घृतकुमारी । रा नि व.५ । [नि.व.४ ।

**विपुषा** । स्त्री । हबुषायाम् । হবুষ ফল । रा.

**विपूय:** । पुं । रक्तपूयतायाम् । भा.म कुष्ठचि. । मुञ्जवृक्षे । व्याक. ।

**विप्र:** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ । शि-रीषवृक्षे । वै निघ. । ऋषौ । त्रिका. ।

**विप्रकाष्ठम्** । क्ली । तूलकाष्ठे । रा.नि.व.९ ।

**विप्रकृष्टः** । त्रि । दूरे । इला. ।

**विप्रतिपत्तिः** । स्त्री । अन्यभाविन्ले । सु.मू. ३१४. । विरोधे ।

**विप्रत्ययः** । पुं । कार्य्याकार्य्यहिताहितज्ञभाय-मिव विपरीताभिनिवेशे । च.शा ५ष. ।

**विप्रदुहः** । पुं । फलमूलादिग्रन्थद्रव्ये । अ ष. ।

**विप्रप्रियः** । पुं । पलाशवृक्षे । रा.नि.व.११ ।

**विप्रलम्बी (लोभी)** (इन्) । पुं । देवदर्वुर-के, किङ्किरातवृक्षे । सँटी । रा.नि.व.१० ।

**विप्लुता** । स्त्री । योनिरोगविशेषे । लक्षणं यथा —"......योनिः विप्लुताख्या लभावमात् । सञ्जा-तकण्डुः कण्डूला कण्डा चातिरतिप्रिया ॥" मा.उ. ३१ष. ।

**विफलः** । पुं । बन्ध्याकर्कोटिकायाम् । वै.निघ. ।

**विफला** । स्त्री । कैतकयाम् । रा.नि.व.१० ।

**विबहः** । पुं । पुन्नागवृक्षे । वै.निघ. ।

**विबन्धः** । पुं । आनाहरोगे । रा.नि.व.२० ।

**विबन्धबन्धः** । पुं । पक्वोदरोः स्वयम्बन्धनवि-शेषे । "विबन्धो विविधो बन्ध इति लक्षणम् ।" सु. । उ. ।

**विबन्धवर्त्तिः** । स्त्री । अन्नस शूलरोगभेदे । "मोनृतभेदयः पुरीषन्तु सानाहः शूलपीडितः···· ···।" ग.द.४३ष. ।

**विभाकरः** । पुं । चित्रकवृक्षे । চিতাগাছ । अर्कवृक्षे । আকন্দ গাছ । अम. ।

**विभाण्डिका** । स्त्री । आढ्यक्षुपे । अश्वाह-लो । वै.निघ. ।

**विभाण्डी** । स्त्री । आवर्त्तकीलतायाम् । रा. नि.व.३ । नीलापराजितायाम् । वै.निघ. ।

**विभावरी** । स्त्री । हरिद्रायाम् । रा.नि.व.६ । मेदायां । र.मा. । रात्री । अम. ।

**विभावरीयुगम्** । क्ली । हरिद्रादारुहरिद्र-योः । भा.१भ.ज्व.चि. । "विशालकर्दविभावरीयुग-वरा ।"

**विभावसुः** । पुं । चित्रकवृक्षे । अर्कवृक्षे । कै. । अग्नौ । सूर्य्ये । अम. । चन्द्रे । हे.च. ।

**विभीतकः (की)** । पु, स्त्री । (Terminalia belerica.) Beleric myrobalan. वृक्षविशेषे । বহেড়া গাছ । हिं बहेडे, तिनाय । मैरा, बहेड़ा । म. बेहाड़ा । कं तांड़े । तें तांड़े-चेट्ट । ता. तनि तण्डि, तोण्डि । गुणाः—कटुः तिक्तः कषाय उष्णः कफघ्नः चक्षुष्यः पलितघ्नः विपाके मधुरः लघुय । बैभीतको मदकरः कफ-मारुतनाशनः । सु.सू.४६ष. । विभीतफलं—स्वा-दुपाकं कषायं कफपित्तघ्नम् उष्णवीर्य्यं हिमस्पर्शं भेदनं कासघ्नं रूक्षं नेत्रकेशप्रसादनं क्रिमिस्वरता-हरश्च । तन्मज्ज—तृष्णाच्छर्दिकफवातघ्नाल्पकं लघु कषायं मदकारि च । भा.पू १भ. । विभीतक-फलोत्थतैलगुणाः—स्वादु हिमं केश्यं गुरु पित्ता-निलपीडाघ्नञ्च । रा.नि.व.१५ । मधुरं मधुरवी-र्यविपाकं वातपित्तशमनं शीतवीर्य्यम् कफिष्-न्दि स्नुतविशूलम् अपिमादमयेति । सु.सू.४५ष. ।

**विभीषणः** । पुं । नलवृक्षे । নলগাছ । रा. नि.व.८ ।

**विभ्रंशः** । पुं । शरीरस्तम्भे । च.सू.१६ ष. ।

**विभ्रमः** । पुं । भ्रान्ती । मा नि. ।

**विमर्द्दः** । पुं । चक्रमर्द्दक्षुपे । চাকন্দা । रा. नि.व.४ । कासमर्द्दक्षुपे । কালকাসুন্দা । र.मा. ।

**विमर्द्दकः** । पुं । चक्रमर्द्दक्षुपे । रा.नि.व.४ । घृतसुरुकाल्लितद्रव्ये । वा.उ.२८ ष. ।

**विमलम्** । क्ली । पद्मकाष्ठे । रौप्ये । सेश्वल-वृक्षे । वै.निघ. । रौप्यमाक्षिके । रा.नि.व ११ । त्रि । निर्म्मले । वै.निघ. ।

**विमलजाता** । स्त्री । सावित्रिन द्रवीहलस-ज्ञारी । থওাদির রস । इयं मध्वरिष्टकादिष-टुक्ता । सु.सू.४५ष. । [रा.नि.व.१३ ।

**विमलमणिः** । पुं । कर्पूरमणौ । স্ফটিক ।

**विमला** । स्त्री । रूप्यमाक्षिके । प.मु. । See तारमाक्षिकम् । सातलायाम् । वै.निघ. । विम-लमणी । वै निघ.२भ अप.चि. । নীলপাদী । গোলমন্ত্রাদি দিব । दारुमोच इति यथा प्रसि-द्धिः । तच्छुद्धिः—"जम्बीरक रसे विपत्ता दकारी-क्षेन वा पचेत् ।" विमला शुद्धिमायाति दोषाद-भेद निश्चितम् । सा.कौ. ।

**विमलाशनः** । पुं । व्रीहिभेदे । र.मा. ।

**विमानः** । पु । घोटके । मे. ।

**विम्बम्** । क्लो । बिम्बीफले । তেলাকুচার ফল। र.मा । पुं । ककलासे । কাঁকলাস । मे ।

**विम्बकम्** । क्ली । बिम्बीफले । তেলাকুচা । अ र. । [अ र. ।

**विम्बजा** । स्त्री । बिम्बीलतायां । তেলাকুচা ।

**विम्बटः** । पुं । सर्षपभेदे । भ.च. ।

**विम्बा (म्बि[म्बी]का)** । स्त्री । बिम्बयाम् । তেলাকুচা । रा.नि व.३ । वा.सू.१५च. । सु.सू ४६च. । [रा.नि.व.१८ ।

**विम्बिनी** । स्त्री । नेत्रकनीनिकायाम् । তারা।

**विम्बी** । स्त्री । शालिधान्यविशेषे रा.नि व.१६। बिम्बिकायाम् । তেলাকুচা । च.सू वमन. । सु. सू.३८च. । कुन्दुरिकायाम् । सु.सू.३८ च. ।

**विम्बुः** । स्त्री । गुवाके । कश्चित् ।

**विम्लापनम्** । अङ्गुल्यादिविमर्दनेन शोथवि लायने । सु चि.१च. ।

**वियद्वारी (रिन्)** । पु । चिल्लपक्षिणि । চীল পাখী । अ.मा. ।

**वियोगी (गिन्)** । पु। चक्रवाकपक्षिणि । अ च।

**वियोनिः** । त्रि । विरुद्धयोनौ । सु.नि.१२च. ।

**विरङ्गम्** । क्लो । कङ्गुष्ठे । रा.नि व.१३ । वि लङ्गे । प.मु. ।

**विरजाः** । त्रि । विगतार्तवायाम् । जटा. ।

**विरला** । स्त्री । दूर्वायाम् । धारा. । नवविर लायाम् । भैष.वाजी पञ्चशरतैले । कपित्थाख्यौ षधे । र.मा. ।

**विरटः** । पु । तिलकवृक्षे । वै.निघ. ।

**विरणम्** । क्लो । वीरणमूले । বেণারমূল। प. मु. । रस.र.वा.व्या.चि गन्धराजतैले ।

**विरदा** । स्त्री । घनकस्थायाम् । कश्चित् ।

**विरलम्** । क्लो । पातलदधनि । रा.नि.व.१३।

**विरलद्रवा** । स्त्री । विरलद्रवयवाग्वाम् । अम।

**विरसा** । स्त्री । तिन्दुकाम् । "कोशीबदम्बवि रसा ।" वा.सू.१५च.यवीधादौ । क्षयविहति । वै.निघ. ।

**विरा** । स्त्री । मद्ये । रा.नि.व १४ ।

**विराटकम्** । क्लो । कालमाषाख्ये । চুণক । र.सा.स. ।

**विराटजः** । पुं । राजपट्टमणौ । त्रिका. ।

**विरान्तकः** । पु । अर्जुनवृक्षे । वै.निघ. ।

**विराध(धा)नम्** । क्लो । पीडायाम् । अ.र.।

**विराजः** । पु । विडाले । भ.टी. ।

**विरुक्** । पुं । ईशामणौ । रा.नि व.१८ ।

**विरुद्धम्** । त्रि। देशकालप्रकृतिसंयोगविपरीते ।

**विरुद्धता** । स्त्री । विरुद्ध नाम यत् दृष्टानसि- द्धान्तसमयैर्विपरीतम् । च.वि.८च. ।

**विरुद्धा(ध्य)शनम्** । क्ली । विरुद्धभोजने । "क्षीरमत्स्यादि यद्युक्तं तद्विरुद्धाशनं मतम् ।" योगर.च सा चि.। "विरुद्धाध्यशनाजीर्णं ।" विरु द्धभोजनजरोगा यथा—"षण्ढान्ध्यवीसर्पदकोदरा- णां विस्फोटकोन्मादभगन्दराणां । मूर्च्छामदाध्मा नगलग्रहाणां पाण्ड्वामयस्यामविषस्य चैव । किला- सकुष्ठग्रहणीगदानां शोथातिसारज्वरपीनसानां । सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम् । विरुद्धाहारजनितरोगान् हन्ति विरेच- नम् । वमनं शमनं वापि ..... ।" राज.१प. ।

**विरूढः** । त्रि । अङ्कुरिते । मे. । च.सू.१८च. ।

**विरूढकम्** । क्लो । अङ्कुरितधान्ये । वै.निघ. ।

**विरूढधाना** । स्त्री । अङ्कुरितयवे । दरवत्र अङ्कुर । गुणौ—गुरु. पुष्टिकरी च । च सू.२७च.।

**विरूपम्** । क्लो । पिप्पलीमूले । रा नि.व ६ । स्त्री (पा) । दुरालभायाम् । रा.नि.व.४ । धवनि- काराम् । धानाकुन्दै । कृष्णातिविषायाम् । रा. नि.व ६ ।

**विरूपाक्षः** । पुं । ग्रहस्य दुष्टग्रहभेदे । "वि- रूपाक्षगृहीते तु कम्प. स्वेदश्च जायते ।" ज.द. १०च. । [टो । रा.नि.व १२ ।

**विरूपी (पिन्)** । पुं । जाहके । [illegible]

**विरूक्षणम्** । क्लो । रूक्षीकरणे । वा सू ११च.।

**विरेकः** । पुं । कर्पूरे । वै.निघ. । विरेचने । জোলাপ । मा.नि. । मलभेदे । श.र. ।

**विरेकी (इन्)** । पु । कम्पिल्लके । वै निघ. ।

**विरेचकः** । त्रि । विरेककारिणि ।

**विरेचनम्** । क्ली । विरेके, मलभेदे । জোলাপ । सर्व्वाण्येव विरेचनद्रव्याणि भूवारिगुणभूयिष्ठानि भूवारिणौ गुरुत्वादधोगच्छन्ति । तानि च द्रव्याणि त्रिवृताश्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाक्षीच्छगलान्त्रीस्नुकसुवर्णक्षीरीचित्रक-किणिहीकुशकाशतिल्वककाम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकविभीतकनीलिनीचतुरङ्गुलैरण्डपूतीकमहावृक्षसप्तच्छदार्कज्योतिष्मत्यश्चेति । सु.सू. ३९अ. । तानि च षट् भवन्ति क्षीररसकल्कक्षायशृतशीतचूर्णभेदेन । तानि यथोत्तर लघूनि । सु.सू ४४अ । "विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि पृथिव्यापो गुर्व्व्यः गुरुत्वादधो गच्छन्ति तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात् ।' सु.सू. ४१अ. । तत्पान स्निग्धस्विन्नवान्ता । तल्लक्षणा — 'बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनातिदीप्तिम् । चिराच्च पाकं वयसः करोति विरेचनं सम्यगुपास्यमानम् ॥" सु. । तस्य मात्रा यथा—"मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तकः । वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगकैः । द्विपलं श्रेष्ठमाख्यातं मध्यमञ्च पलं भवेत् । पलार्द्धञ्च कषायाणां कनीयस्तु विरेचनम् ॥" अन्यच्च —"पलन्तु श्रेष्ठमाख्यातं मध्यन्त्वर्द्धपलं भवेत् । कर्षमात्रं कनीयः स्यात् ज्ञेयं श्रेष्ठाद्यपेक्षया ॥" चक्रसेनः । "वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥" इति । तन्निषेध —"बालवृद्धनवज्वरितक्षतप्रसूतादयो न विरेच्या जीर्णज्वरिप्रभृतयो विरेच्याः । शरदि वसन्ते च पाचनैरामबलार्थं स्निग्धस्य स्विन्ने स्निग्धस्य च स्वेदैर्विरेकः कार्य्यः ॥" प.प्र.४ख. ।

**विरेचनः** । पु । पीलुवृक्षे । रा.नि.व.११ । घृतकरञ्जे । रा.नि.व.९ ।

**विरेचनफलः** । पुं । पीलुवृक्षे । वै.निघ. ।

**विरेचनोपयोगि** । त्रि । विरेचके । च. ।

**विरोचनः** । पु । पदुम्लिम्बश्योणाकवृक्षे । শোণাপাঠা । घृतकरञ्जे । रा.नि.व.९ । रोहितकवृक्षे । রোহা গাছ । रा.नि.व.८ । अर्कवृक्षे । আকন্দ গাছ । केचित् ।

**विलः** । पु । वेतसवृक्षे । श.च. ।

**विलकारी (इन्)** । पुं । मूषिके । रा.नि.व १९ ।

**विलम्बिका** । स्त्री । तन्नामकविषूचिकाभेदे । तल्लक्षण—"दुष्टञ्च भुक्तं कफमारुताभ्यां प्रवर्त्तते नोर्द्ध्वमधश्च यस्य । विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः ॥" मा.नि. ।

**विलम्बी (इन्)** । पु । सद्यौवधे । मत्स्यविशेषे । गुणा —वातकर पित्तकर कफकरश्च । अत्रि. २२अ. ।

**विलयः** । पु । विद्रापणे । वा उ.११अ. ।

**विलया** । स्त्री । बलायाम् । र.मा. ।

**विलवासः** । पुं । आड़कमत्स्ये । কাল গিরগিটে । रा नि.व.१९ ।

**विलवासी (इन्)** । पु । सर्पे । श र. ।

**विलालः** । पु । विडाले । श टी. ।

**विलासिनी** । स्त्री । हरिद्रायाम् । रा.नि.व. ६ । शङ्खपुष्प्याम् । वै.निघ. । [चित् । वै.निघ. ।

**विलिखा** । स्त्री । मत्स्यभेदे । इल्लीश इति क-

**विलेपः (नम्)** । पु, क्ली । सुगन्धलेपनद्रव्ये । अम. ।

**विलेपनी** । स्त्री । यवाग्वाम् । যাউ । मे. ।

**विलेपी** । स्त्री । यवागूविशेषे । যাউবিশেষ । अम. । सं सिक्थद्रवा । चतुर्गुणवारिसिद्धविरलद्रवयवाग्वाम् । "विलेपीमुचिताञ्चाथ चतुर्थीमप्यनल्पां वदेत् ।" सु चि १८अ । "चतुर्गुणजले सिद्धा विलेपी विरलद्रवा ।" प सु. । तण्डुलपिष्टका सम्यक् चतुर्वारिसाध्या यवागू ज्ञेया । "विलेपी विरलद्रवा ।" च.द.ज्व.चि. । "बहुभक्ता विलेपी ।" रा. नि.व.२० । "विलेपी तु चतुर्गुणे ।" "विलेपी च घना सिक्थे सिद्धा नीरे चतुर्गुणे ।" गुणा. —"विलेपी तर्पणी हृद्या मधुरा पित्तनाशिनी ।" प प्र १ख. । "विलेपी दीपनी हृद्या हृद्या क्षुधा हिक्का मधु । ग्रहाणिर्दाहिनी पथ्या तर्पणी हृद् ज्वरापहा । चामदग्धहरा स्वादु दीपनी बलपु-

टिकृत् ।" वै.निघ. । "विलेपी तर्पणी लघ्वी या हिणी च नृपापहा ।" राज.१प. । अन्या यथा — "कृता च षड्गुणे तोये विलेपी भाष्टतण्डुलैः । सा चाग्निदीपनी लघ्वी हिना मूर्च्छाज्वरापहा ॥" वै. निघ. ।

विलेप्य: । पुं । यवाग्वाम् । अ.र. । स्त्री । विलेप्याम् । "पेयां विलेप्यामकृतम्" । च.द.वमने ।

विलेशायी (इन्) । पुं । सर्पे । अ.र ।

विलेशय: । पुं । विलवासिनि अहिनकुलगन्ध गाधादिमृगे । गुणा —"विलेशया वातहरा मधुरा रसपाकयोः । बृंहणा बद्धविण्मूत्रा वीर्य्योष्णा अपि कीर्त्तिता ॥" भा. । तन्मांसं श्वासवातकास हर पित्तदाहकरञ्च । रा.नि.व.१७ । कोकडनामकविलेशयमृगे । रा.नि.व.१९ । अन्ये विलेशया ये तु कोकडोन्दुरिकादय । तेषाञ्च गर्हितं मांस मान्यगौरवदुर्जरम् ॥ प सु. ।

विलोचनम् । क्ली । नेत्रे । रा.नि व.१८ ।

विलोटक: । पुं । वल्लीगड्मत्स्ये । (बेलेमाछ । ग च । [अवेदनाविशेषे । सु.मू.२२अ. ।

विलोड़नम् । क्ली । आलोडने । वायुमन्थन-

विलोड़ितम् । क्ली । पादजलेन विभागदधिकृते तक्रे । रा.नि.व.१५ ।

विलोम: । पुं । कुक्कुरे । सर्पे । मे. ।

विलोमी । स्त्री । आमलक्यां । मे. । [अ.र. ।

विल्लम् । क्ली । हिङ्गौ । प.मु. । हिङ्गौ । हिः ।

विल्लकम् । क्ली । विये । प.मु. ।

विल्लमूला । स्त्री । वाराहीकन्दे । अ.च. ।

विल्वम् । क्ली । विल्वफले । मे. । विल्वशलाटौ । (बेलशुँठ । च.द.अतीसा.चि.कलिङ्गाद्यगुटिका. । पर्य्य । ८ नी । अ.मा । प.म. ।

विल्व: । पुं । (Ægle marmelos.) स्वनामख्यातवृक्षे । (बेलगाछ । हिं बेल । मं बेल, बिल्व । कं बेलवल । ते मारेडु । ता. विल्व । गुणा:—मधुरः कषः पित्तघ्न, गुरुः कषायः कफ ज्वरातिसारघ्नः रुचिकृत् दीपनश्च । विल्वमूल — त्रिदोषघ्नं मधुरं लघु वातघ्नञ्च । कोमलपत्र — स्निग्धं गुरु संग्राहि दीपनञ्च । पक्व पत्र -गुरु मधुरं कटुतिक्तकषायोष्णं संग्राहि त्रिदोषघ्नञ्च । रा.नि.व.११ । "फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् । विल्वादन्यत्र विज्ञेयमामं तद्धि गुणाधिकम् । द्राक्षाविल्वशिवादीनां फलं शुष्कं गुणाधिकम् ॥" भा आम्र ।

विल्वजा । स्त्री । शालिधान्यविशेषे । सा च मागधीगुणैस्तुल्या । "विल्वजा मागधी पीता सा माव्याक्ता गुणागुणे । रुचिकृद्बलकृन्मूत्रदोषघ्नी च श्रमापहा ॥" अत्रि १५अ. ।

विल्वतैलम् । क्ली । कर्णरोगाधिकारे तैलम् । "फलं विल्वस्य मूत्रेण पिष्टा तैलं विपाचयेत् । एतत्कन्कमदायैव बाधिर्य्ये परमौषधम् ॥" रस.र. ।

विल्वपत्रम् । क्ली । विल्वदले । (बेलपाता । रस.र.ग्रहणीकपाटरसे । [मु.२०अ ।

विल्वपर्णी । स्त्री । वातघ्नपत्रशाकविशेषे । च.

विल्वपेशि(षि)का (शी) । स्त्री । विल्वमज्जायां, विल्वशलाटौ । (बेलशुँठ । वा.मृ.१५ अ. । चि.४अ. । गुणा.—"कफवातामशूलघ्नी ग्राहिणी विल्वपेशिका ।" राज.१प. ।

विल्वमध्यम् । क्ली । विल्वमध्ये । (बेलशुँठ । सु.चि.१८अ. ।

विल्वा । स्त्री । हिङ्गुपत्र्याम् । रा.नि.व.६ ।

विल्वादिकषाय: । पु । विल्वादिपञ्चमूलैः गुडूच्यामलकधान्यकैश कृते कषाये । स वातज्वरे हित. । च.द वा.ज्व चि. । "विल्वादिपञ्चमूलीय-गुडूच्यामलकैः तथा ।"

विल्वान्तर: । पुं । कण्टकिवृक्षविशेषे, कौराल्यवीरतरौ । तें वेल्लृबचेट्टु । आद्भ्रदेशे नर्म्मदातटे अर्बुदगिरिसमीपे च । तद्यथा वचते —"विल्वान्तरो भवति वीरतरुः प्रसिद्धः श्वेतासिताद्विविधोहितपीतपुष्पः । स्वाम्लातिगुप्तकुसुमः प्रतिसूक्ष्मपत्रः स्यात् कण्टकी विशददैर्घ्य एव वृक्षः ॥" इति कुल्वयः । सु.मू.१अ।३८अ. । सु.चि.११अ. । "वीरतरुः शरीरालः ।" वा.मृ. ११अ. । गुणा —कटुकः पाचिवः पथ्य, वातनीतघ्न. शश्मिदनाशश्च । रा.नि.व.८ । "विल्वान्तरो रसे पाके तिक्तरूक्षः कफापहः । मूत्राघातानिलान् हन्ति दो "मूत्रानिलञ्चहृत् ॥" भा. ।

**विवर्णत्वम्** । क्ली । म्लानगात्रत्वे । मा.नि. ।

**विवर्त्तनम्** । क्ली । कर्णशष्पी. निष्काशयितु मिष्टस्य कर्णलग्नस्य पुनर्विवर्त्तनरूपयन्त्रकर्म्मणि । यन्त्रस्य कर्णान्तरेव भ्रमणकर्म्मणि । सु सू ७अ. ।

**विवर्त्तित:** । त्रि । परिवर्त्तिते । भा. ।

**विवर्त्तितसन्धि:** । पुं । सन्धिमुक्तभग्नरोगविशेषे । "विवर्त्तिते तु सन्धिपार्श्वापगमनादिषमाङ्गता वेदना च ।" सु.नि १५अ ।

**विवर्द्धनम्** । क्ली । घृते । वै.निघ. । [भम ।

**विवस्वान्** । पुं । अर्कवृक्षे । आकन्द गाछ ।

**विविधविषापहा** । स्त्री । निर्विषीवृक्षे । वै निघ ।

**विवृता (त्ता)** । स्त्री । क्षुद्ररोगभेदे । लक्षण —"विवृतास्या महादाहां पक्वोदुम्बरसन्निभाम् । विवृतामिव तां विद्यात्पित्तोत्था परिमण्डलाम् ॥" सु नि १३अ ।

**विवृताक्ष:** । पुं । स्थलचरपक्षिविशेषे । कुक्-डा । विका. । गुणा:—"विवृताक्षस्त्रिदोषघ्नो व-स्य: शुक्रविवर्द्धन" ।" चचि.२१अ. ।

**विशम्** । क्ली । शौर्य्ये । वै.निघ. । मृणाले । च टी.रा । सु.चि.११अ. । पु । मनुष्ये ।

**विशदम्** । क्ली । कासीसे । शिवेकम् । वै. निघ । स्त्री (दा) । हृदयाम् । मद- ।

**विशर्द्धनम्** । क्ली । गुदे कुत्सितशब्दकरणे । वायुत्याग । सु नि २अ. ।

**विशल्यकरणी** । स्त्री । औषधिविशेषे । विशल्ये. आग्रापान । रामायणम् ।

**विशल्यकृत** । पुं । भूपलाशे, चाल्कीतके । हा-पड़माली । र मा. ।

**विशल्या** । स्त्री । गुडूच्याम् । रा.नि.व.३ । विकङ्कतवृक्षे । वैँचि गाछ । लाङ्गलिकायाम् । विषलाङ्गलिका । रा.नि.व.४ । वा.सू १५ अ.अर्का दिव. । उ.३८अ । शाकभेदे । दन्तिवृक्षे । चम. । च.द.विषाधिकारे । त्रिवृतायाम् । तेउड़ी । पाटलायाम् । पारुल । सु चि.१८अ. । च द. विषाधिकारे । नागदन्त्यां । हातिशुँड़े । रमा । त्रिपुटायाम् । मे. । अजमोदायां । रा.नि.व ६ ।

**विशाकर:** । पुं । हस्तिदन्त्याम् । रा.नि.व ६ । हस्तिशुण्डाम् । हातिशुँड़े । प.मु । पाटलावृक्षे । पारुल गाछ । भा.म.४भ गर्भ चि. । भद्र-चूड़वृक्षे । लङ्काशिज् । म घ. ।

**विशाख:** । पुं । पुनर्नवायाम् । श्वेत पुर्णा । रा.नि.व.५ । स्कन्दापस्मारे । सु.उ.२७अ. ।

**विशाखग्रह:** । पुं । बिल्ववृक्षे । बेल गाछ । वै.निघ. । [गाछ । म.ध. ।

**विशाखज:** । पुं । नागरङ्गवृक्षे । टाबा लेबु

**विशाखपत्र:** । पुं । बालरोगभेदे । निदा. ।

**विशाखा (खिका)** । स्त्री । श्वेतरक्तपुनर्नवायाम् । वै.निघ.२अ.वा.व्या.चि.षड्शीतिगुग्गुलौ । कृष्णापराजितायाम् । वै.निघ. । कठिल्लकवृक्षे । मे । तन्नामनक्षत्रे । चम. ।

**विशारद:** । पुं । वकुलवृक्षे । रा.नि व.१० । स्त्री (दा) । क्षुद्रदुरालभायाम् । रा.नि व.४ । कपिकच्छ्वां । वै.निघ. । [मृगविशेषे । अ.ट. ।

**विशाल:** । पुं । वृक्षविशेषे । पक्षिभेदे । मे ।

**विशालतैलगर्भ:** । पुं । चाङ्कोटवृक्षे । आँकोड़ गाछ । रा.नि.व.८ ।

**विशालत्वक्** । पु । सप्तपर्णवृक्षे । प.मु. ।

**विशालपत्र:** । पुं । श्रीतालवृक्षे । रा.नि.व. ८ । मार्षे । मानकचु । प मु. । [नि.व.७ ।

**विशालफलिका** । स्त्री । निष्पाव्यां । रा.

**विशाला** । स्त्री । इन्द्रवारुणीलतायाम् । राखालशशा, मासानड़ी । रा.नि.व.१ । भा.म.४भ. ज्वरी.चि, चर्म चि.पथ्यादिगुडे । वै.निघ.ज्व. चि.त्रायिंशाडे । इन्द्रवारुणीफले । वा.सू.१५अ । महेन्द्रवारुणीलतायाम् । माकाल गाछ । वै नि-घ.जीर्ण.ज्व.चि.कल्याणघृते । उपोदकाम् । पुँ-ई गाछ । रा.नि.व.१ । सुरामांस्याम् । शाकभेदे । ब्राह्मगिरा । वै.निघ. । गोरक्षकर्कट्याम् । राखालकाँकड़ी । च.द.पाण्डु.चि. । उष्णा चि. ।

**विशालाक्षी** । स्त्री । नागदन्त्याम् । रा.नि. व.५ । [रा.नि.व ६ ।

**विशाली** । स्त्री । अजमोदायाम् । राङ्नी ।

**विशिखः** । पुं । शरपत्रे । रा.नि.व.१८ । स्त्री (खा) । अश्वमार्गे । सु.सू.१०अ । कर्मार्गे । सु.सू.१०अ. ।

**विशिखपुङ्खा** । स्त्री । शरपुङ्खायाम् । भा.म. ४भ. । "सैतया विशिखपुङ्खया सह ।" चि.क.क बन्ध्याप्रतीकारे ।

**विशिष्टः** । पु । श्रीवके । वै.निघ. । [द्वारा. ।

**विशिष्टपत्रः** । पुं । ग्रन्थिपर्णवृक्षे । গেঁটেলা ।

**विशीर्णपत्रः (र्णः)** । पुं । निम्बवृक्षे । निम् गाछ । रा नि.व.८ ।

**विशेषः** । पुं । आश्रयी: प्रकृतिविकारयो: प्रकृतिनिरुद्धयोश्च असामान्यदर्शने । च.शा.५अ. । पृथकत्वकृत्ते । व्यावृत्तबुद्धिकृत्ते । च.सू.१अ ।

**विशेषकः** । पुं । तिलकवृक्षे । তিলগাছ । रा. नि.व १० ।

**विशोकः** । पुं । अशोकवृक्षे । रा नि व.१० ।

**विशोध(धि)नी** । स्त्री । नागवल्लीलतायाम् । नीलीवृक्षे । वै.निघ. । नागदन्त्या । হাতিশুঁড়ে । रा नि.व.५ । दन्तिवृक्षे । দন্তীগাছ । रा नि व.६ ।

**विशोधनीवीजम्** । क्ली । जैपालवीजे । वै द्यकम् ।

**विश्रामः** । पुं । आयासाद्यपाये । गुणाः— "विश्रामो बलकृत् खेदश्रमनुत् स्वाच्छ्यदः शुभः ।" राज.१ष ।

**विश्लिष्टसन्धिः** । पु । अस्थिभङ्गविशेषे, सन्धिमुक्तभग्नरोगविशेषे । यथा —"विश्लिष्टेऽल्पशोफो वेदनासातत्यं सन्धिविक्रिया च ।" सु.नि.१५अ । See भङ्गम् । [सु.सू.२२अ. । पृथक्करणे ।

**विश्लेषणम्** । क्ली । वायुजन्यव्रणवेदनायाम् ।

**विश्वम्** । क्ली । शुण्ठ्याम् । শুঁট् । बोलनामक द्रव्ये । নিশাদল । रा.नि.व.६ । वै.निघ.,२भ, ज्व.चि विश्वादिकषाये । परिमाणभेदे । "विश्वं विश्वपलं मौतम् ।" शब्दकल्प ज्योतिष्मती ।

**विश्वकद्रुः** । पुं । मृगयानिपुणकुकुरे । अम. ।

**विश्वका** । स्त्री । गङ्गाचिल्ल्याः । গাঃ চিল । द्वारा. । [नः

**विश्वकर्षिना** । स्त्री । वियदुलतायाम् । कवि

**विश्वगन्धम्** । क्ली । बोलनामगन्धद्रव्ये । নিশাদল । रा.नि.व,६ । पुं । पलाण्डौ । रा.नि.व. ७ । स्त्री (न्धा) । पृथिव्याम् । श.च. ।

**विश्वग्रन्थिः** । स्त्री । हंसपादीलतायाम् । रक्तलज्जालुकायाम् । रा.नि.व.५ ।

**विश्वग्वायुः** । पुं । सर्वतोगामिवायौ । এলো মেলো বাতাস । गुणाः—"विश्वग्वायुरनायुष्यः प्राणिनां नैकदोषकृत् । सर्वर्त्तुलिङ्गको ह्यस्तु प्रक्लेष्मातपर सरः ॥" राज ।

**विश्वजा** । स्त्री। शुण्ठ्याम् सा.कौ.वा ज्व.चि.।

**विश्वतुलसी** । स्त्री । (Ocymum basilicum. Syn. Pilosum.) Common sweet basil तुलसीभेदे, मधुरतुलसी । বাবুই তুলসী । दा हि सबजा । ते रुद्रजेड । ता तिरुनिकु । पञ्जा बबरि । बम्. बाराहतुलसी ।-गुणा.—बीजं शीतल । क्वाथ. मेहघ्न उदरामयघ्न. रक्तातिसारघ्न । पत्ररस. क्रमिघ्नः सर्पदंशे हितः । कथित् ।

**विश्व(श्वे)देवा** । स्त्री । गौरवतण्डुलायाम् । গোবকচাকুনিয়া । अटा । रा.नि.व.४ । सु.सू. ३८अ । गाङ्गेरुकीति पूर्वदेशे, अन्ये सितकुसुमां वलाम् । सु.चि.८अ. । नागबलायाम् । र.मा. । रक्तकुसुमदण्डोत्पलायाम् । र मा. । च वि.८अ. ।

**विश्वपर्णी** । स्त्री । भूम्यामलक्याम् । ভুঁই আমলা । रा.नि.व.५ ।

**विश्वभेषजम्** । क्ली । शुण्ठ्याम् । শুঁট । भा.म.१भ. । रा.नि व.६ । च.द.वातपित्त.ज्व.चि.य-वभद्रे । "किरात विश्वभेषजम् ।"

**विश्वम्भरः** । पुं । कीटविशेषे । सु.कल्प. ८अ. । See कीटः । स्त्री (रा) । भूनिम्बे । চিরেতা । भा.म.१भ.ज्वरातिसा.चि. । "विश्वम्भरा निम्बविषाः ।"

**विश्वरूपकम्** । क्ली । कृष्णागुरुणि । रा.नि.व. १२ । पुं । राजादनवृक्षे । ক্ষীরিণী গাছ । वै. निघ. ।

**विश्वरोचनः** । पुं । पैनुकै । कचू ।। त्रिका. ।

**विश्ववर्णा** । स्त्री । भूम्यामलक्याम् । ভুঁই আমলা । वै.निघ. ।

**विश्वसारकम्** । क्ली । विदरवृक्षे । फनि मनसा । श.च । [नि.व ४ ।

**विश्वस्था** । स्त्री । शतावर्य्याम् । शतमूली । रा.

**विश्वा** । स्त्री । शतावर्य्याम । शतमूली शु ण्ठ्याम् । शुंठि अतिविषायाम् । रा.नि.व.६।२३। शल्लिन्यां वै निघ ।

**विश्वाख्या** । स्त्री । शतावर्य्यां । रा.नि व ४ ।

**विश्वाची** । स्त्री । तन्नामकवातव्याधौ । लक्षण — "तल प्रत्यङ्गुलीना या कण्डरा बाहुपृष्ठत । बाह्वोः कर्म्मक्षयकरी विश्वाचीति हि सोच्यते ॥" भा नि. । सु नि.१अ । 'दशमूली बला माषक्वाथ तैलाज्यमिश्रित । साय भुक्त्वा चरन्नस्य विश्वाच्याम रबाहुक ॥"

**विश्वादि** । पु । कषायविशेषे । "विश्वाम्बुप पर्पटोशीरघनचन्दनसाधितम् । दद्यात सुशीतल वारि तृट्छर्दिज्वरदाहनुत ॥" च द पि ज्व चि ।

**विश्वामित्रप्रिय.** । पु । नारिकेलवृक्षे । श.र ।

**विश्वाह्वा** । स्त्री । शुण्ठ्यां । वै स बाहुशालगुडे ।

**विश्वोर:** । पु । रक्तार्के । र.मा. ।

**विश्वोषधम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ ।

**विषम्** । क्ली । जले । रा.नि व १४ । पु, क्ली । वत्सनाभे । काष्ठविषे । रा नि व.१२ । बोले । रा.नि व.६ । पद्मकेशरे । अ.टी. । स्वनामख्याते जीवितप्रद्रव्यमात्रे । विष, तच्च द्विविध – स्थावर जङ्गमञ्चाकृत्रिम विषम् । गरसञ्ज्ञक कृत्रिम नाम । तत्र स्थावर पञ्चपञ्चाशद्विध, । जङ्गममसङ्ख्य मिति । विशेषा. स्वस्वपर्य्याये द्रष्टव्या । सामान्यत. तस्योत्पत्त्यादि—"प्रजामिमानामर्थार्निमानीन्द्र स्र जन किल । अकर दसुरो विघ्न कैटभो नाम द र्पित । तत क्रुद्धस्य वै ब्रह्मादन्नाग्नस्तेजसो नि धि: । क्रोधो विग्रहवान् भूत्वा निपपाताथ दारु- णः । स तं ददाह गर्ज्जन्तमन्तकाभ महाबलम् । ततोऽसुर घातयित्वा ततेजोऽवर्द्धताद्भुतं । ततो वि- षाद देवानामभवत्तं निरीक्ष्य वै । विषादजनन त्वाच्च विषमित्यभिधीयते । तत सृष्टा प्रजा: शेषं तदा तं क्रोधमीश्वर । विन्यस्तवान् स भूतेषु स्था- वरेषु चरेषु च ॥' सु.कल्प.३अ. । भा. गुणा.— विषं हि नाम निखिलरसायनानामग्रगण्यमखिल व्याधिविध्वंसविधायकतामासादयति । रस चि । "विष प्राणहर प्रोक्त व्यवाय च विकाशि च । आग्नेय वातकफहृत् योगवाहि मदावहम् । तदेव युक्तियुक्तन्तु प्राणदाय रसायनम् । योगवाहि वि दोषघ्न बृहण वीर्य्यवर्द्धनम् । ये दुर्गुणा विषेऽशुद्धे ते स्युर्हीना विशोधनात् । तस्माद्विषम्प्रयोगेषु शोधयित्वा प्रयोजयेत् ॥" भा. । तीक्ष्णोष्णरूक्षाविशदं व्यवा- य्याशुकर लघु । विकाशि सूक्ष्ममव्यक्तरस विषम- पाकि च ओजसो विपरीत तत् तीक्ष्णाद्यैरन्वित गुणै । वातपित्तोत्तर नृणा सद्यो हरति जीवि तम् । विष हि देह सप्राप्य प्रागदूषयति शोणि तम् । कफपित्तानिलाश्चानु सम दोषान् सहाश याने । ततो हृदयमास्थाय देहोच्छेदाय कल्प ते ।' वा उ.३५अ । तच्छोधन यथा— 'गोमूत्रे त्रिदिन स्थाप्य विष तेन विशुध्यति । तद्भेदा — कालकूट हालाहल ब्रह्मपुत्र वत्सनाभ हारिद्रक स क्तुक प्रदीपन सौर। ष्ट्रक शृङ्गकेषु । 'महाकूट सुतो सालूक योगगन्ध मद्याभ दुग्धमोनीति षट । तता नरि शृङ्गी कालकूट सुस्तक वत्सनाभ शङ्खकर्णाभी ति पञ्च महाविषाणि । स्नुहीकरवीरार्कलाङ्गली विषमुष्टीनीति उपविषाणि ।

**विषकङ्का(ङ्को)लिका (ली)** । स्त्री । वृ- क्षविशेषे । विषतिन्दुका । नकुल.१६अ. ।

**विषकण्ट:** । पु । इङ्गुदीवृक्षे । रा.नि.व.८ ।

**विषकण्टक:** । पु । यासक्षुपे । इङ्गुदीवृक्षे । रा.नि.व.४ । [व्याककोटिकायाम् । रा.नि.व ए।

**विषकण्टका (किनी, की)** । स्त्री । व-

**विषकण्टालिका (ली)** । स्त्री । विषक ण्टालीति प्रसिद्धवृक्षे । र.सा.स.स्वच्छन्दभैरवरसे ।

**विषकण्ठी** । स्त्री । बलाकायां । रा नि व.१८।

**विषकन्द:** । पुं । गन्धिपकन्दे । नीलकन्दे । रा.नि.व.७ । इङ्गुदीवृक्षे । वै.निघ. ।

**विषगन्धक:** । पुं । श्वेतसुगन्धवृक्षे । वै.निघ.।

**विषगन्धा** । स्त्री । अश्वगोकर्ण्याम् । काल अ- पराजित । वै.निघ. । [च.चि.बलादघृते ।

**विषग्रन्थि:** । पुं । तृणाग्रपर्व्वणि । च.द.प-

**विषघ्ना** । स्त्री । गुडूच्याम् । श.च. ।

**विषघाती (इन्)** । पुं । शिरीषवृक्षे । श.मा.।

**सर्ज.** । पुं । शालनिर्यासे । धुनो । भ.च.द ज्व चि.अपराजिताधूपे । 'पुरध्यामवचासर्ज ।" शालवृक्षे । सर्जरक इति भाषा । शल्लकीवृक्षे । वै. निघ. । पीतशालि । পেয়াশাল । श र ।

**सर्जक.** । पु । सर्जवृक्षे । শাল গাছ । कटा । असनवृक्षे । वै निघ. सर्जरसे । धुनो । रस.र. वात.चि. । पीतशालि । পেয়াশাল । अम. ।

**सर्जगन्धा** । स्त्री । रास्नायाम् । र.मा. ।

**सर्जनामा (न)** । पु । सर्जतरौ । सु चि.३५ ।

**सर्जमणिः** । पुं । शाल्मलीवेष्टे । মোচরস । त्रिका. ।

**सर्जरसः** । पु । रासे । धुना । रा.नि.व १२ । सु सू.३८ अ एलादि । See राल । सर्जवृक्षे । ধুনোর গাছ । रा.नि व ८ । र मा । भा ४अ रैवतीप्रतिषेधचि । "कुष्टे सर्जरसे तथा ।"

**सर्जशालः** । पुं । शालवृक्षे । र मा. ।

**सर्जाख्यः (ह्वः)** । पु । सर्जरसे । धुनो । भैष च्छर्दी चि. । भा.म.४अ ।

**सर्जिः (क्षार)** । स्त्री, पुं । स्वर्जिकाक्षारे । সাজিমাটী । र.मा । See स्वर्जिक्षार ।

**सर्जिका (क्षारः)** । स्त्री, पु । सर्जिक्षारे । সাজিমাটী । र.मा. ।

**सर्जी** । स्त्री । सर्जिक्षारे । সাজিমাটী । प.मु. ।

**सर्ज्य.** । पुं । सर्जरसे । धुनो । र.मा. ।

**सर्प.** । पु । प्रसिद्धसरीसृपे । সাপ । सर्पो द्विविध —दिव्यो भौमश्चेति । तत्र दिव्या सर्पा दृष्टिनि श्वासविषा इति । भौमा दंष्ट्राविषा । "ये तु दंष्ट्राविषा भौमा ये दशन्ति च मानुषान् । तेषां संख्यां प्रवक्ष्यामि यथावदनुपूर्व्वश । अशीतिस्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा । दर्वीकरा मण्डलिनो राजिमन्तस्तथैव च । निर्विषा वैकरञ्जाश्च त्रिविधास्ते पुन स्मृता । दर्वीकरा मण्डलिनो राजिमन्तश्च पन्नगा. । तेषु दर्वीकरा ज्ञेया विंशति षट् च पन्नगाः । द्वाविंशतिर्मण्डलिनो राजिमन्तस्तथा दश । निर्व्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा । वैकरञ्जोद्भवा सप्त चित्रामण्डलिराजिला ।" एषु महानेत्रजिह्वास्यशिरस पुमांसः, सूक्ष्मनेत्रजिह्वास्यशिरस स्त्रिय, उभयलक्षणमन्दविषा अक्रोधा नपुंसका इति । सु कल्प.४अ । एषां लक्षणानि स्वस्वपर्य्याये मन्तव्यानि । तद्गुणा — अर्शोवातदोषहर कृमिदूषीविषहर. चक्षुष्य पाके मधुर मेधाग्निजननश्च । 'दर्वीकरा दीपकाश्च ते युक्ता कटुपाकिन । मधुराश्चातिचक्षुष्या सृष्टविण्मूत्रमारुता ॥' सु सू.४६अ । तद्विषगुणा — "विशिष्टाद्रुक्षकटुकमम्लोष्णं स्वादु शीतलम् । विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् । तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च । विषोल्वणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु ॥' वा उ.३६अ ।

**सर्पकङ्कालिका (ली)** । स्त्री । स्वनामख्यातलतायाम् । सर्पकङ्काली, वनाक्राङ्गाविशेष । र.मा । गन्धरास्नायाम् । प.मु. । See रास्ना ।

**सर्पगन्धा (न्धिनी)** । स्त्री । गन्धरास्नायाम् । See रास्ना । नाकुलीनाममहाकन्दशाके । रा.नि. व.७ । वा.उ.३५अ । नागदमन्यां । वै.निघ ।

**सर्पघाति** । स्त्री । तन्नामकफलविषभेदे । सु. कल्प २अ. । See फलविषम् । [डनि । प मु ।

**सर्पघातिनी** । स्त्री । सर्पाक्ष्याम् । পানশি

**सर्पच्छत्रक:** । पु । शाकविशेषे । সাপের ছাতা । गुणा —मलभेदन रूक्ष. मधुर. शीत विषघ्नो च । च.सू २७ अ. ।

**सर्पतृणः** । पु । नकुले । নেউল । है.च. ।

**सर्पदंष्ट्रः** । पुं । दन्तीवृक्षे । म च. ।

**सर्पदंष्ट्रा (ष्ट्री)** । स्त्री । वृश्चिकाल्याम् । विछाति । प मु. । सिंहपिप्पल्याम् । गुणा —मारका उष्णा कटु कफघ्नी वातघ्नी च । वै निघं ।

**सर्पदंष्ट्रिका** । स्त्री । मेषशृङ्ग्यां । अजशृङ्ग्यां । মেড়াশিঙে । रा.नि व ८ । [रा नि.व ६ ।

**सर्पदण्डा (न्ता)** । स्त्री । सिंहपिप्पल्याम् ।

**सर्पदण्डी** । स्त्री । गोरक्षदुग्धायाम् । গোরক্ষচাকুলিয়া । रा.नि.व.५ । [रा नि व ५ ।

**सर्पदन्ती** । स्त्री । नागदन्त्यां । হাতিশুঁড়ে ।

**सर्पदमनी** । स्त्री । नागदन्त्याम् । হাতিশুঁড়ে । वन्ध्याकर्कोटिकायां । रा नि व.३ ।

**सर्पदष्टकम्** । क्ली । सर्पदंशने । तत्र निर्दिष्ट

सर्पितं रदितं निर्व्विषचेति। केचित् चतुर्थं सर्पाङ्गाभिहतमिच्छन्ति। तेषां लक्षणानि यथा—"पदानि यत्र दन्तानामेकं द्वे वा बहूनि च। निमग्नान्यरक्तानि यान्युद्वृत्य करोति हि। चञ्चुमालकयुक्तानि वैकल्यकरणानि च। सश्लिष्टानि सशोफानि विद्यात्तत् सर्पितं भिषक् ॥" इति। "राज्यः सलोहिता यत्र नीलाः पीताः सितास्तथा। विज्ञेयं रदितं तत्तु ज्ञेयमल्पविषञ्च तत् ॥" इति। "अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः। पदं पदानि वा विद्यादविषं तच्चिकित्सकः ॥" इति। "सर्पस्पृष्टस्य भीरोर्हि भयेन कुपितोऽनिलः। कस्यचित् कुरुते शोफं सर्पाङ्गाभिहतन्तु तम् ॥" सु. कल्प.४अ.। वाभटस्तु तुण्डाहतव्यालीढव्यालुप्तदष्टनिपीडितदष्टकभेदेन पञ्चधाह। एषु प्रथम द्वयं निर्व्विषं, निपीडितदष्टकम् असाध्यं व्यालुप्तदष्टकञ्च कृच्छ्रसाध्यम्। एषां लक्षणानि स्वस्वपर्य्याये द्रष्टव्यानि। वा.उ.३६अ.।

**सर्पनामा।** स्त्री। सर्पाक्ष्याम्। सर्पकङ्कालीविशेष, पानशिउली। प.मु.।

**सर्पनिर्मोकः।** पुं। सर्पत्वचि। सापेर खोलोस। च.शा.८अ.।

**सर्पनेत्रा।** स्त्री। सुगन्धरास्नायां। सर्पाक्ष्यां। पानशिउली, सर्पकङ्कालीविशेष। रा.नि.व.७।

**सर्पपुष्पी।** स्त्री। वन्ध्याकर्कोटक्याम्। नागदन्त्याम्। हातिशुँड़े। रा.नि.व.५।

**सर्पप्रियः।** पुं। चन्दनवृक्षे। वै.निघ.।

**सर्पफेण(न)म्।** क्ली। अहिफेने। वै.निघ २भ.च.सा.चि जातीफलादिपुटपाके। [च.।

**सर्पभक्षकः।** पुं। नाकुलीकन्दे। मयूरे। हे.

**सर्पभुक्।** पुं। मयूरे। हे.च.। गरुडे। दाड़गिला। नाकुलीकन्दे। रा.नि.व.७।

**सर्पमाला।** स्त्री। सर्पकङ्कालिकाभेदे। र.मा.।

**सर्पलता।** स्त्री। नागवल्लीलतायाम्। पानगाछ। रा.नि.व.३।

**सर्पलोचना।** स्त्री। सर्पाक्ष्याम्। पानशिउली। का.उ.१०अ.। गन्धरास्नायाम्। वै.निघ.।

**सर्पविषम्।** क्ली। सर्पगरले। सापेर विष।

"विषमाहिंस्रमप्राप्य रक्तं दूषयते वपुः। रक्तमस्वल्पं तु प्राप्तं वर्द्धते तैलमम्बुवत् ॥" वा.उ.३६अ.।

**सर्पसहा।** स्त्री। सर्पाक्ष्यां। पानशिउली। प.मु.। [वै.निघ.।

**सर्पसुगन्धा (न्धिका)।** स्त्री। सर्पगन्धायां।

**सर्पहा (न्)।** पुं। नकुले। वेजि। हे च।

**सर्पा।** स्त्री। तन्नामकौषधी। या च सर्पाकारा सर्पकङ्कालिका। च.चि.१अ.।

**सर्पाख्यः।** पुं। नागकेशरवृक्षे। र.मा.। महिषकन्दे। रा.नि.व.७। श्वेतालुके। शाँक् आलु। वै.निघ.।

**सर्पाङ्गी।** स्त्री। सैंहलीपिप्पल्याम्। रा.नि.व.६। सर्पकङ्कालीभेदे। पानशिउली। र.मा.।

**सर्पादनी।** स्त्री। लाङ्गलिकानामकन्दशाके। नाकुल्या। गरुडवाम्। रा नि.व.७।

**सर्पारिः।** पुं। नकुले। मयूरे। रा.नि.व.१८।

**सर्पावासम्।** क्ली। श्रीखण्डचन्दने। रा.नि.व.११। श्वेतचन्दने। रा.नि.व.१२।

**सर्पाशनः।** पुं। मयूरे। हला.।

**सर्पाक्षी।** स्त्री। सर्पसहायाम्। पानशिउली। हिं सरहची गण्डिनी। प.मु.। र.सा.सं। वै.निघ.२भ.एकाहिक.ज्व.चि.मृतसञ्जीवनीरसे। र.स.र.विष.चि.। गुणा.—"सर्पाक्षी कटुका तिक्ता कोष्णा कृमिनिकृन्तनी। वृश्चिकोन्दुरसर्पाणां विषघ्नी व्रणरोपणी ॥" भा.गु.व.। श्वेतापराजितायां। रक्तशङ्खिन्याम्। वै निघ.। गन्धनाकुल्याम्। रा.नि.व.७।

**सर्पिः (स्)।** क्ली। दुग्धसम्भूतस्नेहे। घृते। वि। रा.नि.व.१५। सृप गतौ संस्कारात् सर्पणात् सर्पिः। "नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते। यथा सर्पिस्तरं सर्पिः सर्व्वस्नेहोत्तमं मतम् ॥" सि.यो.वा.व्या चि.श्रीकण्ठः।

**सर्पिका।** स्त्री। गोकर्णीलतायां। वै.निघ.।

**सर्पिणी।** स्त्री। सर्पाकारक्षुपविशेषे। सर्पकङ्काली। गुणाः—विषघ्नी कृमिवर्द्धिनी च। रा.नि.व ५। सर्पस्त्रियां। अ र.।

**सर्पिर्गर्भम्।** क्ली। नवनीतके। वै.

**सर्व्वलोहम्** । क्ली । ताम्रे । वै.निघ. ।

**सर्व्ववर्चसम्** । क्ली । ताम्रे । वै.निघ. ।

**सर्व्ववर्णिका** । स्त्री । गाम्भारीवृक्षे । जटा. ।

**सर्व्वश्वेता** । स्त्री । सर्वपिडकानामप्राणहरकीटविशेषे । सु.कल्प.८अ. । See कीट ।

**सर्व्वसंसर्गलवणम्** । क्ली । औषरलवणे । रा.नि.व.६ ।

**सर्व्वसङ्गतः** । पुं । चिपटङ्किधान्यविशेषे, ष[ष्टिकधान्ये । श.च.]

**सर्व्वसरः** । पुं । तन्नामकमुखरोगे । स वातपित्तकफशोणितनिमित्तः । तत्र वातजे वदनस्तोदस्फोटैः समन्ताद्व्याप्तं भवति । पित्तजे मुखं रक्तपीतसदाहतनुस्फोटाचितं भवति । कफेनाल्परुक्कण्डूयुतैः सवर्णैर्व्याप्तं भवति । रक्तजे च पित्तवच्च भवति । सु.नि.१६अ. ।

**सर्व्वसहः** । पुं । गुग्गुलौ । प.मु. ।

**सर्व्वसाधनम्** । क्ली । स्वर्णे । वै.निघ. ।

**सर्व्वसिद्धिः** । पुं । श्रीफले । বেল । श.च. ।

**सर्व्वस्नेहः** । पुं । चतु.स्नेहेषु । चि.यो.वा.व्या.चि.शाल्वणस्वेदे । See स्नेहचतुष्टयम् ।

**सर्व्वहितम्** । क्ली । मरिचे । रा.नि.व.६ ।

**सर्व्वक्षारः** । पुं । क्षारविशेषे । সাবান । साबुन इति लोके । सबुखार इति दाक्षिणात्ये । गुणाः—अतिक्षारः चसुप्थः वस्तिशोधन गुदावर्त्तक्रमिघ्नः मलमूत्रविशोधनश्च । रा.नि.व.६ । मुष्ककवृक्षे । घण्टापारुले । वै.निघ ।

**सर्व्वाख्यः** । पुं । पारदे । পারা । रस.कौ. । भैष.वा.र.चि.द्वादशायसे ।

**सर्व्वाङ्गकम्पारिरसः** । पुं । वातव्याध्यधिकारे रसः । पाठ.—"मृतं सूतं मृतं ताम्रं मर्दयेत् कटुकद्रवैः । एकविंशतिवारश्च शोष्यं पेष्यं पुनः पुनः । चणमात्रा वटी भक्ष्या...... ।" रस र. ।

**सर्व्वाङ्गसुन्दरः** । पुं । रसोऽयं विरेचनाधिकारोक्तः । पाठः—"शुद्धसूतञ्च गन्धञ्च विषञ्च जयपालकम् । कटुत्रयञ्च त्रिफला टङ्कणञ्च समांशकम् ।" मात्रा १ गुञ्जामिता । পারা, গন্ধক, বিষ, জয়পালবীজ, ত্রিকটু, ত্রিফলা, সোহাগার খৈ প্রত্যেকে সমভাগ। মাত্রা ১ রতি । र.सा.सं. । अन्य. कासाधिकारे यक्ष्माधिकारे च—"रसगन्धकतुल्यांशौ द्वौ भागौ टङ्कणस्य च । मौक्तिकं विद्रुमं शङ्खं मारणीयं प्रयत्नतः । हेमभस्माद्र्धभागञ्च सर्व्वं खल्वे निधापयेत् । निम्बद्रवस्य योगेन पिण्डिका कारयेद्भिषक् । पश्चाद्गजपुटं दद्यात्स्वाङ्गशीतलञ्च समुद्धरेत् । हेमभस्मसमं तीक्ष्णं तीक्ष्णाद्र्धं दरदो मतः । एकीकृत्य समस्तानि सूक्ष्मचूर्णानि कारयेत् ... ।" নীবসরূপে সোহাগার খৈ করিয়া উত্তমরূপে তাহা চূর্ণ করত সেই খই ২ তো. পারা ১ তো. গন্ধক ১ তো. মুক্তাভস্ম, প্রবালভস্ম, শঙ্খভস্ম প্রত্যেকে ২ তো. সোণা ॥০ তো. । একত্র নিমছালের রসে মাড়িয়া গোলক প্রস্তুতকরত সেই গোলক বদ্ধমূষায় রাখিয়া গজপুটে তীব্র জ্বালে পাক করিবে। শীতল হইলে তুলিয়া লৌহ ॥০ তো. ও হিঙ্গুল ।০ আনা দিয়া একত্র মাড়িয়া রাখিবে। মা০ ২ র। অনু. পিপুলচূর্ণ ও মধু । रस.कौ. । भैष. ।

**सर्व्वाङ्गसुन्दरी** । स्त्री । वैद्यकग्रन्थविशेषे ।

**सर्व्वानुकारिणी** । स्त्री । शालपर्णी । শালপাণি । रा.नि.व.४ । — [তেউড়ী । चम ।

**सर्व्वानुभूतिः** । स्त्री । श्वेतत्रिवृति । শ্বেত

**सर्व्वान्नीनः** । त्रि । सर्व्वान्नभक्षके । वा.चि.१ च. । "सर्व्वान्नीनो भवेत्तथा ।"

**सर्व्वायनी** । स्त्री । श्वेतत्रिवृतायां । वै.निघ. ।

**सर्व्वाम्लम्** । क्ली । सर्व्वविषप्रशस्ताम्लद्रव्येषु, काञ्जिकसुरासौवीरकदधिमस्त्वादिषु । चि.यो स्नेहस्वेदे ।

**सर्व्वार्घः** । पुं । रुद्राक्षवृक्षे । वै.निघ. ।

**सर्व्वाक्षिरोगः** । पुं । सर्व्वगतनेत्ररोगे । स षोडशविधः—वाताभिष्यन्द अधिमन्थः हताधिमन्थः अन्यतोवातः शिक्तनेत्रः पित्ताभिष्यन्द कफाभिष्यन्द रक्ताभिष्यन्द शुष्काक्षिपाकः शोथोपाक्षिपाकः अक्षिपाकात्ययः अम्लोषितः सन्निपाताभिष्यन्द वातपित्ताभिष्यन्दः वातकफाभिष्यन्दः पित्तश्लेष्माभिष्यन्दश्च । बं.उ.१५अ. । एषां विशेषाः स्वस्वपर्य्याये द्रष्टव्याः । See नेत्ररोग. ।

**सर्व्वाची** । स्त्री । दुग्धिकायां । थिकई । वै निघ. ।

**सर्व्वौषध(धि)गणः** । पुं । कुष्ठाद्यौषधिवर्गे । कुष्ठजटामांसीवचाहरिद्राशैलेयचन्दनमुरामांसीकर्पूरमुस्तास् । "कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः । मुराकर्पूरमुस्ताभिः सर्व्वौषधमुदाहृतम् ॥" रा.नि.व.२२ । "मुरामांसी वचा कुष्ठ शैलेय र जनीद्वय । शटी चम्पकमुस्तञ्च सर्व्वौषधिगणः स्मृतः ॥" ज्योति.शास्त्रम् ।

**सर्व्वौषधिः** । स्त्री । सर्व्वौषधिगणे ।

**सर्षपः** । पुं । (Brassica campestris Syn. Dinapis dichotoma.) स्वनामख्यात सक्षुपविशेषे । सरिषा शाक । हि सरीसा, सर्षों, जिरिया । गुणा.—रसपाकयो कटु स्निग्धः तिक्तः तीक्ष्णोष्णः वातकफघ्नः रक्तपित्ताग्निवर्द्धनः रक्षोघ्नः कण्डूकुष्ठकृमिघ्नश्च । गौरस्तु श्रेष्ठः । भा.पु. । तीक्ष्ण वातकफघ्न उष्ण रक्तपित्तकर कटुः कृमिकुष्ठघ्न । सिद्धार्थोऽपि तद्गुणः । राज । स सितासितभेदेन द्विधा । (Brassica nigra) The black mustard. कृष्णसर्षपे । काल सरिषा । हिं कालिराइ, माकड़ाराइ, सर्षों, पियरी सरीस । तें चवली । गुणाः—"...कटूष्णो वातशूलनुत् । पित्तदाहप्रदो गुल्मकण्डूकुष्ठव्रणापहः ॥" (Brassica juncea. Syn. Sinapis juncea.) राजिकायाम् । श्वेत सरिषा, ब्राइ सरिषा । हिं राजिका । गुणाः—"सिद्धार्थः कटुकोष्णश्च वातरक्तग्रहापहः । रूक्षो रक्तकफौ च यो विषभूतव्रणापहः ॥" सर्षपतैलगुणा.—तिक्तं कटुकं वातकफविकारघ्न पित्तासृग्दोषदं कृमिकुष्ठतिलगवपुघ्नञ्च । सर्षपशाकगुणा.—"सार्षपं भिन्नं स्वादु त्रिदोषरक्तपित्तकृत् ।" राज ३प. । "कटुकं रक्तपित्तप्रकोपकरं विदाहि कटुकं स्वादु विरुद्ध । रा.नि.व.७ । "सार्षपञ्च त्रिदोषघ्नं र वदचाग्निवर्द्धनम् ।" चवि.१६प. । "विदाहि हविष्मत् हृद्यं तीक्ष्णोष्णमिव च । त्रिदोषं सार्षपं शाकम् ..... ।" सु.सू.४६प. । सर्षपनालगुणा.—"तीक्ष्णोष्णं सार्षपं नाल वातघ्नमग्रवापहम् । कण्डूघ्नमिदं दद्रुघ्नं रुचिकारकम् ।" भा.पू १भ.ग्रा.व. । सर्षपविशेषे । रानि । हिं राइ । अस्य बीजं दीपनम् । पत्रं वातघ्नम् । Watts पञ्चरीच्यात्मकमाने । "पञ्चरीच्यत्मु सर्षपः ।" मागधमानमिदम् । प.प्र. । राजिकात्रयपरिमिते माने । "तिसृभीराजिकाभिश्च सर्षपः ।" कालिङ्गमानमेतत् । [च. । See कन्दविषम् ।

**सर्षपकः** । पुं । तन्नामकन्दविषे । सु.कल्प.२

**सर्षपतैलम्** । क्ली । सर्षपबीजोत्थतैले । See सर्षपः । [मिदम् । भा. । See सर्षप ।

**सर्षपनालम्** । क्ली । सर्षपदण्डे । नालशाक

**सर्षपा** । स्त्री । श्वेतसर्षपे । वै.निघ. ।

**सर्षपिकः** । पुं । प्राणहरकीटविशेषे । सु.कल्प ८ष. । See कीट. ।

**सर्षपिका** । स्त्री । शूकरोगभेदे । तल्लक्ष—"गौरसर्षपतुल्या तु शूकदुर्भग्नहेतुका । पिडका कफवाताभ्यां ज्ञेया सर्षपिका बुधैः ॥" सु नि.१४ ष. । तन्नामककीटभेदे । गलगोली श्वेतकृष्णराजिः रक्तमण्डला सर्वश्वेता सर्षपिका चेति । ताभिर्दष्टे सर्षपिकायाञ्चे दाहशोफक्लेदा भवन्ति । सर्षपिकया हृत्पीडातिसारश्च भवति । सु.कल्प ८ष. । मसूरिकाभेदे । "चतुर्थी सर्षपाकारा पीत सर्षपवर्णिनी । नाम्ना सर्षपिका ज्ञेयाऽत्यन्त्यसर्व विवर्जयेत् ॥" भा ।

**सर्षपी** । स्त्री । श्वेतसर्षपे । वै.निघ. । खञ्जरीटिकायां । शब्दच । त्रिका. ।

**सर्षपोद्भूतम्** । क्ली । श्वेतसर्षपे । वै.निघ ।

**सलम्** । क्ली । जले । च.टी.भ. । [प.सु ।

**सलटुकः** । पुं । हस्तिकर्णशाके । नटिया शाक ।

**सल्लपत्रम्** । क्ली । दारुशर्करायां । शारदिनि । वै.निघ. ।

**सलिलम्** । क्ली । जले । रा.नि.व.१४ ।

**सलिलकुन्तलः** । पुं, क्ली । शैवाले । त्रिका ।

**सलिलप्रष्ठः** । पुं । क्षत्रिय दर्भभेदे । तल्लक्ष यथा—"द्रवने सततं यस्तु दृश्यते नामतः । स्रावी कुष्ठतेन्द्रियं तस्यापि सलिलप्रष्ठः ।" च.४व. ।

**सलिलजम्** । क्ली । कमले । पद्म । श्रम. ।

सलिलधरः । पु । मुस्तायाम् । मूता । वै निघ २भ त्रिद्रकत्व चि. । [See भवद ।

सल्लकटुः । पु । प्रियालुवृक्षे । रा.नि.व.११ ।

सल्लकी (ल्ली) । स्त्री। (Boswellia thurifera.) Gum olibanum tree. स्वनाम ख्यातफलशाकलतायाम् । कुँदरुकी । शालविशेषे । यस्य निर्यास शिलारस इत्युच्यते । अगभ स्या, सालइ इति लोके । म सल्लकि । क तदि कु । यम्. शालइ । गुणा —तिक्तमधुरा कषाया ग्राहिणी कुष्ठरक्तकफवातार्शोव्रणदोषघ्नी च । रा नि.व.११ । वै निघ २भ.र.च सा.चि.सल्लक्यादि स्वरसे । सु सू.२५च. । [कल्प. ।

सवम् । क्ली । जले । जटा. । पुष्परसे । शब्द

सवनम् । क्ली । प्रसवे । शब्दकल्प ।

सवरम् । क्ली । जले । त्रिका. । [प सु. ।

सवररोध्रम् । क्ली । श्वेतरोध्रे । पाटियालोध।

सवर्णकरणम् । क्ली । विवर्णचतस्थानस्य देह समानवर्णकरणे । सु चि १च ।

सवहा । स्त्री । त्रिवृतायां । च.टी.भ ।

सविता (तृ) । पु । अर्कवृक्षे । आकन्दगाछ । रा.नि.व.१० ।

सवित्रम् । क्ली । प्रसवकरणे । व्याक. । स्त्री -(त्री) । धात्र्याम् । धाई । चवि. । [निघ ।

सविभालम् । क्ली । नखीनामगन्धद्रव्ये । वै

सवीर्य्या । स्त्री । शतावर्य्याम् । शतमूली । रा नि व.४ ।

सव्यम् । क्ली । वामकाये । अम. ।

सव्यभिचारम् । क्ली । सव्यभिचारं नाम यत् व्यभिचरत्, यथा—"भवेदिदमौषधमस्मिन् व्याधौ यौगिकमथवा नेति ।" च.वि ८च ।

सव्यसाची (इन्) । पुं । अर्ज्जुनवृक्षे । रा.नि. व ९ ।

सशल्यशुक्लः । पु । नेत्रकृष्णगतरोगभेदे । तस्य यथा—"निमग्नरूपं हि भवेत्तु कृष्णे सूच्येव विद्ध प्रतिभाति यद्वै । स्राव स्रवेदुष्णमतीव यच्च तत्स व्रणं शुक्रमुदाहरन्ति ।" सु.उ १च. ।

सशल्य. (ल्या) । पु, स्त्री । मद्गुरे । रा.नि व. १९ । नागदन्त्यां । हातिशुँडे । र.मा. । [६ ।

सशाकम् । क्ली । आर्द्रके । आदा । रा नि.व.

ससत्वा । स्त्री । गर्भवत्यां स्त्रियाम् । अ र. ।

ससिद्धः । पु । सर्ज्जवृक्षे । धुनोर गाछ । रा. नि व ८ । [धान । हे.च. ।

सस्यम् । क्ली । फले । अ.टी.भ । धान्यके ।

सस्यमारी (इन्) । पु । महामूषिके । धेड़े इन्दुर । रा नि व १९ ।

सस्यसंव(स)रः । पु । लघुशालवृक्षे । अम. । सल्लकीवृक्षे । वै निघ । [८ ।

सस्यसवरणः । पुं । अश्वकर्णशाले । रा.नि.व.

सहम् । क्ली । बले । मे । मार्गशीर्षमासे । हे च. । मांसलवणे । रा.नि व.६ ।

सहकारः । पु । अतिसौरभयुक्ते आम्रवृक्षे । प सु. । रा.नि व.११ । अम. ।

सहचरः । पु । झिण्टीक्षुपे । झाँटी गाछ । मे.। पीतझिण्ट्यां । पीतझाँटी । र.मा. । वा सू १५च. वेल्लन्तरादिव. । "गोकण्टकोल्कटसहाचरवाणका-श्म ।" नीलझिण्ट्यां । प सु । सु सू.३८अ सशी धने । [कण्टकशेलुवर्गे । सु सू ३८च उत्पल' ।

सहचरद्वयम् । क्ली । नीलपीतझिण्टीद्वये ।

सहचरा (री) । स्त्री । पीतझिण्ट्यां । र मा । वै निघ. सन्धिक.ज्व.चि वचादि । नीलझिण्ट्यां । प सु ।

सहजक्षति । क्ली । सुवर्णे । वै निघ. ।

सहजरस. । पुं । स्वरसे । रस वि ८च ।

सहण्डुकम् । क्ली। मांसकृतव्यञ्जनविशेषे । यथा—"छागादिमांस सुखण्डं कुट्टितं खण्डितं पुन । ग्रहमांसविधानेन पचेदेतत् सहण्डुकम् । सहण्डुक गुणयुक्तं ग्रहमासगुण स्मृतम् ।" भा. ।

सहदेवा (वी) । स्त्री । (Sonchus aruensis. Syn. S Orixensis.) बलायाम् । बेड़ेला । बनपावड़े । बन पालः । हिं सहदेवी बरी । मं सहदेवी । पद्मा. मारा । पीतपुष्पबलायाम् । काड़सोलि लोके । पीत बेड़ेला । मर्य्यालयाम् । नागबलायाम् । मे. । नीलपुष्पबला

याम् । सु.मू.३८ब । चि.८ब.। महाश्यामायाम् । গোবক্ষচাকুলিয়া। रा.नि.व.४ । भा सन्ततादि. ज्व.चि. । पीतदण्डोत्पलायां । পীত ডানকুনী । र.मा. । भैष ज्व.चि.पानीयभक्तवट्याम् । दण्डोत्पलायाम् । ডানকুনী । द्वि चित्रडी । च द. शूल.चि.एरण्डद्वादशके । च.वि.८ब. । प्रियङ्गौ । महानील्याम् । वै.निघ ।

**सहपानम्** । क्ली । एकत्रपाने । हे.च. ।

**सहभादली** । स्त्री । प्रसारण्याम् । गन्धभादलि । भैष आमवातचि.सैपे ।

**सहभोजनम्** । क्ली । एकत्रभोजने । अम. ।

**सहरसा** । स्त्री । मुद्गपर्ण्याम् । मुगानी । श. र ।

**सहसानुः** । पुं । मयूरे । उणा ।

**सहस्यः** । पुं । पौषे मासि । अम. । [व.८ ।

**सहस्रकाण्डा** । स्त्री । श्वेतदूर्व्वायां । रा.नि.

**सहस्रजित्** । स्त्री । कस्तूर्य्याम् । मृगनाभि । वै.निघ. ।

**सहस्रदंष्ट्रः** । पुं । महापाठीनमत्स्ये । বোয়াল মাছ, চিতল মাছ । अम. ।

**सहस्रदंष्ट्री (इन्)** । पुं । मत्स्यविशेषे । বোয়াল মাছ श.र. ।

**सहस्रधौतः** । त्रि । सहस्रवार क्षालिते घृतादौ । হাজার বার ধোওয়া ঘৃতাদি । वा चि.१ च. ।

**सहस्रनुत्** । पुं । अम्लवेतसे । भा.पू.१भ ।

**सहस्रपत्रम्** । क्ली । कमले । पद्म । रा.नि. व.१० । [व.८ ।

**सहस्रपर्व्वा** । स्त्री । श्वेतदूर्व्वायाम् । रा.नि.

**सहस्रपादः** । पुं । कारण्डवपक्षिणि । সারস পাখী । मे ।

**सहस्रभित्** । क्ली । अम्लवेतसे । भा. ।

**सहस्रमूली** । स्त्री । द्रवन्त्यां । रा.नि.व.४ । आखुकर्ण्याम् । মুষাকাণী । वै.निघ. । [श.र. ।

**सहस्ररसा** । स्त्री । मुद्गपर्ण्याम् । মুগানী ।

**सहस्रवीर्य्या** । स्त्री । दूर्व्वायां । र.मा. । च. चि.४च. । नीलदूर्व्वायां । च शा.८च. । महाशतावर्य्यां । रा.नि.व.४ । श्वेतदूर्व्वायां । रा.नि.व.८ च सू.४च. ।

**सहस्रवेध(धि)म्** । क्ली । चुक्रनामकाम्लद्रव्यभेदे । रा नि.व.१५ । हिङ्गुनि । হিঙ্ । मे. । भा. । [निघ.२भ मधुरत्व चि. ।

**सहस्रवेधपापाणः** । पु । हिङ्गुमतरे । वै.

**सहस्रवेधिका** । स्त्री । मृगनाभौ । वै निघ ।

**सहस्रवेधी (इन्)** । पु । अम्लवेतसे । हिङ्गुनि रा.नि व.६ । मृगमदे । मृगनाभि । रा.नि व.१२ । चुक्रे । टकपाल: । प.मु. ।

**सहस्रांघ्री**
**सहस्राङ्घ्री** } स्त्री । क्षुद्रपीलुवृक्षे । वै.निघ. ।

**सहस्रा (स्री)** । स्त्री । अम्बष्ठायां । आमडा । भा. । मयूरशिखायां । वै.निघ. ।

**सहाः (स)** । पु । हेमन्तकाले । मे.। अग्रहायणमासि । अम. स्त्री (हा) । घृतकुमार्य्यां । प मु । माषपर्ण्यां । माषाणी । च.द.बाल.चि.सहादिकाने । मुद्गपर्ण्यां । मुगानी । सु सू.३८ब. । सर्पकङ्कालिकायां । श च. । शृङ्खकिण्टकी । श.च. । राखायां । र.मा. । स्वर्णयोय्याम् । সোনালি । प मु. । पीतदण्डोत्पलायाम् । পীত ডানকুনী । र.मा. । तरणीपुष्पवृक्षे । रा.नि व.१० । देवताडवृक्षे । দেবতাড়া । रा.नि.व.२ । रैवतीपुष्पशाखी । भा.रैवतीयवृक्षि । "सहा विदारी सीतायाम्।" मत्समैषजि । মেহেদী । मे. ।

**सहाचरः** । पुं । नीलपीतझिण्ट्याम् । নীল ও পীতঝাঁটি । श.र. । वा.सू.१५ब. । "नीलश्रेणी-स्फटसहाचरवाणकाश ।" सु.चि.१०ब. ।

**सहाहयम्** । क्ली । मुद्गपर्णी माषपर्णी च । सु मधुरजीवनीयगणे ।

**सहारः** । पु । आम्रवृक्षे । उणा. ।

**सह्यम्** । क्ली । स्वास्थ्ये । सहिष्णुतायाम् । सुमधुरे । श.र. । [निघ. ।

**सह्योरा** । स्त्री । चोरिण्यौषधे । पियाडे । वै

**साकु(ख)रुण्डः** । पुं । मल्लमहल्लादौ । ধকুরুণ্ড ইতি প্রসিদ্ধে স্যাত । उणा — रुण्याद,

रुचिकरः दीपनः सारकः श्लेष्मवातघ्नः वस्त्रछेदनः उष्णश्च । रा.नि.व.६ । वै.निघ.२भ.श्व सा.चि.सा खरुखुचूर्णे ।

**सातुकम्** । क्ली । शकुनमूर्द्दे । यवे । व्याक. ।

**सागरकम्** । क्ली । सामुद्रलवणे । वै.निघ. ।

**सागरगामिनी** । स्त्री । सूक्ष्मैलायां । छोटि एलाच । रा.नि.व.६ ।

**सागरजम्** । क्ली । लवणे । वै.निघ. ।

**सागरजमलः** । पुं । समुद्रफेने । वै.निघ. ।

**सागरोत्थम्** । क्ली । सामुद्रलवणे । रा.नि.व. ६ ।

**सागरोद्भूतः** । पुं । शङ्खे । शाँख । वै.निघ. ।

**साङ्कृत्यः** । पुं । ऋषिविशेषे । च. ।

**साङ्कुष्ठा** । स्त्री । गुञ्जालतायाम् । र.मा. ।

**साङ्घातिकः** । त्रि । मारात्मके ।

**साचिवाटिका** । स्त्री । पुनर्नवायाम् । र.मा. ।

**साञ्जनः** । पुं । गृहगोधायाम् । कृकलासे । कांकलास । श.च. ।

**सातला** । स्त्री । पीतदुग्धस्नुहीभेदे । मनमा-विशेष । बम्. बडिलसीतुली को हिरियचटक नख । गुणाः- कफपित्तघ्नी लघु तिक्ता कषाया विसर्पकुष्ठविस्फोटव्रणघ्नी च । रा.नि.व.४ ।

**सातीलकः** । पुं । कलायभेदे । मटर । च. टीका ।

**सात्म्यम्** । क्ली । यद्यस्य सेवितं सुखाय सं-पद्यते तत्तस्य सात्म्यम् । तच्च द्विविधं चेष्टाख्यमा हाराख्यञ्च । चेष्टाख्यं कायवाङ्मनोभेदात्त्रिविधं, आहाराख्यञ्च रसभेदात् षड्विधम् । सु.सू.१०श्व ख. । औषधादिजनितसुखानुबन्धे, व्याधिगुणवि-परीते आहारविहारादौ । "हेतुव्याधिविपर्यस्त-विपर्यस्तार्थकारिणां । औषधान्नविहाराणामु-पयोगं सुखावहम् । विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतम् ॥" मा.नि. । सात्म्यं नाम तत् यदात्मन्युपशेते । तत्त्रिविधं प्रवरावरमध्यविभागेन । तत्र सर्वरसं प्रवरम् एकरसमवरं मध्यन्तु प्रवराव-रमध्यम् । च वि.१श्व ।

**सादः** । पुं । भवसादे । उपतापे । वै.निघ. ।

**सादनी** । स्त्री । कटुकायां । कट्की । रा.नि.व. ६ ।

**साद्रस्थः** । पुं । कुरङ्गभेदे । निका. ।

**साधकम्** । क्ली । तन्नामकपित्ते । भा. । See पित्तम् । पुं । तन्नामकहृदयस्थाग्नौ येन मनोऽभि-लाषः सिध्यति । सु.सू.२१श्व । दमनकवृक्षे । वै. निघ. । [जीवकवृक्षे । वै.निघ । द्रव्ये । श्वम ।

**साधनम्** । क्ली । शिश्ने । रा.नि.व.१७ । पुच्छ-

**साधारणदेशः** । पुं । जाङ्गलानूपोभयदेश-लक्षणयुक्ते प्रदेशे । लक्षणं-यथा—"उभयगुणयुक्तं वा नातिरुक्षं न स्निग्धं न च खरबहुलस्रोताभितः कण्टकाढ्यं । भवति च जलकीर्णे नाति शीतं न चोष्णं समप्रकृतिसमेतं विद्धि साधारणं च ॥" अत्रि. ४श्व. ।

**साधारणमृगः** । पुं । शूकरादौ, यथा—"शूकरा गवयश्चाद्याः सलिलाश्रयमाश्रिताः । म कराद्याश्च गण्डाका गवयाश्च तथापरे । महिषा-द्याश्च ये चैव ते च साधारणा मताः ॥" अत्रि. २०श्व. ।

**साधिका** । स्त्री । सुषुप्तौ । हे.च. ।

**साधुः (क.)** । पुं । दमनकवृक्षे । वै.निघ. । साधुवृक्षे । रा.नि.व.८ । [मा. ।

**साधुपुष्पम्** । क्ली । स्थलपद्मे । स्थलपद्म । श.

**साधुवृत्तः** । त्रि । हिताहारविहारकारिणि ।

**साधुवृक्षः** । पुं । कदम्बवृक्षे । कदम गाछ । श.च. । वरुणवृक्षे । वरुण गाछ । रा.नि.व.९ ।

**साध्वसम्** । क्ली । भये । श्वम. ।

**साध्वी** । स्त्री । मेदायां । रा.नि.व.५ । दुग्धपा-षाणे । मूलशक्ति । प.मु. ।

**सानन्दः** । पुं । गुच्छकरञ्जे । रा.नि.व.९ ।

**सानसिः** । पुं । सुवर्णे । वचा. ।

**सानुजः** । पुं । तुम्बुरुवृक्षे । रा.नि.व.११ । पुण्डरीकवृक्षे । पुण्ड्रिया गाछ । रा.नि.व.१२ ।

**सानुपाधनः** । त्रि । कालानुरूपानाहारे । च. सू.१श्व. । [गाछ । वै.निघ. ।

**सानुमानकः** । पुं । पुण्डरीकवृक्षे । पुण्ड्रिया

**सान्दृष्टिकम्** । क्ली। तात्कालिकफले । वै निघ.।

**सान्द्रम्** । क्ली। तक्रे । ঘোল । वै.निघ. ।

**सान्द्रपुष्पः** । पु । विभीतकवृक्षे । श.च. ।

**सान्द्रप्रसादमेहः (ही[इन्])** । पु । कफजमेहविशेषे । लक्षणं यथा—"यस्य मेहन्यते मूत्र किञ्चित्किञ्चित् प्रसीदति । सान्द्रप्रसादमेहीति तमाहु श्लेष्मकोपतः ॥" च.नि.४अ ।

**सान्द्रमेहः** । पुं । मेहरोगभेदे । घनाविल सान्द्रं मेहति । सु.नि.६अ. ।

**सान्ध्यकुसुमा** । स्त्री । त्रिसन्धिपुष्पवृक्षे । यस्य पुष्पं त्रिकालमेव विकसति । रा नि.व १० ।

**सान्नाय्यम्** । क्ली । घृते, हविषि । त्रिका. ।

**सान्निपातिकः** । पु । त्रिदोषजरोगे । रा. नि.व २१ । त्रि । त्रिदोषसम्बन्धिनि ।

**सान्निपातिकी** । स्त्री । सन्निपातजन्ययोनिरोगे । लक्षणम्—" . त्रिभिर्दोषैः योनिगर्भाशयाश्रितैः । यथास्वोपद्रवकरैर्व्यापत्सा सान्निपातिकी ॥" मा उ.३३अ. ।

**साब्दी** । स्त्री । द्राक्षाविशेषे । शब्दकल्प: ।

**सामजः (योनिः)** । पुं । गजे । मे ।

**सामत्रयम्** । क्ली । हरीतकी शुण्ठी गुडूचीषु । वै निघ. ।

**सामवातः** । पुं । आमयुक्तवातरोगे । लक्षण—"वायु सामो विबन्धाग्निसादतन्द्रान्त्रकूजनैः । वेदनाशोथनिस्तोदैः क्रमशोऽङ्गानि पीडयेत् ॥" भा ।

**सामान्यम्** । क्ली । एकत्वबुद्धिकरजातौ । यदनेकासु भिन्नदेशकालासु गवादिव्यक्तिषु अयं गौरयं गौरित्यादिप्रकारा एकाकारा बुद्धिः तत् सामान्यम् । च.सू १अ. ।

**सामुद्गकः** । पुं । सम्पुटे । वा.उ.२८अ ।

**सामुद्गसन्धिः** । पु । शरीरावयवसन्धिषु । अंसपीठगुदभगनितम्बेषु सन्धौ । सु.शा ५अ. ।

**सामुद्रम्** । क्ली । समुद्रजलवणे । করকচ, পাঙা । হি পাংগা । गुणा —लघु हृद्यं पलितजनकं पित्तकरं दीपनं रुच्यञ्च । रा.नि.व.६ । समुद्रफेने । रस.र.ग्रहण्यादिचूर्णे । नारिकेली । द्वीपान्तरवचायां । তোপচিনি । वै निघ. । पु । मत्स्यकविशेषे । सु.कल्प.८अ. ।

**सामुद्रमत्स्यः** । पुं । तिमितिमिङ्गिलकुलिशपाकमत्स्यादिषु । तन्मांसगुणा —गुरु स्निग्धं मधुरं नातिपित्तलं वातहरमुष्णं वृष्यं श्लेष्मवर्द्धनञ्च । सु.सू.४६अ. ।

**सामुद्राद्यचूर्णम्** । क्ली । उदराधिकारे चूर्णम् । সামুদ্রিলবণ, সচললবণ, সৈন্ধবলবণ, বনযমানী, যবক্ষার, বিড়ঙ্গ, হিঙ্গু.পিপুল, চিতামূল, শুঁট, প্রত্যেকে চূর্ণ সমভাগ । ঘৃত দিয়া সেবন করিবে । शा.कौ. ।

**सामुद्रिका** । स्त्री । सविषजलायुकायाम् । সবিষ জোঁক । सु.सू १२ । See जलायुका ।

**साम्ब(म्भ,म्भा)रम्** । क्ली । गाढलवणे । শাকম্ভরিলবণ । रा नि व.६ ।

**साम्भरी** । स्त्री । रक्तलोध्रवृक्षे । श.च ।

**साम्राणिकर्द्दमम्** । क्ली । अवादिनामगन्धद्रव्ये । খাটাশী, মৃগনাভি । रा.नि.व १२ ।

**साम्राणिजम्** । क्ली । महापारेवतफले । रा. नि.व ११ ।

**सायकः** । पु । शरे । रा.नि.व ८ ।

**सायकपुङ्खा** । स्त्री । शरपुङ्खायां । শরপুঙ্খ । रा.नि.व.४ ।

**सायङ्कालः** । पुं । सायाह्ने ।

**सायोङ्घिदुरा** । स्त्री। मल्लिकाविशेषे । या सायं विकसति । गुणैश्चाम्बिकीतुल्या । रा.नि.व १० ।

**सारः** । पु । मज्जायां । अंसम् । मकुल.११अ. । अम. । दाड़िम्बवृक्षे । वै.निघ.७म. । पियालवृक्षे । वङ्गे । शुद्धे । चूर्णे । क्वाथे । वै.निघ. । वसवारे । रा.नि.व ६ । रोगे । धरवि । वले । अम. । दधिसरे । দৈযের মাথা । श.च. । कर्पूरे । रा. नि व.१२ । मकुल १२अ. । मौसौवृक्षे । वै.निघ १ भ वा.व्या.मल्यहीलाधि. । काष्ठान्तर्भूतपरिपक्वनिर्यासे । শুক্না আঁটা । "स्वतो निर्गतवेष्टकं लाक्षाऽर्जरसमोचरसादिकम् ।" च.मू.१अ. । सार्पसारे । सु.चि.१८अ । बीजे । भा । नवनीते । रा. नि.व १५ । पानके । পানা, শরবত । दैवानर्त-

स्थिरपदार्थे, स चाष्टविधः—यथा त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वानि। तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभेव च त्वक्साराणां। सा च सारता सुखसौभाग्यादीनि आचष्टे। कर्णाक्षिमुखजिह्वानासौष्ठपाणिपादादीनि स्निग्धरक्तानि श्रीमन्ति भ्राजिष्णूनि रक्तसाराणां। सा सारता सुखमुद्धतां मेधां मन स्विल्सौकुमार्यादीन्याचष्टे। मांससाराणां शङ्खललाटकृकाटिकाक्षिगण्डादीनि स्थिरगुरुमांसोपचितानि भवन्ति। सा सारता क्षमाधृतिविद्यासुखारोग्यबलप्रभृतीनि आचष्टे। मेदःसाराणां बलवर्णनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहः। सा च सारता वित्तैश्वर्यसुखोपभोगप्रदानान्यार्जवसुकुमारोपचारतामाचष्टे। अस्थिसाराः पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिरःपर्वस्थूलाः स्थूलास्थिनखदन्ताः महोत्साहादयो भवन्ति। मज्जसाराः मृद्वङ्गा बलवन्तः स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसन्धयः दीर्घायुषो बलवन्तश्च। श्रुतविज्ञानवित्तापत्यसम्मानभाजश्च सौम्याः सौम्यप्रेक्षिणश्च क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंहतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वराः भ्राजिष्णवो महास्फिचश्च शुक्रसाराः स्त्रीप्रियाः स्त्रीप्रियोपभोगा बलवन्तश्च। सुखैश्वर्यारोग्यवित्तसम्मानापत्यभाजः स्मृतिमन्तः भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहाः दक्षाः धीराः समरविक्रान्तयोधिनः सत्त्वसाराः।" च.वि.८अ.। क्ली। अग्नौ। मे.।

**सारकः** । पुं। जैपालवृक्षे। प.मु.। वै.निघ. १अ.चित्तविभ्रम.चि.। पीतमुद्गे। धान्यके। वै.निघ.। त्रि। विरेचके। [रा.नि.व ८।

**सारखदिरः** । पु। दुःखदिरे 'गु'य वाबला।

**सारगन्धः** । पुं। चन्दनवृक्षे। श.च.।

**सारघम्** । क्ली। भ्रमराहृतमधुनि। माक्षिकमधु। जटा.। गुणा.—"तस्मात्प्रचुरतरं ह्यर्धं सारघं मातिशीतलं। कासे श्वये प्रशस्तं स्यात् कामलायां विनाशनम्। नातिशीतं न च ह्यर्धं दीपनं बलकृन्मतं। अतीसारे शिवरोगे चले वा पथ्यमेव हि तम्।" भाव. १८अ.।

**सारङ्ग.** । पु। मृगविशेषे, चित्रमृगे। हरिणविशेषे। मे। श.र.। तन्मांसगुणा—"जाङ्गलं स्निग्धं मधुरं लघु वृष्यञ्च। रा.नि.व.१७। विष्किरजातीयवातकापचिण्डि। रा.नि व.१८। सु.सू. ४६अ। हस्तिनि। वै.निघ। कर्बुराश्वे। 'सारङ्गः कबर स्मृत।" नकुल २अ। छत्रे। राजहंसे। मे.। सिंहे। केशे। मयूरे। कोकिले। कर्पूरे। क्ली। पुष्पे। चन्दने। शङ्खे। पद्मे। स्वर्णे। धने। कार्थकोष।

**सारजम्** । क्ली। नवनीते। नि। श.च।

**सारजासव** । पुं। शालचन्दनादिसारोत्थविंशतिविधासवेषु। च.सू २५अ.।

**सारणः** । पु। भद्रबलायाम्। गन्धभाडलि। धरणि। आम्रातकवृक्षे। श च.। अतीसाररोगे। हे च.। नवनीते। क्ली। गन्धभेदे। धरणि।

**सारणा** । स्त्री। रसस्य संस्कारविशेषे। रस.चि.३अ.।

**सारणि (णी)** । स्त्री। प्रसारण्याम्। गन्धभाडलि। कृष्णा। रा नि.व ५। मद.व.१। नकुल.१२अ.। पुनर्नवायां। वै निघ.।

**सारण्ड.** । पु। सर्पाण्डे। सर्पडिम्ब। जटा.।

**सारतरुः** । पु। कदलीवृक्षे। धनञ्जय। खदिरवृक्षे। वै निघ.।

**सारतैलम्** । क्ली। सुश्रुतोक्तक्षुद्ररोगतैले, शिंशपागुरुसरलदेवदार्वादितैले। सु चि.२०अ.।

**सारद्रुमः** । पु। खदिरवृक्षे। रा.नि व.८।

**सारपाकम्** । क्ली। तन्नामकफलविषभेदे। सु.कल्प २अ.। See फलविषम्।

**सारपादपः** । पु। धामनवृक्षे। श र.।

**सारफल.** । पुं। धाराक्षे। वै निघ।

**सारबन्धका** । स्त्री। कन्दिकायाम्। वै निघ.।

**सारभाण्डम्** । क्ली। कस्तूरीमृगाण्डे। मन्दसम्प। [कल्प ८अ.। See कीटः।

**सारमण्डूकः** । पु। मण्डूकजातीयकीटे। सु.

**सारमूषिका** । स्त्री। देवदामीलतायां। देवदाडा। रा.नि.व.१। See घण्टे। [श.र.।

**सारमेय.** । पु। कुक्कुरे। शमु। स्त्री। कर्यां

**सारलोहम्** । क्ली । लौहसारे । ইস্পাৎ । त स लक्षणम् —" यमाश्चिखराकाराण्यङ्गान्यत्तेन लिपिते । लौहे सूर्य्यंच सूक्ष्माणि तत्सारमभिधीयते ॥" गुणाः —"लौह साराद्वय हन्यात् ग्रहणी मतिसारकम् । अर्शसर्व्वाङ्गजं वात शूलञ्च परिणामजम् । छर्द्दिञ्च पीनस पित्त श्वासमायुं व्यपोहति ॥" भ.प्र.पू १भ.धा.व.। [हचि.।

**सारवर्ग:** । पु । चोरवचवर्गे । भा म.३भ.प्रमे

**सारवृत्त:** । पु । धामनवृक्षे । वै.निघ.।

**सारशल्य:** । पु. । श्वेतखदिरे । वै.निघ.।

**सारसम्** । क्ली । कमले । रा.नि व १० । स रोजले । मे.।

**सारस:** । पु । सवजातीयोभचस्पक्षिविशेषे । সারস পাখী । तन्मांसगुणा —मधुरस्त कषाय महातीसारघ्न पित्तहर ग्रहण्यर्शोघ्नञ्च । रा.नि.व १७ । तदण्ड काठ्आखायुकजननं हयौऽतिरुचौ गुरुच। श्वि.२१भ.। स्त्री। सारसपक्षाम् । दे.च.।

**सारसङ्ग्रह:** । पु । वैद्यकग्रन्थभेदे. चक्रपाणि कृते । [भेदे ।

**सारसङ्ग्रहनिघण्ट:** । पु' । वैद्यकनिघण्टु

**सारसजलम्**
**सारसाम्बु** } क्ली । सरोवरजले । वै निघ.।

**सारसैन्धवम्** । क्ली । सैन्धवे । च द.रतिवल्ल भमोदके ।

**सारा** । स्त्री । कृष्णत्रिवृतायाम् । কাল তেউড়ী । श्र र. । सातलायाम् । শীতলক মনসা । वै.निघ. । दूर्व्वायां । श्र.च. । श्रयमतृफलायाम् । কলা গাছ । रा.नि.व.११ ।

**सारासुख:** । पु । स्वादुपाकरसयुक्ते कृष्णयुक्त धान्ये । वा सू ६भ.हेमा ।

**साराम्लम्** । क्ली । निम्बुभेदे । গোঁড়ালেবু । गुणा:—श्रम्ल पित्तलं गुरु वातघ्न कफकरञ्च। वै निघ ।

**सारालः** । पु' । तिले । श्र च ।

**सारिका** । स्त्री । पक्षिविशेषे । শালিক পাখী । श्रम. ।

**सारिणी** । स्त्री । कार्पासे । কাপাস গাছ। रा नि व.४ । महाबलायाम् रा नि व ४ । कपिलशिंशपायां । कपिलवर्ण शिंशु । रा नि.व ८। रक्तपुनर्नवायां । रा.नि.व ५ । दुरालभायां । रा.नि व.४ । प्रसारण्यां । गन्धभादुलिया । रा.नि.व ५ । [वै.निघ.।

**सारितम्** । क्ली । कृष्णाञ्जने । কাল সুর্মা।

**सारिवा** । स्त्री। श्रनन्तायां । अनन्तमूल । हिं गौरियासाउ । म वम्. उपलसरी । "श्यामापन्ना दुग्धगर्भा वल्ली स्वनामप्रसिद्धा ।" सु चि.१८भ.ड.। वा.सू.१५भ.। सारिवोशीरकाश्मर्य्यंति चक्रदत्त । श्राली । शालिधान्य । वै निघ । कृष्णसारिवायां। सा इन्द्रजम्बूत्वचा सुगन्धा कलम्बकेति ख्याता। শ্যামালত । हि करियासाउ। See अनन्ता, सारिवा ।

**सारिवादिगण:** । पुं । सारिवोशीरकाश्मर्य्यचन्दनद्वययष्टीपरुषककृते कषाये । स दाहपिपासाज्वरघ्नश्च । वा सू १५भ.।

**सारिवाद्वयम्** । क्ली । श्यामानन्तयो । শ্যামালতা, অনন্তমূল । भ.द्र वातपित्तज्व चि.। "मधुकं सारिवे द्राक्षा।"

**सारी** । स्त्री । सप्तलायाम् । চেঁকাটা মনসা । रा.नि.व.८ । शारिकापक्षिणि । श्र र. । [वैच ।

**सारोदकम्** । क्ली । सालसारोदके । च.चि.

**सारोद्धार:** । पु । वैद्यकग्रन्थविशेषे । [भ ।

**सारोष्ट्रिक:** पु । मोराष्ट्रदेशजविषे । च.टी.

**सार्ङ्गवेरम्** । क्ली । शुण्ठ्याम् । रा नि.व ६। *

**सार्ज:** । पु' । सर्जरसे । धूनो । श.मा ।

**सार्द्रः** । त्रि । चार्द्रे । ভিজা । श्रम ।

**सार्व्वगुणम्** । क्ली। क्षीरलवणे । रा.नि व ६।

**सार्व्वभौमः** । पु' । गजे । হাতী । त्रिका ।

**सार्व्वसहम्** । क्ली । वतिकालवणे । সোরা । वै निघ. । [पु । श्वेतसर्षपे । वै निघ.।

**सार्षप:** । त्रि । सर्षपसम्बन्धी, श्राकतैलादौ ।

**सार्षपतैलम्** । क्ली । सर्षपतैले । See सर्षप ।

**सार्षपशाकम्** । क्ली । सर्षपशाके । सरिषा शाक । चरि: १६ अ । See सर्षप: ।

**साल:** । पुं । इचे मे । शिंशपावृक्षे । वरुण वृक्षे । विका. । मत्स्यविशेषे । शाल माछ । अ. टी भ. । शाकवृक्षे । सेगुन गाछ । कुणपे । वै. निघ. । शाले । धुनो । रा.नि.व.१२ । सर्जवृक्षे । रा.नि.व ८ । स्वनामख्यातवृक्षे । शाल गाछ । हिं खसुआ । मं सागरा। क सर्ज्ज दामर। गुणा: —कटु तिक्त: उष्ण: हिम. स्निग्ध: कषायसारपि-त्तदोषघ्न. कण्डूकुष्ठविस्फोटकवातघ्नश्च । रा.नि व. ८ ।

**सालज: (क:)** । पुं । सर्जरसे । धुनो । प. मु. । सर्जतरौ । धुनोर गाछ । रा.नि.व.९ ।

**सालनिर्यास:** । पुं । सर्जरसे । धुनो । र. मा. । [ग्र.र. ।

**सालपर्णी** । स्त्री । अंशुमत्यां । शालपानि ।

**सालपुष्पम्** । क्ली । स्थलपद्मे । ग्र.र. ।

**सालरस:** । पुं । शालनिर्यासे । धुनो । रा. नि.व.१२ । [ल्प: ।

**सालवेष्ट:** । पुं । सर्जरसे । धुनो । शब्दक-

**साससार:** । पुं । शालभेदे । "शाल: मद्गु: तस्य सार:" इति डल्हण: । सु.सू.३८ अ ।

**सालाह्वक:** । पुं । कुकुरे । शृगाले । शब्दकल्प:

**सालिमकन्द:** । पुं । कावेलदेशीयकन्दभेदे । शालममिछ्रि । गुणा:—उष्णवीर्य: मधुर: हृद्य: धातुवर्द्धक: तिक्त: गुरु: रसायन: पुष्टिकर: कफ-मेहपित्तरक्तविकारघ्न । वै.निघ. ।

**सालूर:** । पुं । भेके । ग्र.र. । [टी भ. ।

**सालेय:** । पुं । मधुरिकायाम् । मउरी । च-

**साल्विक:** । पुं । पक्षिविशेषे । शालिक । ग्र.प. ।

**सावर:** । पुं । लोध्रविशेषे । श्वेत लोध । ग्र. र. । लोध्रे । रस.र.सम्मरी.चि.कासीसाद्यघृते ।

**सावररोध्र:** । पुं । श्वेतरोध्रे । "श्वेत: स्थूल त्वक् ।" सु.सू.३८ अ, अम्बष्ठादि. ।

**सावरिका** । स्त्री । निर्विषजलौकायाम् । नि-र्विष जोंक । सु.सू.१३ अ । See जलायुका ।

**सावर्णलक्ष्यम्** । क्ली । चर्म्मणि । ग्र.र. ।

**सावित्र:** । पुं । गर्भे । ग्र.र ।

**सावित्री** । स्त्री । आमलकीवृक्षे । वै निघ. ।

**साशयन्दक:** । पुं । गृहगोधायाम् । टिक्‌टिकि । शब्दकल्प: ।

**साशूक:** । पुं । कम्बले । हारा. । [विका. ।

**सास्थिताम्रार्द्धम्** । क्ली । कांस्ये । काँसा ।

**सास्ना** । स्त्री । गोगलकम्बले । अम. । रामा-यां । वै.निघ. ।

**सास्राव:** । त्रि । अश्रुयुक्ते, स्रावयुक्ते । मा.चि. ।

**साहसम्** । क्ली । बलवद्विग्रहादिके ।

**सिंह:** । पुं । रक्तशिग्रौ । लाल सजिना । रा. नि.व.७ । पशुराजे । अयं विलेशय: । सिंह । हिं शेर । तन्मांसगुणा:—मधुरं गुरु स्निग्धं बल्यं वातघ्नम् उष्णवीर्यं नेत्ररोगे प्रशंसितं च हितम् । सु.सू.४६ अ. । वकुलवृक्षे । वै.निघ. ।

**सिंहकेश(स)र:** । पुं । वकुलवृक्षे । सिंहज-टायाम् । सिंहेर जटा । विका. । [निघ. ।

**सिंहचिचा** । स्त्री । माषपर्णी । मासाणी । वै.

**सिंहच्छदा** । स्त्री । श्वेतदूर्व्वायां । रा.नि.व.८

**सिंहतुण्ड:** । पुं । सेहुण्डवृक्षे । सुहीवृक्षे । म-नसा गाछ । रा नि.व ८ ।

**सिंहनादगुग्गुलु:** । पुं । आमवाते औष-धम् । क्वाथार्थं—त्रिफला प्र १ प चतुर्गुणे वा-रिणि क्वाथयित्वा पादशेष: कार्य: । गुग्गुलु: ८ तो. नवनीतसारगन्धकं १ प्र. एरण्डतैलं १ प्र. एकत्र पाच्य: । क्वाथार्थ—आमला, हरीतकी, वहेड़ा प्रत्येके ३ प. जल चतुर्गुण (७६ प.), शेष चतुर्थांश (९ प.) । गुग्गुल ८ तो. नवनीतसारगन्धक ৬৪ तो. एरण्डतैल ৬৪ तो. समस्त एकत्र करिया पाक क-रिवे । भा.की. । रस.र. ।

**सिंहनादिका** । स्त्री । दुरालभायां । ग्र.प. ।

**सिंहपत्रा** । स्त्री । माषपर्णी । मासाणी । वै. निघ. । [ह । रा नि.व.४ ।

**सिंहपर्णी** । स्त्री । वासकवृक्षे । दाकम् गा-

**सिंहपिप्पली** । स्त्री । सैंहलीपिप्पल्यां । रा. नि व.६ ।

**सिंहपुच्छिका (च्छी)** । स्त्री । कदम्बीप वसदृशदीर्घपत्रपृश्निपर्णीविशेषे, काटवासिंहपु च्छीति ख्याते । छोट चाकुले । र.मा. । रा नि. व.४ । "सिंहपुच्छी चुराविका ।" च.द.शूल चि. एरण्डद्वादशके । माषपर्ण्यां । मापाणी । प मु. ।

**सिंहपुष्पी** । स्त्री । पृश्निपर्ण्यां । चाकुले । रा. नि.व.४ ।

**सिंहमुखः** । पुं । वासकवृक्षे । वै निघ. ।

**सिंहमुखी (वदना)** । स्त्री । वासकपुष्पवृ पे वाकस गाछ । रा.नि.व.४ । वै.निघ श्वास चि.सिंह्यादिकषाये । (नवरवराजकगाई) । मा षपर्ण्यां । माषाणी । श्वारमन्तिकायाम् । थावि माटी । वै निघ. ।

**सिंहल(क)म्** । क्ली । राजरीतौ । भाल पि तल । रा.नि.व.१३ । वङ्गे । वै.च. । त्वचि । गु ड़त्वक् । रा.नि.व.६ । [व.६ ।

**सिंहलस्था** । स्त्री । सैंहलीपिप्पल्यां । रा.नि.

**सिंहलस्थानः** । पु । तालसदृशवृक्षतरौ । छ टो वृक्ष । श मा. । [छ । वै.निघ ।

**सिंहवल्लभा** । पु । आटरुषवृक्षे । वाकस् गा

**सिंहविक्रान्तः** । पु । अश्वे । हारा. ।

**सिंहविन्ना (हन्त्री)** । स्त्री । माषपर्ण्याम् । माषाणी । वै निघ. । रा.नि.व.३ ।

**सिंहा** । स्त्री । बृहत्यां । वै निघ । नाड्यां । रा. नि व.१८ ।

**सिंहाणम्** । क्ली । लौहमले । मण्डूर । प मु. । नासामले । पोंटा, सिकनी । श र ।

**सिंहाननः** । पु । वासकवृक्षे । वाकसगाछ । भा म.१भ.कफकुलज्व.चि. । "कलिङ्गसिंहानन शर्वरीभि ।"

**सिंहामृतघृतम्** । क्ली । घर्मसि घृतम् । पा ठ —"पचेदारिष्टतद्रौषे कण्टकार्य्यमृतामृतम् । वत्साग्निफलात्र्यूषपूतिकाककलिङ्गकैः । सकारम र्यविडङ्गैस्तु सिंह दुर्नाममिद्घृतम् ।" कण्टकार्य्यमृ तयोः प्रत्येक प्रस्थ पलं निलिखा वा । अत्र ११६ म. श्री. ६४ म. । पूतिकल्क = करञ्जलकं । का स्मर्यं = गाम्भारीफलम् । च द. ।

**सिंहाली** । स्त्री । सिंहलीपिप्पल्याम् । सिंहपिप्पल । वै निघ. । [निघ ।

**सिंहासनम्** । क्ली । लौहकिट्टे । मण्डूर । वै.

**सिंहास्यः** । पुं । वासकवृक्षे । वाकस गाछ । र.मा. । वै निघ.२भ.सिंहास्यादिकषाये । भैष. स्त्रीरो.चि कुष्ठ चि. ।

**सिंहास्यादिः** । पु । शोथे कषायविशेष । "सिंहास्यामृतभण्टाकीक्वाथं कृत्वा समाचिकम् ।" भैष.शोथ चि ।

**सिंहिका (ही)** । स्त्री । बृहत्यां । रा नि व. ४ । प मु. । वासकवृक्षे । वासक । रा नि व ४ । कण्टकार्य्यां । कण्टिकारी । वै निघ जीर्णज्व.चि लवङ्गादिकषाये । तत्काकगुणाः—"जरा तु सिंहिका प्रोक्ता सातीसारे प्रशस्यते ।" चनि.१६४. । (ही) वार्त्ताक्यां । वृहती । त्रिका. । कण्टका र्य्यां । प मु. । वै निघ.जिह्मकज्व चि.कास.चि. सिंहास्यादि । वृहत्कण्टकार्य्यां । छि वड़ीकटैया । भा.म.१भ.ज्व.चि.,श्वास.चि. । "सिंही व्याघ्री ता लमूली ।" शिरायाम् । नाड्याम् । रा.नि.व.१८ । स्वर्णक्षरीटिकायाम् । मुद्गपर्ण्यां । मुगानी । रा. नि.व ३ । [धिकारे चन्द्रगमाघ्रते ।

**सिंहीफलम्** । क्ली । बृहतीफले । च.द ह्या

**सिंहीलता** । स्त्री । लताबृहत्यां । भा. । मुद्ग पर्ण्यां । रा.नि.व.३ ।

**सिकता** । स्त्री । लोणिकाशाके । यव शुनि शाक । प मु. । बालुकायां । रा.नि.व.१३ । श कराया । वै.निघ. ।

**सिकतामेहः** । पु । प्रमेहभेदे । यत्र रोगी बालुकानुविद्ध मूत्रं मेहति । सु नि.६ष. ।

**सिकतारूपम्** । क्ली । खण्डे । खाँड़ । भा. ।

**सिकतिल.** । पु । सिकतामयभूमौ । रा.नि. व.२ । [श्वास चि. ।

**सिकासिः** । पुं । उल्कामिकायाम् । प्रयोगः

**सिक्ता** । स्त्री । बालुकायाम् । वै निघ. ।

**सिक्थ(क)म्** । क्ली । सिक्थके । मम, सि-

टी। रा नि व.१३। नील्यां। नील। ढेच।

**सिङ्घ(ङ्घा)ण(क)म्।** क्ली। काचपात्रे। झारा.। नासिकामले। পোঁটা, সিকনি। रा नि.व.१८। नासारोगभेदे। निदानादि—"कफ प्रवृद्धा नासाया रुद्धा सीतांश्यपीनसम्। कुर्य्यात् सघुर्घुरं श्वास पीनसाधिकवेदनम्। अथैरिव सव त्यम प्रक्लिन्न तेन नासिका। अजस्र पिच्छिल पीत पक्व सिङ्घाणक घनम्॥" वा उ १८अ.। अपरस्त रोगविशेषे। लक्षण—"वातिके पैत्तिके चैव श्लैष्मिके सान्निपातिके। सिङ्घाणके प्रवक्ष्यामि लक्षण मेवञ्च तथा॥ तनुस्राव सफेनश्च वातिक तन्त्रकीर्त्तितम्। रक्तपीतासिते स्रावैर्विन्द्यात पित्तसमुद्भवम्॥ घनेन दधिवर्णेन कफजश्चैव निर्दिशेत्। नानावर्णेन जानीयादसाध्य सान्निपातिकम्॥' अ.द.। लौहकिट्टे। मण्डूर। वै.निघ.।

**सिङ्घानः।** पुं। कुरण्टकी। चिका.। [१८।

**सिङ्घिनी।** स्त्री। नासिकायाम्। रा.नि.व.

**सिञ्चिता।** स्त्री। पिप्पल्यां। श प.।

**सिञ्चितिका।** स्त्री। सेव इति प्रसिद्धे फले। সেওফল। सा च द्विधा क्षुद्रबृहद्भेदेन। क्षुद्रफल गुणा—श्रेष्य गुरु धातुवर्द्धकं पाके रसे च शीत कफकरञ्च। महत् शीतं कषाय क्षुद्रसमगुणश्च। बदरफले। वै.निघ.।

**सितः।** पु। भूर्ज्जवृक्षे। स्थूलजीरके। प सु। धवक्षे। धाओया गाछ। रमा। क्ली। रौप्ये। इक्षे। रा नि व १३। मूलके। मूलो। रा.नि.व. ०। चन्दने। रमा। श्वेततिले। वै निघ।

**सितकङ्गुः।** स्त्री। सर्ज्जरसे। धूनो। वै.निघ.।

**सितकटभी।** स्त्री। श्वेतकटभीवृक्षे। रा.नि. व.८। See कटभी।

**सितकण्टकी** } स्त्री। श्वेतपुष्पकण्ट
**सितकण्टा (रिका)** } कार्य्यां। रा नि व ४।

**सितकण्ठः।** पु। दात्यूहपक्षिणि। डाक पाखी। अ र.।

**सितकरः।** पुं। भीमसेनीकर्पूरे। ভীমসেনী কর্পূর। रा नि.व १२। स्त्री (रा)। नीलदूर्व्वायाम् वै निघ।

**सितकर्णी।** स्त्री। वासकवृक्षे। শ্বেতবাসক গাছ। रा.नि.व.१०।

**सितकल्याणघृतम्।** क्ली। स्त्रीरोगाधिकारे घृतम्। घृत ४ श दुग्ध १६ श। कल्कार्थ— कुमुदपुष्प पद्मकाष्ठ गौरखमूल गोधूम रक्तशालि मुद्गपर्णी क्षीरकाकोली गाम्भारीबीज यष्टीमधु वा त्यालकं गोरचतण्डुलामूलम् उत्पल तालमस्ता भू कुष्माण्ड शतावरी शालपर्णी जीरक त्रिफला गोडुम्बाबीजम् आमकदली च प्र. ४तो. जल ८ श. एकत्र पाच्यम्। घृत ४ শ. দুগ্ধ ১৬ শ.। ক ক্কার্থ—কুমুদফুল, পদ্মকাষ্ঠ, বেণার মূল, গম দাদখানি চাউল, মুগানী, ক্ষীরকাঁকলা, গামারবীজ, যষ্টিমধু, শ্বেত বেলেডা, গোব ক্ষচাকুলিয়ার মূল, নীলোৎপল, তালমজ্জা, ভূঁইকুমড়া, শতমূলী, শালপানি, জীরা, ত্রিফলা, গোনকবীজ, কাঁচা কলা প্রত্যেকে ৪ তো জল ৮ শ পাক করিবে। [भा.।

**सितकाञ्चन.।** पु। श्वेतपुष्पकाञ्चनवृक्षे। प.

**सितकारिका।** स्त्री। क्षुद्रवाट्यालके। ক্ষুদ্র বেলেডা। वै निघ।

**सितकुम्भी।** स्त्री। श्वेतपाटलायां। শ্বেতপু ষ্পপারুল। रा नि.व.१०।

**सितगुञ्जा।** स्त्री श्वेतगुञ्जायां। रा.नि व.२३।

**सितचन्दनम्।** क्ली। श्रीखण्डचन्दने। সাদা চন্দন। च द.खदिरवटी। [তো। वै निघ.।

**सितचिल्ली।** स्त्री। श्वेतवास्तुके। ছুদে বে

**सितचिह्नः।** पु। (Lacerta scincus) वल्मीगडकमत्स्ये। বেলেগুড়গুড়ি মাছ। झारा।

**सितच्छत्रा।** स्त्री। शतपुष्पायां। শুলফা। श्रम.।

**सितच्छदः।** पु। राजहंसपक्षिणि। সাদা হাঁস। वै निघ.। हंसे। हे.च। स्त्री (दा)। श्वेतदूर्व्वायाम्। रा.नि.व ८। [रा.नि व २३।

**सितजः।** पुं। मधुशर्करायाम्। মধুর চিনি।

**सितजफल.।** पुं। मधुनारिकेलवृक्षे। रा. नि व ११।

**सितजलजम्।** क्ली। श्वेतपद्मे। वै निघ.।

**सितला** । स्त्री । मधुशर्करायां । रा.नि.व.१४।

**सितजाम्रक:** । पुं । बहुरसालवृक्षे । रा. नि.व.११ । [जौदा । मैष.बाल.चि. ।

**सितजीरकम्** । क्ली । शुक्लजीरके । श्वेत

**सितदर्भ:** । पुं । श्वेतकुशे । श्वेतकुश । म पादरीकुशी । क बिलियदुदकुशि । गुणा —स न्मूल हिम मधुरं कष्य पित्तघ्न रक्तज्वरत्वायास . कामलाघ्न । एतदभावे साधारणकुशो ग्राह्य । रा.नि.व.८ । [कै । रा नि.व.६ ।

**सितदीप्य:** । पु । श्वेतयमान्याम् । श्वेतजीर

**सितदूर्वा** । स्त्री । श्वेतदूर्वायाम् । प सु ।

**सितद्रु: (म:)** । पुं । मोरटमेदे । लताक , डाव । र.मा. । अर्जुनवृक्षे । वै.निघ ।

**सितधातु:** । पु । खटिकायाम् । खड़िमाटी । रा.नि.व.१३ ।

**सितपद्मम्** । क्ली । श्वेतपद्मे । वै निघ ।

**सितपर्णी** । स्त्री । अर्कपुष्पिकायां र.मा. ।

**सितपक्ष:** । पुं । शुक्लपक्षे । (शब्दकल्प) । ४थे । श र ।

**सितपाटला (लिका)** । स्त्री । शुक्लपुष्पपा टलवृक्षे । श्वेत पारल । म श्वेतपाडलि । कं बिलियहादरि । गुणा:—सिता उष्णा गुरु वा तघ्नी हिक्कावमिकफघ्नी शोफघ्नी च । रा.नि.व.१० ।

**सितपुङ्खा** । स्त्री । श्वेतपुष्पशरपुङ्खायाम् । रा. नि व.४ ।

**सितपुष्पम्** । क्ली । कैवर्तमुस्तके । अटा. । पुं । श्वेतपुण्डरीकतिलके । श्वेत ग्रोड़ा । रा.नि.व ८ । काशवृक्षे । केसेधास । तगरवृक्षे । रा.नि. व ८ । श.र. । दीपान्तरखर्जूरीवृक्षे । पिण्डीखे जुर गाछ । शिरीषवृक्षे । वै.निघ. । स्त्री (ष्पा) । मल्लिकायाम् । मल्लिका फुलेर गाछ । श र. । (ष्पी) श्वेतापराजितायाम् । रा.नि.व.३ । नाग-दन्त्याम् । हातिशुंड़े । रा.नि.व.५ । नागवल्ली लतायां । पाणलता । वै.निघ. ।

**सितमरिचम्** । क्ली । श्वेतमरिचे, तत्तु शो भाञ्जनबीजमिति गदा । रा.नि.व.६ ।

**सितमाष:** । पु । (Dolichos catjang.) राजमाषे । हारा. । [शा।ल गाछ । वै.निघ.

**सितमोघा** । स्त्री । श्वेतपाटलवृक्षे । श्वेत

**सितरज:** । क्ली । कर्पूरे । वै निघ. ।

**सितराग:** । पु । रौप्ये । वै.निघ ।

**सितलता** । स्त्री । चित्रकूटे ख्याता अमृतस वल्लतायाम् । नक्रदन्तकी । रा.नि व.३ ।

**सितलशुन:** । पु । शुक्लरसोने । वै.निघ. ।

**सितवर्णा** । स्त्री । क्षीरिणीवृक्षे । प.सु ।

**सितवर्षाभू:** । पु । श्वेतपुनर्नवायाम् । रा. नि.व.५ । [प सु ।

**सितवल्लरी** । स्त्री । भूमिजम्बूवृक्षे । वनजाम ।

**सितवल्लि(ल्ली)जम्** । क्ली । श्वेतमरिचे । रा. नि.व ६ । [मा.।

**सितवार: (क:)** । पुं । शालिञ्चशाके । रै

**सितवारिक:** । पुं । सिद्धनीषिष्पल्याम् । वै.निघ. । [वै.निघ चयचि.लघुशिवगुड्यां ।

**सितशर्करा** । स्त्री धवलशर्करायाम् । चिनि

**सितशा(सा)यका** । स्त्री । श्वेतपुष्पशरपु-ङ्खायाम् । रा नि व.४ ।

**सितशिंशपा** । स्त्री । श्वेतपुष्पशाखशीवृक्षे । श्वेत शिमुल । श्वेतशिंशपायाम् । श्वेत शिशु । वै.निघ. । रा नि.व ८ ।

**सितशिम्बिक:** । पुं । गोधूमे । गम । रे.व. ।

**सितशिम्बी** । स्त्री । श्वेतशिम्ब्याम् । वै.निघ ।

**सितशि(सि)वम्** । क्ली । सैन्धवलवणे । वै. निघ. । स्त्री । शमीवृक्षे । प.सु. ।

**सितशूक:** । पुं । यवे । प सु. । रा नि व.१६ ।

**सितशू(सू)रण:** । पुं । श्वेतसूरणे । श्वेत ओल वा वन ओल । रा.नि व.७ । [नि.व १६ ।

**सितसर्षप:** । पुं । गौरसर्षपे, सिद्धार्थे । रा.

**सितसार: (क:)** । पु । शालिञ्चशाके । रा. नि व ८ । च.द मु श.चि, । "तरिप युक्त सित सारकस ।" [रा.नि.व.४ ।

**सितसिंहि: (ही)** । स्त्री । श्वेतकण्टकार्याम् ।

**सितसूर्या** । स्त्री । शुक्लसूर्य्यावर्त्ते । वै म.मू.क्त वि । [गो । वै.निघ. ।

**सितचार** । पुं । श्वेतटङ्कणे । श्वेत সোহা

**सितक्षुद्रा** । स्त्री । श्वेतकण्टकार्य्याम् । रा. नि.व.४।२२ ।

**सिताशु.** । पु । कर्पूरे । (शब्दकल्प) ।

**सिताशुतैलम्** । क्ली । कर्पूरतैले । रा नि व १५ ।

**सिता** । स्त्री । शर्कारायाम् । চিনি । गुणा — "सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत् । मू र्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्रकारिणी ।" रा नि व १४ । धात्रीद्राचामिसिताना वा ।" च.द ज्वरचि. । च मू ४अ. । वचायाम् । वচ । सोम राज्याम् । সোমরাজ । सितदुर्व्याम् । শিউলি ছোপ । प.मु. । आमलक्या । আমলা । गोरो चनायाम् । গোরোচনা । वल्ली । सुरामेदे । रा. नि.व २२ । रौथि । मल्लिकतायां । শ্বেত তে উড়া । विमल्लिपुष्पवृक्षे । श्वेतपुनर्नवायाम् । वै. निघ । आम्फातके । हांपमाला । गिरिजाप राजितायां । र मा । मल्लिकापुष्पवृक्षे । श्वेतपा टलिकायाम् । শ্বেত পারুল । रा.नि व.१० । श्वेतकण्टकार्य्याम् । रा नि व.४ । विदार्य्याम् । ভূঁইকুমড়া । रा नि.व ७ । श्वेतदूर्व्वायाम् । प मु. । सु मू २६अ । च मू.५अ । श्वेतनिम्बाम् । শ্বেত নিম । रा नि व १२ । See श्वेतनिषाव । कुटुम्बिन्याम् । रा नि व.५ । चायमाणालतायाम् । বলা লতা । গোকালিয়া । तेजन्याम् । शताफ ट्की मूसा । रा.नि.व २ ।

**सिताखण्डः** । पु । मधुजशर्करायां । मधुर চিনি, মালপওয়া । गुणा —अतिमधुर चक्षुष्य कुष्ठच्छर्दिवणकफपाणहिक्कापित्तासदीपघ्न । रा. नि व.१४ ।

**सिताख्य. (ख्या)** । पु । श्वेतमरिचे । वै. निघ । श्वेतदूर्व्वायाम् । रा नि व.८ ।

**सिताग्र.** । पु । कण्टके । কাঁটা । हारा. ।

**सिताङ्क.** । पु । वास्तुशाकइमेन্র শ্বেত ড়ি শাক । हारा । [रा न ६ । रा नि व ८ ।

**सिताङ्ग.** । पु । श्वेतरोहितकवृक्षे । শ্বেত রো

**सिताजाजिः (जी)** । स्त्री । श्वेतजीरके । शादा जीরে । रा नि.व.६ ।

**सितात्रयम्** । क्ली । त्रिशर्करायाम् । "गुडी त्वन्ना हिमोत्थन्ना मधुरा चेति मिश्रित । सि तात्रयम् ॥" रा नि.व २२ ।

**सितादि.** । पु । गुडे । रा नि.व.१४ ।

**सितानन:** । पु । बिल्ववृक्षे । वै निघ. ।

**सितापाङ्गः** । मयूरे । त्रिका. ।

**सिताफलम्** । क्ली । (Anona squamosa) The custard apple. स्वनामख्यातफ ले । আতা, নোণা । हि सिताफल । मा सि ता । पक्वफल पाचक । बीज क्रमिघ्नम् । कश्चित् ।

**सिताब्जम्** । क्ली । श्वेतकमले । रा नि व.१० ।

**सिताभः** । पु । कर्पूरे । अ टी.रा. ।

**सिताभा (सा)** । स्त्री । तक्राह्वायाम् । रा. नि व.४ ।

**सिताभ्रः (क)** । पुं । कर्पूरे । अम. ।

**सिताम्बु(म्भो)जम्** । क्ली । श्वेतकमले । चरा ।

**सितार्क (का)** । पु । श्वेतार्कवृक्षे । শ্বেত আকন্দ গাছ । रा नि.व.१० ।

**सितार्जक.** । पु । श्वेतपत्रक्षुद्रतुलस्याम् । ছোট শ্বেত তুলসী । हि श्वेतार्जबला । मं पां ढरा आजवला । गुणा —कटूष्ण कफवातनेत्र रोगघ्न रुच्य सुखप्रसवकरश्च । रा.नि व.१० ।

**सितालता** । स्त्री । अमृतस्रवालतायाम् । रा नि व ३ । श्वेतदूर्व्वायाम् । र.मा. । च.मू.४अ. ।

**सितालर्कः (र्का)** । पु, स्त्री । श्वेतमन्दारा र्के । শ্বেত ও বক আকন্দ । रा.नि व १० ।

**सितालिकटभी** । स्त्री । श्वेतकिण्डीटके । रा नि व ८ । [हारा. ।

**सितालिका** । स्त्री । पद्मक्षौ । শিমুক ।

**सितावरः** । पुं । सुनिषण्णके । শুশুনীশাক । गुणा —समग्राही ज्वराय उष्ण त्रिदोषघ्न मेधा रुचिकर रसायन दाहज्वरहरश्च । रा नि व ४ । See सु दन । [रा नि व ४ ।

**सितावरी** । स्त्री । बाकुच्याम् । সোমরাজ ।

**स्वरहा(न्)** } पु । स्वरभङ्गे । रा.नि.व २० ।
**स्वरघ्न** }

**स्वरामक** । पु । अचोटवृक्षे । आतृवाट गाछ । वै निघ. ।

**स्वरालु** । पु । वचायाम् । श च ।

**स्वरु** । पु । इविकभेदे । शब्दकल्प ।

**स्वर्गपुष्पम्** । क्ली । लवङ्गे । वै निघ. ।

**स्वर्गलोकेश** । पु । शरीरे । जटा ।

**स्वर्ज्ज (चार)** पु । सर्ज्जिचारे । च द.प रिणामशूले । "हिङ्गुकुश्वचास्वर्ज्ज "

**स्वर्ज्जि (का:)** । पु स्वर्ज्जिचारे । साजिमा टी । रा नि व ६ । यवचारे । सोता । भा ।

**स्वर्ज्जिकापाक्य.** । पु। स्वर्ज्जिकारे । वै निघ.।

**स्वर्ज्जि(का)चार** । पु । (Coloxylon griffithii) Panjab salt wort or Sajji स्वनामकचारे । साचिक्षार, साजिमाटि । हि साजोखार, कङ्कणखार । गुणा —कटुरुष्ण तीक्ष्ण वातकफघ्न गुल्माध्मानकृमिघ्न व्रणादरघ्न च । रा नि व.६ । यवचारा अयेदग्नि श्वासान् वातकफामयान् गुल्माढ्हृदयहणीपाण्डुप्लीहानाह मलामयान् । तस्मादल्पान्तरगुण स्वर्ज्जिकाचार उच्यते ।" राज । [रा.नि.व ६ ।

**स्वर्ज्जी** (न्) । पु । स्वर्ज्जिचारे । साचिक्षार ।

**स्वर्णम्** । क्ली । स्वनामप्रसिद्धधातौ । सोणा । धुस्तूरे । भम । वै निघ.२भ चयाच.कालान्तकर से । नागकेसरपुष्प । नागेश्वर फुल गौरसुवर्ण शाके । सोणानटिया शाक । रा नि व ७।१० । "पुरा निजाश्रमस्थानां सप्तर्षीणां जितात्मनाम् । मरीचिराङ्गिरा अत्रि पुलस्त्य पुलह क्रतु । व सिष्ठयति सप्तैते कीर्त्तिता परमर्षय ॥ पत्नीर्विलोक्य लावण्यलक्ष्मीसम्पन्नयौवना । कन्दर्पदर्पवि ध्वस्तचेतसो जातवेदस । पतितं यद्धरापृष्ठे रेतस्तद्धेमतामगात् ॥ कृत्रिमञ्चापि भवति तद्रसेन्द्रस्य वेधत ॥' इति स्वर्णोत्पत्ति । "दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् । तारशुल्कोज्झितं स्निग्धं कोमलं गुरु हेम सत् ॥' इति परीक्षा । "स्वर्णं तारारनागावल्पत्राय्यग्नौ प्रतापयेत् । निषिञ्चेत् प्रतप्तानि तैले तक्रे गवा जले । काञ्जिके च कुलत्थानां कषाये सप्तधा पृथक् । एवं स्वर्णादिलौहानां विशुद्धि सम्प्रजायते ॥' पत्त्रीकृतपत्राणि अग्नौ तापयित्वा तप्तानि तैले तक्रे काञ्जिके गोमूत्रे कुलत्थकषाये निक्षिप्तनिर्वाप्य शोधयत् । एवमन्येषां धातूनामपि श धन कार्य्यम् ॥ इति शोधनम् मारण यथा—स्वर्णस्य एक भाग पारदस्य च भागदयम् कज्जलं मर्दयित्वा गोलकसम गन्धकचूर्ण तदध उपरि च निधाय शरावसम्पुटे निरुध्य त्रिंशद्वनकरीष चतुर्दश पुटान् दद्यात् । शिला गन्धार्कदुग्धाक्ता स्वर्णाद्या सप्त धातव । म्रियन्ते द्वादशपुटै सत्यं गुरुवचो यथा ॥" शिला मन शिला एषां चूर्णादभि पचाचि लेपयित्वा गजपुटे पचेत् । अथवा रसकज्जलिकया कैन्लेन वा रसेन स्वर्णपत्र लिप्त्वा हिङ्गुहिङ्गुलसिन्दूरमन शिलाभि स्वर्णसमाभिर्मेलयित्वा धुस्तूररसेन घन म र्दयित्वा गोलक कुर्य्यात् । ततो घ्निकामध्य स्थाप्य शरावेणाच्छाद्य वह्निलेप दत्त्वा पलाशभस्मना पूरयेत् । ततो दिनदय गाढाग्नि दद्यादिति । र सा स । गुणा —"सुवर्णं शीतलं वृष्य बल्य गुरु रसायनम् । स्वादु तिक्तञ्च तुवर पाके च स्वादु पिच्छलम् । पावनं वृंहण नेत्रं मेधास्मृतिमतिप्रदम् । हृद्यमायुष्कर कान्तिवाग्विशुद्धिस्थिरत्वकृत् । विषद्वयचयोन्मादत्रिदोषज्वरशोषजित् । बल स वीर्यं हरते नराणां रोगव्रजान् शोषयतीह काये । असौख्यकारञ्च सदा सुवर्णमशुद्धमेतन्मरणञ्च कुर्य्यात् । असम्यक मारित स्वर्णं बल वीर्यञ्च नाशयेत् करोति रोगान् मृत्युञ्च तद्धन्याद्यत्नतस्तत । भा.पू धा व । [किट्टिपोनैले ।

**स्वर्णकम्** । क्ली । धुस्तूरफले । मैष शिरोरो.वि.

**स्वर्णकण** । पु । कणगुग्गुलौ । रा नि व.१२।

**स्वर्णकण्डू.** । स्त्री। सर्ज्जरसे । धुना, ब्रजम । वै निघ. ।

**स्वर्णकमलम्** । क्ली । रक्तपद्मे । वै निघ. ।

**स्वर्णकेतकी** । स्त्री । रक्तकेतकीवृक्षे । सोणा केया । पुष्पगुणा —वर्णकर केशसौरभ्यकर स्वर्णवर्णं मदनोन्मत्ततावाहुल्यकर सौख्यकारि च । केतकीस्तन , अतिशीतल कटु पित्तकफघ्न रसायन बल्य देहदार्ढ्यकरञ्च । रा नि व.१० ।

**स्वर्णगैरिकम्** । क्ली । रक्तगैरिके । রক্ত গৈরিক মাটী । वै निघ । [मगा ।

**स्वर्णचूड** । पुं । पक्षिविशेषे । চাষ পক্ষী ।

**स्वर्णजम्** । क्ली । स्वर्णमाक्षिके । वै निघ । व ङ्ग । वै च ।

**स्वर्णजातिका (ती)** । स्त्री । (Jasminum revolutum) पीतजातीपुष्पवृक्षे । পীত চামেলী । वै निघ ।

**स्वर्णजीवन्तिका (न्ती)** । स्त्री । पीतपुष्पजीवन्त्याम् । स्वर्णजीवन्ती । हि सोनाजीवई । गुणाः —हृद्या मधुरा चक्षुष्या शिशिरा वातपित्तरक्तदाहघ्नी च । रा नि व ३ ।

**स्वर्णजीवा** । स्त्री स्वर्णजीवन्त्याम् । वै निघ ।

**स्वर्णटी** । स्त्री स्वागट्टायाम् । अम । हयिकाख्याम् । विछाटी रा नि व ५ ।

**स्वर्णदुग्धा** । स्त्री । स्वर्णक्षीरिकायाम् সোণাথিরুই, শেয়ালকাঁটা वै निघ ।

**स्वर्णद्रु** । पु महारग्वधवृक्षे বড় সোন্দাল । रा नि व ९ ।

**स्वर्णधातु** । पु । स्वर्णगैरिके । स्वर्ण वै निघ ।

**स्वर्णनिभम्** । क्ली । स्वर्णगैरिके । স্বর্ণ গৈরিক মাটী । वै निघ । [पा० रस चि

**स्वर्णपत्रम्** । क्ली । पत्रलसुवर्णपत्र সোণার

**स्वर्णपत्रिका** । स्त्री । सुवर्णमुख्यम् । সোণামুখী । भैष मूल चि हरीतकीखण्ड ।

**स्वर्णपर्णी** । स्त्री । स्वर्णजीवन्त्या वै निघ ।

**स्वर्णपर्पटी** । स्त्री । ग्रहण्यधिकारे रस यथा —पारदस्य पल स्वर्णस्य तोलकम् एकत्रामिश्रया न्मर्दयित्वा तेन सह गन्धकस्य पल मिश्रयित्वा स्त्री द्रवस्य मर्दयित्वा कज्जलि कार्य्या । अथ यथाविधि पर्पटी पाच्या । भैष । [र मा ।

**स्वर्णपाटक** । पुं । टङ्कणक्षारे । সোহাগা ।

**स्वर्णपारे(ले)वतम्** । क्ली । द्वीपान्तरखर्जूरे । महापारेवतफले । रा नि व ११ ।

**स्वर्णपुष्प** । पुं । चाम्पेयवृक्षे । চাবনা গাছ । आरग्वधवृक्षे । সোন্দাল গাছ । रा नि व ९ । कपित्थवृक्षे । कुष्माण्डलतायां । वै निघ । मध्यवम्पकवृक्षे । रा नि व ११ । स्त्री (ष्पा) । लाङ्गलिकौषधौ । विषलाङ्गुलिय । सातलायाम् । পীতবর্ণ ফুল । रा नि व ४ । सैरेयकायाम् । মেড় শিং । वै निघ । [णालु । वै निघ ।

**स्वर्णपुष्पध्वजा** । स्त्री । स्वर्णलीवृक्षे । সো

**स्वर्णपुष्पिका** । स्त्री । लाङ्गलिकौषधौ । विषलाङ्गुलिय । रा नि व ४ । स्वर्णयूथिकायाम् । वै निघ ।

**स्वर्णपुष्पी** । स्त्री स्वर्णकेतक्यां रा नि व १० । सातलायां । रा नि व ४ । आरग्वधवृक्ष । সোঁদাল বৃক্ষ ।

**स्वर्णफलम्** । क्ली धुस्तूरफले । धुस्तूरबीजे । भैष महालक्ष्मीविलासरसे । स्त्री (ला) । स्वर्णकदल्याम् रा नि व ११ । [भ रसा चि महारसे ।

**स्वर्णबीजम्** । क्ली । धुस्तूरबीज । वै निघ १भ

**स्वर्णभूमि** । स्त्री । मधुरवल्कले । দারচিনি । वै निघ । [रिके । वै निघ ।

**स्वर्णभूषणम्** । क्ली । आरग्वधवृक्षे । स्वर्णगै

**स्वर्णभृङ्गार** । पु । पीतभृङ्गराजे । रा नि व ४ ।

**स्वर्णमण्डनम** । स्वर्णगैरिके । वै निघ ।

**स्वर्णमाता** । स्त्री । महाजम्बूवृक्षे । বড় জাম গাছ वै निघ ।

**स्वर्णमाक्षिकम्** । क्ली, पु । स्वनामख्यातोपधातुविशेषे । স্বর্ণমাক্ষিক । अस्य स्वर्णसाहित्यात्तथाभिधानम्— किञ्चित् सुवर्णसाहित्यात् स्वर्णमाक्षिकमुच्यते । "उपधातु सुवर्णस्य किञ्चित् स्वर्णगुणान्वितम् तथा च काञ्चनाभ वै दीयते स्वर्णमाक्षिकम् ॥ किन्तु तस्यानुकल्पत्वात् किञ्चिदूनगुणन्तत । न केवल स्वर्णगुणा वर्त्तन्त स्वर्णमाक्षिके । द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यत "गुणा —"सुवर्णमाक्षिक स्वादु तिक्त वृष्यं रसायनम् । चक्षुष्य वस्तिरुक्कण्डुपाण्डुमेहविषोदरान् । अर्श शोथ विषं कण्डू त्रिदोषमपि नाशयेत् ॥' अशुद्ध तत् मन्दाग्निल बलहानिं विष्टम्भं नेत्ररोग कुष्ठादिकञ्च करोति । भा पू १भ भा ष । "सिन्धूत्थस्य भागैक द्विभाग माक्षिकस्य च । मातुलुङ्गरसैर्वापि जम्बीरोत्थद्रवेण वा । कृत्वा तदा

यमे पात्रे लौहदर्व्या च चालयेत्। सिन्दूराभं भवेद्यावत्तावन्मृद्वग्निना पचेत्। सगुड माक्षिकं चैव सर्वरोगेषु योजयेत्॥" इति तच्छुद्धिः। परीक्षा यथा—"भवेत् सुवर्णसङ्काशो मनाक्श्यामच्छविर्बहिः। चूडार्ण इति ख्यातो माक्षिकोऽत्र प्रशस्यते॥" यो गर।

**स्वर्णयूथिका (थी)**। स्त्री। पीतयूथिकायाम्। श र। [बेडा पितल। वै निघ।

**स्वर्णरीति. (ती)**। पु, स्त्री। राजपित्तले।

**स्वर्णलता**। स्त्री। ज्योतिष्मतीलतायाम्। लताफट्की। रा नि व २।

**स्वर्ण(र्णा)ली**। स्त्री। आरग्वधभेदे। শোনাদু গাছ। हि आमलटास। मं गुडमलवर। तैं येयलु पकनिआर। वम् सौएली। गुणा—कटुः शीता कषाया व्रणघ्नी च। रा नि व ४।

**स्वर्णवर्ण.**। पु। कणगुग्गुलौ। रा नि व.१२। वरापत्रहरिताले। स्वर्णगैरिके। वै निघ.। स्त्री। हरिद्रायाम्। दारुहरिद्रायां। रा.नि.व.६।

**स्वर्णवल्कल:**। पु। श्योणाकवृक्षे। श.च.।

**स्वर्णवल्ली**। स्त्री। स्वर्णलतायाम्। लताविशेष। तैं वेकुडुतीगे। गुणा—शिर पीडा हन्ति त्रिदोष हन्ति दुग्धदा च भवति। भा। रा नि व ३। स्वर्णुलीवृक्षे। শোনাল গাছ। वै निघ.। स्वर्णजीवन्त्या। रा.नि.व ३।

**स्वर्णशेफालिका**। स्त्री। पीतशेफालिकायाम्। चि क्र.क.स्त्रीरो.चि। आरग्वधवृक्षे। সোনাল গাছ। श.मा.।

**स्वर्णसिन्दूरम्**। क्ली। रससिन्दूरविशेषे। पचौ—शुद्धरस ८ तो शुद्धगन्धक ८ तो स्वर्ण २ तो वटाङ्कुररसेन प्रहर कुमारीरसेन च प्रहरं मर्दयित्वा काचकूप्यां निधाय वालुकायन्त्रेण पचेत्। शीते कूपीगलस्थपीतरजांसि गृह्णीयात्। भैष.। रस.चि.। [च मू २५.।

**स्वर्णहालि:**। पुं। चतुरङ्गुली। সোনাল।

**स्वर्णक्षीरिणी (री)**। स्त्री। (Agremone mexicana) स्वनामख्यातवृक्षे। সোণাখিরুই, শিয়ালকাঁটা। हि सैरवन्द। मं पिवलाघोत्रा। ता मक्कप्पिरङ्गुविरइ। च सू.४७। तन्दुल चौक इति हिन्दी। गुणा—"रेचनी तिक्ता मोदनुत्क्लेशकारिणी। कृमिकण्डूविषानाहकफपित्तास्रकुष्ठनुत॥" भा कुष्ठ चि.। [ल। रा नि.व ५।

**स्वर्णाङ्ग.**। पु। महारग्वधवृक्षे। বড় সোন্দাল

**स्वर्णाभम्**। क्ली। हरिताले। वै निघ.।

**स्वर्णाभा**। स्त्री। पीतपुष्पयूथिकायाम्। वै. निघ। [शब्दकल्प।

**स्वर्णारि.**। पुं। सीसके। वै निघ। गन्धके।

**स्वर्णाह्वा**। स्त्री। स्वर्णक्षीर्याम्। শিয়ালকাঁটা। वै निघ।

**स्वर्णिका**। स्त्री। धन्याके। धनिया। वै निघ.।

**स्वर्भानव**। पु। गोमेदरत्ने। रा.नि व १३।

**स्वर्वैद्यौ**। पु। अश्विनीकुमारयो। अम।

**स्वल्प.**। पु। नखीनामगन्धद्रव्ये। नखी। वै. निघ।

**स्वल्पकन्द:**। पु। कसेरौ। কেশুর। वै.निघ.।

**स्वल्पकाष्ठ:**। पु,क्ली। श्वेतालौ। শাঁক আলু। वै निघ.। [चि। वत्सकाक्न। रा नि.व.१०।

**स्वल्पकेशर: (री(इन्))**। पु। कोविदारवृक्षे। [ण। वै निघ.।

**स्वल्पकेशी**। स्त्री। भूतकेशे। कालदूर्वा। श.च।

**स्वल्पघण्टा**। स्त्री। आरण्यशणवृक्षे। वन शण। वै निघ। [ग्राल। वै निघ।

**स्वल्पचटक:**। पु। चटकचटके। मनुया पाखी।

**स्वल्पजम्बूक:**। पुं। क्षुद्रशृगाले। খাঁকশিয়াল। [মেউলবিশেষ। र.मा.।

**स्वल्पतरु:**। पु। केसुककन्दे। কেঁউ গাছ। वै निघ.।

**स्वल्पपत्रक:**। पु। गौरशाके, मधूकविशेषे।

**स्वल्पफला**। स्त्री। हपुषाभेदे। हपुषहस्वफ़दिशेष। हपुषासदृशगुण। रा.नि व.५।

**स्वल्परूपा**। स्त्री। आरण्यशणवृक्षे। वनशण। वै निघ।

**स्वल्पवर्त्तुल:**। पुं। कलायवृक्षे। वै.निघ.।

'द्विवदधितैलवसासपान् । तीव्राभ्यदिवास्वप्नपुरी वातान् परिवर्जेत् । शीते वर्षासु चाद्यास्त्रीन् वस न्तेऽन्त्यान् रसान् भजेत् । स्वादु निदाघे शरदि स्वादुतिक्तकषायकान् । शरदवसन्तयो रुक्ष शीत घर्म घनान्तयः । अन्नपान समासेन विपरीतमतोऽन्य दा । नित्य सर्व्वरसाभ्यास स्वस्वाधिक्यमृताऽवसौ ॥" च.द.सात्म्याधिकारे । [२३५. ।

**स्वस्थारिष्ट:** । पु । अश्वस्थ मृत्युचिह्ने । ज.द.

**स्वाद: (नम्)** । पु, क्ली । आस्वादे । रसग्रह णे । व्याक. ।

**स्वादु:** । पु । मधुररसे । मिष्टिबम । गुणा — "रसायनीतमो बल्यो रोगवारण उत्तम । स्निग्ध सर्पणी चापि वृष्णय सजीवन ॥" चवि. १०५.। गुडे । चिका । जीवकौषधौ । जीवक । जटा. । मधूकवृक्षे । हे.च । प्रियालवृक्षे । दाड़िमवृक्षे। मातुलुङ्गभेदे। कमला लेबु। कामडणे । बदरे । वै.निघ. । अगुरुसारे । अगुरु वृक्ष । गुणा — कटु कषायोष्ण सधूमामोदवातघ्न । रा.नि.व.१२ । स्त्री । द्राक्षायाम् । किसमिस् । चटीभ । क्ली । सैन्धवलवणे । दुग्धे । वै.निघ । त्रि । मधुरे । मे. ।

**स्वादुकण्टक:** । पु । विकङ्कतवृक्षे । बैंइचौ गाछ । भा. । क्षुद्रगोक्षुरके । छोट गोखुरी । भा.म.४भ.ज्वराद्यधिकारे । विकण्टकवृक्षे । रा.नि. व.११ ।

**स्वादुकन्द:** । पु । भूमिकुष्माण्डे । श्वेतपिण्डालौ । (क) केमुककन्दे । केँउ गाछ । वै निघ । स्त्री । भूमिकुष्माण्डे । रा.नि व.७ ।

**स्वादुका** । स्त्री । नागदन्त्याम् । हातिशुँड़े । रा.नि व ५ । [खिरा । वै.निघ. ।

**स्वादुकोषातकी** । स्त्री । मधुरकोषातक्याम् ।

**स्वादुखण्ड:** । पु । गुडे । खण्डे । श र. ।

**स्वादुगन्धच्छदा** । स्त्री । कृष्णतुलस्याम् । काल तुलसी । वै.निघ. ।

**स्वादुगन्धा** । स्त्री । रक्तशोभाञ्जने । लाल सजिना । र.मा. । भूमिकुष्माण्डे । भूँइकुमड़ा । जटा. । [वै निघ. ।

**स्वादुगन्धि:** । पु । रक्तशिग्रौ । लाल सजिना॥

**स्वादुतिक्तम्** । क्ली । पीलुफले । आकरोट । वै.निघ. । [गाछ । वै.निघ. ।

**स्वादुतिक्तफल:** । पु । ऐरावतीवृक्षे । लेबु

**स्वादुपटोलिका (ली)** । स्त्री । मधुरपटोललतायाम् । मिठा पलता । वै.निघ ।

**स्वादुपत्र:** । पु । स्वादुपटोलिकायाम् । वै निघ. । [रा.नि.व.५ ।

**स्वादुपर्णी** । स्त्री । दुग्धिकायाम् । थिरुई ।

**स्वादुपाकफला** / **स्वादुपाका** } स्त्री । काकमाचिकायाम् । केउयाठुँटी, गुडकाँउ ची । वै.निघ. । रा नि.व.४ । [चि । वै.निघ ।

**स्वादुपार(ले)वत.** । पु । द्वीपान्तरखर्जूरोवृ

**स्वादुपिण्डा** । स्त्री । पिण्डखर्जूरवृक्षे । वै नि.घ. । [रा.नि.व ८ ।

**स्वादुपुष्प: (ष्पी)** । पुं स्त्री । कृष्णकटभीवृक्षे ।

**स्वादुपुष्पिका** । स्त्री । दुग्धिकायाम् । दुधियाँ, थिरुई । वै.निघ. ।

**स्वादुफलम्** । क्ली । बदरीफले । श.र । पुं । धन्वनवृक्षे । धामना गाछ । रा.नि व ९ । स्त्री (ला) । कोशातक्याम् । घोषा । रा.नि.व ७ । कोलिवृक्षे । कुलगाछ । चिका. । खर्जूरीवृक्षे । कदल्याम् । कपिलद्राक्षायाम् । भा. ।

**स्वादुबीज:** । पुं । अश्वत्थवृक्षे । वै.निघ. ।

**स्वादुमज्जा (न्)** । पुं । पर्वतपीलौ । आक्रोट । जटा. । [पेस्तुर गाछ । भा. ।

**स्वादुमस्तका** । स्त्री । खर्जूरीवृक्षे । क्षुद्र

**स्वादुमांसी** । स्त्री । काकोल्याम् । काँदुली । रा.नि व ३ । [वै.निघ. ।

**स्वादुमाषा** । स्त्री । माषपर्ण्याम् । माषाणी ।

**स्वादुमूलम्** । क्ली । गर्जरमूले । गाजरमूल । रा.नि.व.७ ।

**स्वादुरसा** । स्त्री । काकोल्याम् । चम. । शूर्वायाम् । वै निघ । आम्रातककले । श.र. । शतावर्याम् । रा.नि व.४ । द्राक्षायाम् । मदिरायाम् । हे.च. ।

**स्वादुल:** । पु । ग्रीष्मसूर्यायाम् । वै निघ. ।

प्रकारौ स्तु श्लेष्मणोभी विगर्हिता ।" भा पू १ भ शा व । "हविकाम् पलालिसुकरीषचितिरिण जा । सर्वा सस्वेदजा शीता कषाया स्वादु शीतला । गुरवक्षतीसारज्वरश्लामयापहा । श्वेता श्वविस्नलीकाप्रवशगोवजसम्भवा । नाति दोषकरा ज्ञेया श्लेष्मणोभी विगर्हिता ।" राज ।

**स्वेदनम्** । क्ली । स्वदे मी । स्वेदनयन्त्रेण रस संस्कारविशेषे । भा ।

**स्वेदनयन्त्रम्** । क्ली । पारदस्वेदनयन्त्रे । दोलायन्त्र । तल्लक्षणम् —"साम्बुस्थालीमुखे वद्धे वस्त्रे स्वेद्यं निधाय च । पिधाय पच्यते यत्र तद्यन्त्रं स्वेदनं स्मृतम् ॥" भा ।

**स्वेदनाश** । पु । वायौ । वै निघ ।

**स्वेदनी** । स्त्री । सुरानिर्माणार्थपात्रविशेषे । भाटी । वै निघ । लौहपात्रविशेषे । तावा । म । [रा नि व १८ ।

**स्वेदमाता (तृ)** । स्त्री । शरीरस्थरसधातौ ।

**स्वेदवाहिस्रोतः** । क्ली । घर्मवाहिनाड्यां । तस्य मूलं मेदः रोमकूपाश्च । च वि ५ ष ।

**स्वेदस्राव** । पु । पित्तजरोगे घाम हओया । निदा । [घर्मनिर्गमे । मा नि ।

**स्वेदाप्रवर्त्तनम्** । क्ली । घर्माधिक्ये । घ

**स्वेदावरोध** । पु । घर्मावरोधे । जठराग्निरवरोधे । मा नि ।

**स्वैरिता** । स्त्री । स्वच्छन्दतायाम् । अम ।

**स्वोरस** । पु । स्वरसे । शिलापिष्टकल्के च श च ।

---

# ह

**हंस** । पु । प्लवजातीयजलचरपक्षिणि । हाँस । म वङ्गकि । गुणा —"हंस हंसकरो वलातिरु चिदो वृष्यो गुरु शीतल " अत्रि २२ष । अस्य मांसगुणा —वृष्यतम तिमिरघ्नश्च । रा नि व १७ । गुरु उष्ण मधुर स्निग्ध स्वरवलवर्णकर वृंहण शुक्रल वातघ्नश्च । सु सू ४६ष । हंसडिम्ब गुणा —"रेत क्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च । मधुराण्यविपाकीनि सद्योवलकराणि च ॥" च सू १७ष घोटकभेदे । शरीरवायुभेदे । मी । पारदे । वनस्पतिभेदे । रौप्य । वै निघ । मन्त्र करणे । विष्णौ । सूर्ये । चिका ।

**हंसक** । पु । राजहंसे । श च ।

**हंसकूट** । पु । ककुदे । कूट । शब्दकल्प ।

**हंसदाहनम्** । क्ली । अगुरुणि । अगुरु । श च ।

**हंसपदम्** । क्ली । कर्षे । २ तो । प भ १ख ।

**हंसप(पा)दी** । स्त्री । हंसपदाकारपत्रलतायाम्, गोधापद्याम् । गोश्रालिया लता । म हंसपादी । क नविलहि । गुणा — "हंसपादी कटूष्णा स्याद्विषभूतविनाशिनी । भाव्यपचारदोषघ्नी द्विव्या च रसायनी ॥" रा नि. व ५ । "हंसपादी गुरु शीता हन्ति रक्तविषव्रणान् । विसर्पदाहातीसारलूताभूताग्निरोहिणी ॥" भा पू १ भ गु व । सु सू ३८ष । रक्तलज्जालुकायाम् । वै निघ ।

**हंसपाकयन्त्रम्** । क्ली । औषधपाकार्थयन्त्रविशेषे । यथा—"खर्परं सिकतापूर्णं कृत्वा तस्योपरि विनिक्षिपेत् । तत् समं खर्परं तत्र शनैर्मृद्वग्निना पचेत् । हंसपाकं समाख्यातं यन्त्रम् ॥" र चि ३ ष । [योगरत्ने । रस चि ३ ष ।

**हंसपाकाग्नि.** । पु । हंसपाकयन्त्रेण पाक

**हंसपाद(क)म्** । क्ली । हिङ्गुले । हला । सिन्दूरे । वै निघ ।

**हंसपादिका** । स्त्री । हंसपाद्याम् । रा नि व ५ । र मा । मण्डूकपर्ण्याम् । पुनदुड़ि, पान कुनी । च सू ४ष । र.सा स । रक्तलज्जालुकायाम् । वै निघ । [रा नि व ५ ।

**हंसमाषा** । स्त्री । माषपर्ण्याम् । माषाणी ।

**हंसयोषिता** । स्त्री । राजहंस्यां । वै निघ ।

**हंसलोमशम्** । क्ली । कासीसे । हिराकस । रा नि व १३ ।

**हंसलोहकम्** । क्ली । पित्तले । वै श ।

**हंसवती** । स्त्री । हंसपद्याम् । जटा. ।

**हसवीजम्** । क्ली । हसडिम्बे । रा.नि.व.१९ । गुणा —"हसवीज परं वृष्य हृद्य वातकोपन । पाके लघुतर भोज्ञ सर्व्वामयविनाशनम् ॥" राज ३५ ।

**हंसाङ्घ्रिः** । स्त्री । हिङ्गुले । रक्तलज्जालुकायां । [वै.निघ ।

**हंसाण्डम्** । क्ली । हंसडिम्बे । हाँसेर डिम्ब गुणा —अतिवृष्यम् अतिहृद्य वातघ्न पाके लघुतर सर्व्वरोगहरञ्च । रा.नि व.१९ । राज ३५ ।

**हंसाभिमुख्यम्** । क्ली । रौप्यधातौ । रा.नि. व १३ । ह.च. ।

**हंसाह्वया** । स्त्री । हसपाद्यां । गोहालिया । सु चि.१८च । च.द.यक्ष्म चि.अमृताद्यतैले ।

**हंसिका (सी)** । स्त्री । हंसपद्याम् । श र । सुवर्णपर्ण्याम् । वै.निघ. । वराटकभेदे । रा.नि व १३ ।

**हंसिरः** । पु । मूषिकभेदे । तद्दष्टे "हंसिरेणा प्रविदेय लूताक्षीमाघवर्द्धय ।" सु.कल्प.६च ।

**हंसोदकम्** । क्ली । अगूदके । च.सू १६च. । See अगूदकम् ।

**हञ्जिः** । स्त्री । क्षुधायां । जटा. । [भा. ।

**हञ्जिका** । स्त्री । भार्ग्याम् । वामनहाटी ।

**हञ्जी** । स्त्री । जिह्निकायाम् । वै.निघ. ।

**हटत्वम्** । क्ली । शैवाले । सु.सू.४५च. ।

**हट(ठ)पर्णि (र्णी)** । क्ली, स्त्री । शैवाले । श.र. । त्रिका. ।

**हट्टविलासिनी** । स्त्री । नखीनामगन्धद्रव्य विशेषे । अम. । हरिद्रायां । भा. ।

**हठः** । पु । शैवाले, जलकुम्भिकायाम् । पाना । सु.चि.११च. ।

**हठालुः** । स्त्री । कुम्भिकायां । पाना । श.च. ।

**हठी** । स्त्री । वारिपर्ण्याम् । पाना । धरणिः ।

**हड्डम्** । क्ली । अस्थनि । हाड़ । श च. ।

**हड्डजम्** । क्ली । मज्जायाम् । श.च ।

**हण्डिका (ण्डी)** । स्त्री । पात्रविशेषे । हाँड़ि । शब्दकल्प ।

**हण्डिकासुत** । पुं । क्षुद्रहण्डिकायां । छोटि हाँडि । त्रिका. ।

**हतचूर्णकः** । पु । मौसलतायाम् । कश्चित् ।

**हताधिमन्थ.** । पु । सर्व्वाक्षिगतरोगे । लक्ष र्ण —"उपेक्षणादपि यथाधिमन्थो वातात्मक. सा दयति प्रसह्य । रुजाभिरुग्राभिरसाध्य एष हता धिमन्थ .... ॥" मा.नि ।

**हनु.** । पु । व्याधौ । शार्ङ्गे । उणा. ।

**हदनम्** । क्ली । विष्ठात्यागे । हागा । व्याक. ।

**हनील.** । पुं । केतक्यां । र.मा. ।

**हनुः (नू.)** । स्त्री । हट्टविलासिन्यां । हरिद्रा। अ टी.भ । रोगे । अस्त्रे । मृत्यौ । जटा. । पुं । नखीनामगन्धद्रव्ये । रा.नि.व ११ ।

**हनुग्रह.** । पु । तन्नामवातव्याधौ । निदानादि —"जिह्वानिर्ल्लेखनाच्छुष्कभक्षणादभिघाततः । कुपितो हनुमूलस्थ स्रसयित्वानिलो हनु । करोति विवृतास्यत्वमथवा संवृतास्यताम् । हनुग्रह स तेन स्यात् कृच्छ्राच्चर्व्वणभाषणम् ॥" मा.नि । अयस्य वातव्याधौ अत्र हनू स्तब्धौ निश्चलौ लालास्रा वय । स द.४५च ।

**हनुमूलसन्धनास्थि** । क्ली । हन्वस्थिमूल योर्वन्धनभूतयोरस्थ्नो । च.शा.७च. ।

**हनुमोघः** । पु । दन्तगतमुखरोगभेदे । नि दान यथा —"वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसह त । हनुमोघ इति ज्ञेयो व्याधिरर्दितलक्षण ।" सु नि १६च ।

**हप्र:** । त्रि । तलपुरीषोत्सर्गे । अम. ।

**हन्वस्थि** । क्ली । हनुदेशास्थनि । चोयालेर हाड़ । च शा ७च. ।

**हपुषा** । स्त्री । वनिद्रव्यविशेषे । सा च सती चातलवहोर्द्धकलदर्षा । हवुषफल इति ख्याता । हि हाउवेर । See हवुषा ।

**हमन्तः** । पु। हस्तत्यागे । हाँदुनाम । वै.निघ.।

**हयः** । पुं । घोटके । अम ।

**हयकातरा (रिका)** । स्त्री । अश्वकातरिकायां । हि घोड़ाचापरा । रा.नि.व ४ ।

**हयगन्धम्** । क्ली । काचलवणे । रा.नि.व.६ ।

**हयगन्धा (न्धिका)** । स्त्री । अश्वगन्धायाम् र मा । च द द्रव्याधिकारे । वनयमान्यां । रा नि व ६ ।

**हयघ्न** । पु । करवीरवृक्षे । वै निघ ।

**हयघ्नी** । स्त्री । तेजोवत्याम् । तेजवन । वै निघ. । [मायाणी । अम ।

**हयपुच्छिका (च्छी)** । स्त्री । माषपर्ण्याम्

**हयप्रिय** । पु । यवे । इ च । श्वेतकरवीरे । रा नि व १० । स्त्री (या) । अश्वगन्धाया । रा नि व ४। खर्जूर्याम् । रा नि व ११ । यवे । वै निघ ।

**हयभङ्गा** । स्त्री । पिण्डीखर्जूरिकायाम् । वै निघ ।

**हयमार (क)** । पुं । करवीरवृक्षे । रा नि व १० । अम । वै निघ २भ अ मा चि व्रणि सागरदी । अथ व्रणदारण । सु सू ३६ष ।

**हयमारण** । पु । अश्वत्थवृक्षे । श च ।

**हयवरप्रिय** । पु । कदम्बवृक्ष । वै निघ ।

**हयवाहनशङ्कर.** । पु । रक्तकाञ्चनवृक्षे । श च. ।

**हयवैरि** । पु । महिषे । वै निघ ।

**हयशाला** । स्त्री । अश्वशालायां ।

**हया (यी)** । स्त्री । अश्वगन्धायाम् । रा नि व ४ । घोटक्यां । जटा । [च ।

**हयागार** । पु । अश्वशालायाम् । नकुल १०

**हयानन्द** । पु । मुद्गे । मुग । रा नि व १६ ।

**हयायुर्वेद** । पु । अश्ववैद्यकशास्त्रे । तच्च शालिहोत्रनकुलजयदत्तभोजादिकृतम् ।

**हयारि** । पुं । करवीरे । र.मा ।

**हयाशना** । स्त्री । शल्लकीवृक्षे । श च ।

**हयाह्वया (ह्वा)** । स्त्री । अश्वगन्धायाम् । वै. निघ ।

**हयेष्ट.** । पु । यवे । रा नि व १६ ।

**हय्यङ्गवीनम्** । क्ली । सद्योजातघृते । वै निघ ।

**हर** । पुं । गर्दभे । शब्दकल्प ।

**हरज** । पु । पारदे । भैष ध्व.भ । 'हरजस्तु जगलीहम् ।'

**हरणम्** । क्ली । शुक्रे । स्वर्णे । वराटके । उपलब्धे । शब्दकल्प । भुजे । मी ।

**हरतेज** । क्ली । पारदे । रा नि व १३ ।

**हरप्रियः** । पु । धुस्तूरकवृक्षे । वै निघ २भ च यचि नवज्वरराजमृगाङ्के । [वै निघ ।

**हरवल्लभ** । पु । शुक्लधुस्तूरे । श्वेत धुतूरा ।

**हरबीजम्** । क्ली । पारदे । त्रिका ।

**हरहूरा** । स्त्री । हारहूरायाम् । हुडहुड । द्राक्षायां । शब्दकल्प ।

**हराक्षम्** । क्ली । रुद्राक्षे । रा नि व ११ ।

**हरिः** । पु । विष्णौ भेके । अम । शुकपक्षिणि । टिया पाखी । सिंहे । रा नि व १८।१९ । मर्कटे । अश्वे । त्रिका । वह्नौ । मण्डू । मृग । वै. निघ । सर्पे । हरी मयूरे कोकिले । श च । त्रि । हरिद्वर्णे । इ च ।

**हरिकान्त** । पु । घोटके । त्रिका । स्त्री (न्ता) । विष्णुक्रान्तायाम् । काल अपराजिता । रा नि व ५ ।

**हरिगन्ध** । पु । कुङ्कुमागुरुचन्दने । वै निघ ।

**हरिग्रह** । पु । अश्वस्य ग्रहविशेषे । लक्षणं —"कम्पते पूर्वकायस्तु निश्चलो यस्य पश्चिमः । पश्चाद्गात्री सकम्पश्च खिद्यते हरिपीडितः ॥' ज द ५०ष ।

**हरिचन्दनम्** । क्ली, पु । कोङ्कणदेशप्रसिद्धे सप्तविधचन्दनान्यतमे चन्दनविशेषे । भारतचन्दन । गुणा —तिक्त हिम पित्तादोषघ्नम रक्तचन्दनवच्छ्रमादिहरञ्च । रा नि व १२ । क्ली । कुङ्कुमे । भै । रक्तचन्दने । रा नि व १२ । पद्मकेसरे । ज्योत्स्ना । [गाछ । वै निघ. ।

**हरिजीवकः** । पु । चम्पकवृक्षे । छोंगाछ

**हरिणः** । पु । मृगे, शाम्बरभेदे । तत्र हरिणः । पृष । गुणा—"मधुरो मधुर पाके दोषघ्नोऽनलदीपन । शीतलो बद्धविण्मूत्र सुगन्धिर्हरिणो लघु ।" "एणकृष्णम उच्यते ।" सु सू. ४६ष । तत्र गुणा —"एण कषायो मधुर

पित्तास्रकफनाशनः।" राज.३५। "एणस मांसं लघुशीतञ्च त्रिदोषहृत् षड्रसञ्च रुच्यम्। कुरङ्ग मांसं मधुरञ्च वदत् कफापहं पित्तहरं मरुद्गुत्॥" रा.नि.व.१७। [द्रव्ये। नद्यौ। श.च।

**हरिणाक्षी**। स्त्री। हरिनिलामिनीनामगन्ध

**हरिणी**। स्त्री। मृग्याम्। अम.। मञ्जिष्ठायाम्। रा.नि.व.६। स्वर्णयूथिकायाम्। स्वर्णयूँइ। रा.नि.व.१०। विजयायाम्। सिद्धि। श्वेतयूथिकायाम्। श्वेत यूँई। वै.निघ.।

**हरितम्**। क्ली। स्थौणेयके। गाँठियाला। रा.नि.व.१२। कालिङ्गे। तरमुज। वै.निघ।

**हरितः**। पुं। मत्स्यानकरौ। रा.नि.व.८। यवे। प.मु। नीलदूर्व्वायाम्। वै.निघ.। सिंहे। शब्दकल्पः। सविषमण्डूके। विषयुक्तब्याङ्। सु.।

**हरितकम्**। क्ली। शाके। आर्द्रकादौ। अम.। "अन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः।" च.सू.८अ.। [ना। मद.व७।

**हरितच्छदः**। पुं। श्वेतशिग्रौ। श्वेत सजि

**हरितनेत्रः**। पुं। उलूके। पेँचा। त्रिका.।

**हरितपत्रिका**। स्त्री। पाठ्याम्। मण्डूकपर्ण्याम्। सुगन्धशाकविशेष, कर्पूरशाक। रा.नि.व.१०।

**हरितयवः**। पुं। नियूकयवे। वै.निघ.।

**हरितलता**। स्त्री। पाचीलतायाम्। वै.निघ.।

**हरितशाकः**। पुं। शिग्रुशाके। सजिनान शाक। रा.नि.व.७। [विशेष। रा.नि.व.१०।

**हरितचैत्रा**। स्त्री। मण्डूकपर्ण्याम्। सुगन्धशाक

**हरिता**। स्त्री। दूर्व्वायाम्। मे.। जयन्त्याम्। जयन्ती गाछ। रा.नि.व.४। हरिद्रायाम्। रा.नि.व.६। कपिलद्राक्षायाम्। नीलदूर्व्वायाम्। रा.नि.व.८। पाठ्याम्। कर्पूरशाक। रा.नि.व.१०। माक्षीकपत्रे। त्रिर्शीशाक। वै.निघ.।

**हरिताल(क)म्**। क्ली। पीतवर्णखनिजोपविषभेदे। हरिताल। प.मु। तत्र पत्रपिण्डभेदेन द्विविधम्, तयोराद्यं श्रेष्ठम्। गुणाः—"तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम्। स्वर्णवर्णं गुरु स्निग्धं सपत्रञ्चाभ्रपत्रवत्। पत्राख्यं तालकं विद्यात् गुणाढ्यं तद्रसायनम्॥ निष्पत्रं पिण्डसदृशं स्वल्पसत्वं तथा गुरु। स्त्रीपुष्पहारकं स्वल्पगुणं तत्पिण्डतालकम्। हरिताल कटु स्निग्धं कषायोष्णं हरेद्विषम् कण्डूकुष्ठास्यरोगास्रकफपित्तकचव्रणान्॥" भा.पू.१भ.धा.व.। तच्छोधनादि यथा—"तालकं पोट्टलीं बद्ध्वा सचूर्णं काञ्जिके क्षिपेत्। दोलायन्त्रेण यामैकं ततः कुष्माण्डजे रसे। तिलतैले पचेद्यामं यामञ्च त्रैफले जले॥ दोलायन्त्रे चतुर्यामं भस्मीभूतं स दोषकृत्। तथा लाक्षारसजीतिला शिग्रुटङ्कणं लवणं गुडम्। तालकार्द्धेन संमिश्य छिद्रमूषां निरोधयेत्। पुटेत् पातालयन्त्रेण सत्वं पतति निश्चयम्॥" रस.चि.७अ.।

**हरितालः**। पुं। स्वनामख्यातपक्षिविशेषे। इटेला घुघु। ह्रि हरियाल। गुणाः—"हरितालोऽल्पविटकः स्यात् कषायो विशदो लघुः। रक्तपित्तप्रशमनस्तृष्णाघ्नो वातकोपनः॥" राज.१प.। दूर्व्वायाम्। वै.निघ.।

**हरितालिका (ली)**। स्त्री। दूर्व्वायाम्। त्रिका.। मे.। खड्गलतायाम्। विश्व.।

**हरिताश्म (न्)**। क्ली। तुत्थके। तूँते। रा.नि.व.१३।

**हरिताश्वः**। पुं। चक्षुः दुष्टस्थभेदे। तद्भोते अकस्मात् चक्षुषी रक्ता विन्दवो भवन्ति। वातदोषेण जायते। अ.ह.५०अ.।

**हरित्**। स्त्री। हरिद्रायाम्। रा.नि.व.६। पुं, क्ली। हरौ। मे.। पुं। सूर्ये। सूर्य। है.च.। त्रि। शाकवर्णे।

**हरित्कन्दः**। स्त्री। कन्दविशेषे। वै.निघ।

**हरित्पर्णम्**। क्ली। मूलके। मूला। प.मु.।

**हरिद(द्र)र्भः**। पुं। हरिदर्भतृणे, मरपत्रके। श्वेत दूर्वा। रा.नि.व.८।

**हरिदश्वः**। पुं। सूर्ये। अर्कवृक्षे। आकन्द गाछ। अम.। [See कुशः।

**हरिद्गर्भः**। पुं। कुशभेदे। श्वेत दूर्व। भा.।

**हरिद्रकः**। पुं। हरिद्रावृक्षे। वै.निघ.।

**हरिद्रवः**। पुं। नागकेशरचूर्णे। त्रिका.।

**हरिद्रा (द्री)**। स्त्री। (Curcuma longa) स्वनामख्यातकन्दविशेषे। हलुद। हिं हर्दी,

हलदी। मं हलदि। कं अरसिन। ते पसुपु। द्रा. गुर्ज. हलद। गुणाः—कफपित्तास्रशोथकण्डू व्रणापहा। राज.। कटुतिक्तोष्णा कफवातास्रकुष्ठघ्नी मेहकण्डूव्रणघ्नी वर्णकरी च। रा.नि.व.६। च.द.कफज्व.चि.। हरिद्रा चतुर्धा हरिद्रा कर्पूरहरिद्रा वनहरिद्रा दारुहरिद्रा चेति। विशेषा. पर्यायैः ज्ञेयाः। तच्छुद्धिः वचाशब्दे ज्ञेया। "हरिद्रा क्रियते स्थूला छेदे या कुङ्कुमच्छविः।" भैष.। [घुघु। श.च.।

**हरिद्राङ्गः** । पुं। हरितालपक्षिणि। হলদে

**हरिद्रादिवर्गः** । पु। हरिद्रादारुहरिद्राय ष्याह्वकलसीकुटजोद्भवद्रव्येषु। गुणाः—आमातीसारघ्न मेद.कफाढ्यवातस्तन्यदोषघ्नश्च। वा.सू.१५ अ.।

**हरिद्राद्वयम्** । क्ली। हरिद्रादारुहरिद्रयोः। मिश्रा एका, पचम्पचासंज्ञान्या। अरुणः। वा.सू. १५अ.हरिद्रादि.। "हरिद्राद्वयपथ्याम् ·····।"

**हरिद्रापञ्चकम्** । क्ली। हरिद्रामहरिद्रादारुहरिद्रामटीविकङ्कतेषु। वै.निघ.।

**हरिद्रापचकण्टका** । स्त्री। दार्व्याम्। दारुहरिद्रा। वै निघ.।

**हरिद्राभः** । पुं। पीतशालवृक्षे। পেয়াশাল। कर्पूरे। श.च.। त्रि। पीतवर्णे।

**हरिद्रामेहः** । पुं। पित्तजन्यप्रमेहभेदे। यत्र रोगी सदाहं हरिद्रावर्णं मेहति। सु.नि.६अ.।

**हरिद्रुः** । स्त्री। दारुहरिद्रायां। मारुहरिद्रा। मं हलदिवा। कं विलिसु। गुणाः—शीतलः तिक्तः महत्त्वः वान्तिपित्तघ्नः देहकान्तिकरः व स्य. नानात्वग्दोषघ्नश्च। रा.नि.व ८। अम.। सा यथा—देव काम्बोयकः शौकस्तथा कालीयकोऽपि च। पीतद्रुश्च हरिद्रुश्च पीतदारु कपीतकं। दार्वी निशागुणा किन्तु नेत्रकर्णास्यरोगनुत्।" भा.।

**हरिनामा (न्)** । पुं। मुद्गे। মুগ। त्रिका।

**हरिनेत्रम्** । क्ली। श्वेतपद्मे। रा.नि.व.१०। पुं। पेचके। त्रिका.।

**हरिन्मणिः** । पुं। मरकतमणौ। पान्ना इति ख्यात। रा.नि.व १३।

**हरिन्मुद्गः** । पुं। हरिमुद्गे। হাসিমুগ। रा. नि.व.१६। [कै। हे च.।

**हरिपर्णम्** । क्ली। कृष्णचन्दने। प.मु.। मूल-

**हरिप्रियम्** । क्ली। उशीरनामगन्धद्रव्ये। गन्धवेणा। रा.नि.व १२। कृष्णचन्दने। কালিয়া কাঠ। श.च.। पुं। श्यामाकधान्ये। শ্যামাধান। प.मु.। कदम्बवृक्षे। र.मा। पीतभृङ्गराजे। পীত ভীমরাজ। रा.नि.व.४। See मार्कवः। विष्णुकन्दे। रा नि.व.७। करवीरवृक्षे। बन्धुजीववृक्षे। बाकुली। रा नि.व.१०। शङ्खे। शौख्। रा.नि व.१८।

**हरिप्रिया** । स्त्री। तुलसीवृक्षे। रा नि.व.१०। खर्जूरीवृक्षे। খেজুর গাছ। रा.नि.व ११।

**हरिवालुकम्** । क्ली। एलवालुके। এলবালুক। प.मु.। रा.नि.व.४। [श.च.।

**हरिभद्रम्** । क्ली। एलवालुके। এলবালুক।

**हरिभद्रकम्** } क्ली। कुष्ठौषधौ। কুড়। वै.
**हरिभव्यकम्** } निघ.।

**हरिमन्थः** । पुं। अग्निमन्थे। গণিরি। प मु.। र.सा.स.। चणके। ছোলা গাছ। रा.नि.व १६।

**हरिमन्थकः (जः)** । पुं। चणके। च.टी. भ। अम.। कृष्णमुद्गे। কাল মুগ। हे.च.।

**हरिमुद्गः** । पुं। (Phaseolus mungo.) मुद्गविशेषे। ঘাসিমুগ, হাসিমুগ। हिं हरिमुङ्। मं हरियेमुंग। कं हसरुहेसरु। गुणाः—कषायः मधुरः पित्तकफघ्नः रक्तमूत्ररोगघ्नः शीतलः लघुः दीपनश्च। रा.नि.व.१६।

**हरिमूला** । स्त्री। शालपर्ण्याम्। वै निघ.।

**हरिलोचनः** । पुं। कर्कटे। त्रिका.। पेचके। शब्दकल्प.।

**हरिवल्लभः** । पुं। मुचकुन्दवृक्षे। মুচকুন্দ গাছ। स्त्री (भा)। जयापुष्पवृक्षे। रा.नि.व १० ११। तुलसीवृक्षे। रा.नि.व.१०।

**हरिवासः** । पुं। पीतभृङ्गराजे। পীতভৃঙ্গ রাজ। रा नि.व.४। See मार्कवः। अश्वत्थवृक्षे। मद.व.५। °।

**हरियोजम्** । क्ली। हरिताले। जटा.।

**हर्षकीर्त्तिः** । पुं । वैद्यकसारग्रन्थकारे ।

**हर्षणम्** । क्ली । शुक्रधातौ । रा.नि व.१८ ।
पु । नेत्ररोगभेदे । श र. ।

**हर्ष(र्षि)णी** । स्त्री । कपिकच्छ्वाम् । आला-
कुशी । वै निघ. । भद्राया । सिद्धि । शब्दकल्प. ।

**हर्षणीक्रिया** । स्त्री । सुरापानजन्यहर्षोत्पाद
कक्रियाम् । "नाविचीभ्य मनो मद्य शरीरमविह
त्य वा । कुर्यान्मदात्ययं तस्मादिष्यते हर्षणीक्रि
या ।" वा.चि.७अ. । [त्रि । हर्षजनके ।

**हर्षयित्नुः** । पुं । पुत्रे । क्ली । स्वर्णे । मे. ।

**हर्षसम्भवम्** । क्ली । शुक्रे । वै.निघ. ।

**हलच्छद:** । पुं । कर्णशिर्षी । काल मखिना ।
वै.निघ । [रा.नि.व.६ ।

**हलदी (द्दी) (का)** । स्त्री । हरिद्रायाम् ।

**हलराचम्** । क्ली । बाहुल्यक्षुपे । रा.नि.व.४ ।

**हललोमशम्** । क्ली । काशीसे । हिराकस् ।
रा.नि.व.१३ ।

**हला** । स्त्री । मद्ये । जले । अनेकार्थकोषः ।
लाङ्गलकीवृक्षे । विषनाशनिघ्न । भैष.कुष्ठ.चि.
षड्बिन्दुतैले ।

**हलाहलम्** । क्ली, पुं । विषभेदे । प.मु. ।
ब्रह्मसर्पे । ब्याकनाडे । चिका. ।

**हलिनक:** । पुं । कैतकवृक्षे । राज ६प ।

**हलिनी** । स्त्री । लाङ्गलिकायाम् । विषनाश
निघ्न । प मु. । [छ । प.मु. ।

**हलिनीप्रियः** । पुं । कदम्बवृक्षे । मदन ग-

**हलिप्रियः** । पुं । कदम्बवृक्षे । धम । [१४ ।

**हलिप्रिया** । स्त्री । मदिरायाम् । रा नि.व.

**हली** । स्त्री । कलिकारीक्षुपे । विषनाशनिघ्न ।
रा.नि व.७ । भैष.कर्णरो.चि. । मधुमाभाषे ।
रा.नि व.१४ । [च । कैतकवृक्षे । प मु. ।

**हलीन:** । पुं । शाकवृक्षे । सेगुन गाछ । श.

**हलीमक:** । पुं । पाण्डुरोगभेदे । मन्द मलम
—"यदा तु पाण्डोर्वर्णं स्याद्धरित ... नेत्र. ।
... म्रि लिम अतुष्म । ...

**हल्लकम्** । क्ली । रक्तकह्लारे । हेलाफुल । धम ।

**हवि:** । पुं । अग्निमन्थवृक्षे । अगगड । र.मा. ।

**हवि: (स्)** । क्ली । घृते । रा नि व.१५ । अन्ने ।
जले । शब्दकल्प. । [वै निघ. ।

**हविमण्डला** । स्त्री । रक्तलज्जालुकायाम् ।

**हविर्गन्धा** । स्त्री । शमीवृक्षे । रा.नि.व.८ ।

**हविर्मन्थ:** । पुं । गणिकारिकायाम् । र.मा. ।

**हविष्यम्** । क्ली । घृते । चिका. ।

**हवुषा** । स्त्री । गुच्छासमक्षुपे । म.नित्यानन्द
मे । स्वनामख्यातफले । हवुष फल । हि हौवेर ।
क हौवेर । म धरडुफले । एतत् फल द्विवि-
धम् । तत्रैक मत्स्यसदृश विसगन्धञ्च, द्वितीयम्
अश्वत्थफलसदृश मत्स्यगन्धञ्च । उभयविधमेव फल
गुणैस्तुल्य केवलमाकारतो भिन्नम् । भा । गुणाः
—कटुतिक्तोष्णा गुरु श्लेष्मवातघ्नी प्रदरोदरवि-
ड्बन्धशूलगुल्मार्शोघ्नी च । रा.नि.व.४ ।

**हसन्तिका** । स्त्री । वह्निशकटिकायां । वा.
चि.१४. ।

**हसन्ती** । स्त्री । मल्लिकायाम् । मे. ।

**हस्त:** । पु । करे । शड । रा.नि व.१८ ।

**हस्तज्योड़ि: (ड़ी)** । पुं । स्वनामख्यातम-
हाकन्दशाके । करजोडा । हिं मं हातजोड़ी ।
गुणा —रसवन्धकृत् वश्यकृत । रा.नि.व.७ ।

**हस्तपर्णः** । पुं । रक्तैरण्डे । वै.निघ. ।

**हस्तपुच्छम्** । क्ली । करपृष्ठे । हातेर पो
छा । चिका । [पाणौ । रा नि व.१८ ।

**हस्तमानम्** । क्ली चामध्याङ्गुलिकूर्परं विस्तृत

**हस्तसन्धि:** । क्ली । मणिबन्धे । वै.निघ. ।

**हस्ताङ्गुलि:** । पुं । कराङ्गुली । हातेर
आङुल । मुग्ध. ।

**हस्ताञ्जन:** । पुं । दर्वीकरवृक्षे । वै.निघ. ।

**हस्ताभरण:** । पुं । सर्पविशेषे । सु कल्प.४
अ. । See सर्प । [हस्तकम्प ।

**हस्तामलकम्** । क्ली । करस्थामलकोपमे ।

**हस्ति** । पुं । कदलीवृक्षे । गजे । अजमोदा-या । वै निघ. ।

**हस्तिकन्दः** । पुं । कौङ्कणे प्रसिद्धे स्वनाम ख्यातमहाकन्दशाके । हिंसा वड मूला । म ह स्तिकन्द । क मल्लिकर्कसियगड्डे । गुणा —कटु त्वं कफवातरोगघ्नः लूतीविषहर. महाकुष्ठक्रिमिप्रशम । रा.नि.व.७ । "हस्तिकन्दो गुरुर्ग्राही शुक्रवृद्धिप्रदो मतः ।" अत्रि.१६अ. ।

**हस्तिकरञ्जः (कः)** । पुं । महाकरञ्जवृक्षे । डहर करञ्ज । रा.नि व ६ ।

**हस्तिकर्णः (पलाशः)** । पुं । एरण्डवृक्षे । वै. । गजकर्णाकारैकपत्रे पलाशभेदे । भूपलाश इति लोके । हस्तिकर्ण पलाश । तें विहामुद्दुचेट्टु । सु.म २८अ. कफशोधने । गुणा. —"हस्तिकर्णं परं श्रेष्ठो मेधायुर्बलवर्द्धन" राज ६प.। रक्तैरण्डे । वै.निघ.चक्री.चि.विलम्बिकाधीगे । हस्तिकन्दे । हिंसा मूला । रा नि व.७ । एतद्बीजतैल मूलकतैलवत् । See विभीतकतैलम् ।

**हस्तिकर्णकः** । पुं । किंशुकवृक्षभेदे । हस्तिकर्णपलाश । श.र. ।

**हस्तिकर्णदलः** । पु । हस्तिकर्णपलाशे । हस्तिकर्णपलाश । प.मु. ।

**हस्तिकर्णी** । स्त्री । काष्ठालुके । वै.निघ.२भ. पाण्डु चि. । वा.व्या.चि.षडशीतिगुग्गुलौ ।

**हस्तिकक्ष्यः** । पुं । सिंहे । व्याघ्रे । शब्दकल्प. । कणभकीटभेदे । भा.नि. ।

**हस्तिकारवी** । स्त्री । अजमोदायां । वनयमानी । रा नि.व ६ ।

**हस्तिकृष्णा** । स्त्री । गजपिप्पल्यां । वै.निघ. ।

**हस्तिकोलः** । पुं । राजबदरे । वै निघ. ।

**हस्तिकोलिः (ली)** । पुं,स्त्री । बदरीभेदे । डामाहुन । जामकोलीति पूर्व्वबङ्गे । प मु. । मद.व.६ । [धुन्दुल । वै.निघ. ।

**हस्तिकोशातकी** । स्त्री । महाकोशातक्यां ।

**हस्तिघोषा** । स्त्री । महाकोशातकीनामफलशाकविशेष । धुन्दुल. हिं मेनुषा । म पारिसदोड़का । क बरहीरे । गुणा —स्निग्धा मधुरा आध्मानवातकृत् श्रेष्ठा क्रिमिकारी अपरीपथी च । रा नि व.७ । रक्तपित्तानिलघ्नी च । भा.पू १भ. शा.व. । [र मा. ।

**हस्तिघोषातकी** । स्त्री । हस्तिघोषायाम् ।

**हस्तिचारिणी** । स्त्री । महाकरञ्जे । डहरकरञ्ज । रा नि.व.६ ।

**हस्तिदन्त (क)म्** । क्ली । मूलके । मूला । रा.नि व.७ । श.मा. । [श.र. ।

**हस्तिदन्तः** । पुं । मूलके । मूला । करिदन्ते ।

**हस्तिदन्तफला** । स्त्री । एर्व्वारुके । गोमुक । रा नि.व.७ ।

**हस्तिदन्ती** । स्त्री । महेन्द्रवारुण्याम् । कुम्भदन्त्याम् । वै.निघ । बहरफलगोडुम्बायाम्, नागदन्त्याम् । वड गोमुक । च.मू.१च. ।

**हस्तिनी** । स्त्री । महेन्द्रवारुण्याम् । बड़ राखालशशा । महाकरञ्जे । डहरकरञ्ज । वै निघ.। करिण्याम् । हातिनी । तद्दुग्धगुणाः —"हस्तिन्या मधुरं श्रेष्ठ कषायानुरस गुरु । स्निग्धं स्थैर्यकर शीत चक्षुष्य बलवर्द्धनम् ॥" सु.मू.४५अ. ।

**हस्तिनीघृतम्** । क्ली । हस्तिनीनवनीतजघृते । हातिनीर दुग्धेर घि । गुणाः—कफपित्तविषक्रिमिघ्न कषाय लघु विश्लेषि तिक्तम् अग्निकरञ्च । रा.नि.व.१५ ।

**हस्तिनीदधि** । क्ली । करिणीदुग्धजातदधनि । हातिनीर दुग्धेर दै । म हातिनीदहि । क आनेयमोसरु । गुणा.—कषायलघूष्ण मन्दिर्लघु रुचिदं कान्तिदं बलामरोगघ्न वीर्यवर्द्धनं बलदञ्च । रा.नि व.१५ ।

**हस्तिनीदुग्धम्** । क्ली । हस्तिनीजातक्षीरे । हातिनीर दुध । म हातिनीचें दुध । क आनेय हालु । गुणा —मधुरं श्रेष्ठ गुरु कषायं स्निग्धं स्थैर्यकर शीतलं चक्षुष्य बलवर्द्धनम् । रा.नि.व. १५ ।

**हस्तिनीनवनीतम्** । क्ली । हस्तिनीदुग्धमन्थनजनवनीते । हातिनीर दुग्धेर माखन । गुणा —कषायं शीतलं लघु तिक्त विश्लेषि क्रिमिघ्नं कफपित्तघ्नञ्च । रा.नि.व.१५ ।

**हस्तिपत्र.** । पु । हस्तिकन्दे । रा नि.व.७ ।

**हस्तिपर्ण** । पु । महाकोषातक्याम् । धुन्दुल । भा पू १भ शा व । [क्याम् । रा नि व ७ ।

**हस्तिपर्णिका (नी)** । स्त्री । राजकोषात

**हस्तिपर्णी** । स्त्री । मोरटलतायाम् । लता कराड़ । प मु । मूर्व्वायाम् । र मा । ककट्या । काँकुड गाछ । रा नि व २३ ।

**हस्तिपात् (द्)** । पु । किण्डाली । कोण वलोग कचु । प मु ।

**हस्तिपिप्पली** । स्त्री । गजपिप्पल्याम् गज पिपुल । प मु । चविकायाम् । रस र चाङ्गेरी घृते ।

**हस्तिवृषा** । स्त्री । कदलीवृक्षे । भा ।

**हस्तिमगधा** । स्त्री। गजपिप्पल्यां । वै निघ ।

**हस्तिमद** । पु । गजमदे । दाक्षिणात्ये स्व नाम्ना प्रसिद्धे औषधिविशेषे । गुणा —स्निग्धस्ति क्त अपथ्यारघ्न वीर्य विषघ्न कण्डूकुष्ठव्रणदद्रु विसर्पघ्न । रा नि व ६ ।

**हस्तिमयूरक (का)** । पु स्त्री । अजमो दायां । मद व २ । इन्द्रवारुण्यां । वै निघ २भ ज्व चि ।

**हस्तिमूत्रम्** । क्ली । करिमूत्र । गुणा —ति क्तोष्णं लवणं वातघ्न भूतघ्नं कषायं शूलघ्न हिक्का श्वासघ्न । रा नि व १५ । "गजमूत्रप्रलिप्त क कण्ठूदुविसर्पनुत् ।" चचि ८ ।

**हस्तिमेह** । पु । वातजप्रमेहे । तत्र रोगी मत्तमातङ्गवदजस्रमेह मेहति । सु नि ६ ।

• **हस्तिरुचि** । पु । वैद्यकप्रभनामग्रन्थकारे ।

**हस्तिरोहणक** । पु । महाकरञ्ज । रा नि व ८ ।

**हस्तिसाधक** । पु लोध्रवृक्षे । रा नि व ६।

**हस्तिवारुणी** । स्त्री । महाकरञ्ज । वै निघ ।

**हस्तिविषाणक (णी)** । पु स्त्री । कद लीवृक्षे । रा नि व ११।११ ।

**हस्तिशुण्डा (ण्डिका, ण्डी)** । स्त्री । स्व नामख्यातमहाक्षुपे । दाक्षि ... । ... । गुणा —कटुका ...

च । रा नि व ५ । सु चि ११ अ । भूम्यामलक्यां । र सा स । इन्द्रवारुणीलतायाम् । बाथालशशा । गजशुण्डायाम् । वै निघ ।

**हस्तिश्यामक** । पु क्षुद्रधान्यविशेषे । हा तिया श्यामा । गुणा —श्यामाकवत् । च सू २७ अ । धातुशोषण पित्तश्लेष्मघ्न वायुवर्द्धन रूक्षश्च । राज ।

**हस्ती (स्तिन्)** । पु । स्वनामख्याते विलम्बितजा तीयकुलचरपशुविशेषे । हाती । हि हाथी । त स्य चतस्रो जातय यथा— भद्रो मन्द्रो मृगो मिश्रश्चतस्रो गजजातय ।" इति च । राजनिघण्टुनु विविधमाह भद्रमन्द(न्द्र)मृगभेदेन । तन्मांसगुणा —गुरु स्निग्ध वातल श्लेष्मकर पुष्टिकर दुर्जरम् अग्निमान्द्यकरञ्च । रा नि व १७।१९ । स्वादस्त लवणस्तेषा गज श्लेष्मानिलापह ।" सु सू ४६ । स्त्री । कदल्यां । अजमोदायाम् । रा नि व २३ ।

**हस्त्यायुर्वेद** । पु । पालकाप्यगजचिकित्सा शास्त्रे ।

**हहलम्** । क्ली । हलाहलविषे । श च ।

**हाङ्गर** । पु । मत्स्ये, जलजन्तुविशेषे । हाङ्गर । श च । [भूरफली अम ।

**हाटकम्** । क्ली । सुवर्णे । रा नि व १३ । धु

**हाटकमाक्षिकम्** । क्ली । स्वर्णमाक्षिके । वै निघ ।

**हातव्य** । पु । हनुभवदन्ते । वै निघ ।

**हानु (नू)** । पु । दन्ते । त्रिका ।

**हापुत्रिका (त्री)** । स्त्री । Wagtail स्व नामख्यातपक्षिणि । खञ्जनिकायां । त्रिका ।

**हाफिका** । स्त्री । जृम्भायाम् । हाइ । हारा ।

**हाफु** । पु । पक्षिविशेषे । ... । प मु ।

**हायन (क)** । पु । व्रीहिधान्यविशेषे । भा पू १भ धा व । गुणा —... । च सू २७ ।

**हारव** । पु । ...वृक्षे । ... । प मु ।

**हारहा(ह)रा** । स्त्री । कपिलद्राक्षायाम् । रा नि व ११ । गुणा । ... चि । "...।

